९५–१०६ जङ्गलपते राजानं प्रति विज्ञप्तिः ।
१०७ कुमारपालस्य स्वपनम् ।

## सप्तमः सर्गः

स्वापान्ते राज्ञः परमार्थचिन्ता १–८४

१ चिन्ताप्रस्तावः ।
२ जीवस्य कुकर्मभिः संसारे भ्रमणम् ।
३ मन्मथमोहाभावे सिद्धक्षेत्रेषु संचरणम् ।
४ मदनेनाभ्रमितस्य धन्यत्वम् ।
५ स्त्रीभिरभ्रान्तचित्तस्य प्रशमराज्यम् ।
६ त्यक्तयुवतिसङ्गस्य सौख्यादिप्राप्तिः ।
७ विषयाभिलाषिणः प्रशमाभावः ।
८ कामवशगतस्य मिथ्यादिमार्गागमनम् ।
९ महिलावशगतस्य गम्यागम्येति विवेकाभावः ।
१० स्त्रीरक्तस्यार्यक्षेत्रे व्यर्थमागमनम् ।
११ स्त्रीविरक्तस्य ज्ञानादिप्राप्तिः ।
१२ शान्तचित्तस्य संसारे पुनरागमनाभावः ।
१३ महात्मनां स्त्रीभिः सह रमणाभावः ।
१४ विचक्षणस्य स्त्रीष्वनुरागाभावः ।
१५ स्त्रीणां मायादिपूर्णत्वम् ।
१६ स्त्रीणामस्थिरप्रेमानुबन्धत्वम् ।
१७ स्त्रीणां धीरधैर्यहन्तृत्वम् ।
१८ स्त्रीसङ्गेन पुरुषस्य सत्त्वादेर्नाशः ।
१९ रमण्यधरपानकर्तुः पाण्डित्यादेर्विफलत्वम् ।
२० स्त्रीणां शरीररम्यत्वादिन्द्रवारुणफलसमत्वेनानुरागाविषयत्वम् ।
२१ तासां कपटपूर्णेष्याननेमूढस्यानुरक्तत्वम् ।
२२ युवतिसक्तानां शीलादिनाशः ।
२३ स्त्रीसङ्गे युक्तायुक्तविचाराभावात्तासां दर्शनानर्हत्वम् ।
२४ स्त्रीविलोकनं त्रिकालज्ञैर्निषिद्धम् ।
२५ स्त्रीपार्श्वस्थस्य गुर्वाज्ञानादरकत्वम् ।
२६ स्त्रिया असचेष्टितं ज्ञात्वापि तत्स्पर्शकर्तुः सोपहासो नमस्कारः ।
२७ स्त्रीस्पर्शस्य पुण्यहानिकरत्वम् ।

२८ स्त्रीणां न्यग्जातीयेष्वपि प्रेमानुबन्धित्वम् ।
२९ तासां परलोकादिनाशकत्वम् ।
३० तासां मुनीनामिव अकाङ्क्षणीयत्वम् ।
३१,३२ स्थूलभद्रमुनेः प्रशंसा ।
३३–३५ वज्रर्षेः ,,
३६ गजसुकुमारस्य ,,
३७ गौतमस्वामिनः ,,
३८ अभयकुमारमुनेः ,,
३९ सुधर्मस्वामिनः ,,
४० जम्बूमुनेः ,,
४१ प्रभवप्रभोः ,,
४२ जिनवचनस्य ,,
४३ गुरुभ्यो लब्धसम्यक्त्वस्य संसारभयाभावः ।
४४ हृदयोल्लसितजिनागमानां प्रशंसा ।
४५ उल्लसितजिनसमयस्य ज्ञानोल्लासः ।
४६ विवेकिनो जिनमतावगाहनम् ।
४७ अवगाहितजिनवचनस्य मोक्षप्राप्तिः ।
४८ भगवद्वचनं गृह्णतः कर्मगणस्य नाशः ।
४९ गृहीतप्रवचनानां मुक्तिः ।
५० गृहीतमतानां गुणप्रशंसा ।
५१ महामुनीनां तपस्याचरणम् ।
५२–५९ अर्हतां वर्णनं नमस्कारश्च ।
६० सिद्धान्प्रति शरणार्थं गमनम् ।
६१ सर्वसिद्धानां नमस्कारः ।
६२ सन्मार्गस्य बोधकानामाचार्याणां ध्यानम् ।
६३ आचार्यान्प्रति ज्ञानप्राप्तये प्रार्थना ।
६४,६५ उपाध्यायप्रशंसा ।
६६,६७ साधुप्रशंसा ।
६८ पञ्चपरमेष्ठिध्यानं निर्देशः ।
६९–८३ श्रुतदेवीप्रशंसा ।
८४ श्रुतदेवीमुद्दिश्य राज्ञो बोधार्पणविषये प्रार्थना ।
८५ श्रुतदेव्यां विधेयमुपदिशतेति प्रार्थना ।
८६–९१ कुमारपालं प्रति श्रुतदेव्याः प्रत्यक्षदर्शनम् ।

२१ विषयत्यागपूर्वकं समाधिलीनचित्तत्वेनावस्थानम् ।
२२ मनःपवनयोर्मिथोवष्टम्भनेन मुक्तिः ।
२३ नाडीपवनसंयोगज्ञाने योगसाधनम् ।
२४ समाधिनिष्ठाना जरामरणार्तिभयाभावः ।
२५ ब्रह्मरन्ध्रे मनोनियोजनं मुक्तेः साधनम् ।
२६ शत्रुमित्रयोः सममावेन दर्शनम् ।
२७ अहिंसाप्रधानो धर्मः क्रियतामित्युपदेशः ।
२८ अहिंसावचनस्य प्रशंसा ।
२९ तपसा जन्मनः साफल्यम् ।
३० सामान्यजनस्य निर्वाणस्वरूपविचाराभावः ।

राजानं प्रति श्रुतदेवीवाक्यम् ३१–३६

३१ संसारकान्तारे मा निपततेति उपदेशस्त्वया सर्वेषां कार्यः ।
३२ सर्वत्र सममावं कुर्वित्यादिः ,,
३३ जीवदया कर्तव्येत्यादिः ,,
३४ महर्षिसेवनं कर्तव्यमित्यादिः ,,
३५ धर्मप्रतिपादकसिद्धान्ते ग्रहं कुर्वित्यादिः ,,
३६ युष्माकं संयमश्चेन्मोक्षो न दूरे इत्यादिः ,,
३७–४२ देव्याः कुमारपालं प्रति परकृतनिन्दासहनाद्युपदेशः ।
४३ स्त्रीवचनेऽनासक्तस्य मोक्षसुखम् ।
४४ सत्यवचनादि निर्वाणस्य कारणम् ।
४५ साधूनां वचनानि गृहीत्वा तपसा कर्मनाशः कर्तव्यः ।
४६ गुरुजनकथितश्रुतार्थधारणेन जीवितसाफल्यम् ।
४७ शिरसा गुरुपादस्पर्शसदुपदेशेन प्रियवचनादि ।
४८ धनलिप्सया विरक्तिकरस्य गुरोस्त्यागः ।
४९ दयाधर्मप्रशमाचरणं कर्मच्छेदनं च ।
५० जिनवचनप्रमाणस्य पुरुषस्य जगज्जन्मकारणादिज्ञानम् ।
५१ मिथ्याधर्माचरणनिषेधः ।
५२ यत्नतोऽपि स्थितेन सम्यक्त्वमनुरागश्च कार्यः ।
५३ इन्द्रियजये क्रोधादिरूपकषायजयः कषायक्षये कर्मनाशश्च ।
५४ कर्माणि तपसा विना दुर्जयानि । तस्य फलं तत्परिज्ञेयम् ।
५५ मोक्षसुखं शाश्वतं देवादीनां सुखं स्वल्पकालम् ।
५६ कर्तृत्वप्रयोजकत्वबुद्धिरहितस्य विवेकोऽपरिमितः ।
५७ मिथ्यादर्शनखण्डकस्य गुरुजनस्य प्रणिपातः कार्यः ।

५८ रागाद्यकलुषितचित्तस्य ब्रह्मपरस्य तस्मिन्नेव भवे निर्वाणप्राप्तिः ।

५९ सतोषामृतेन विना सुखप्राप्तेरभावः ।

६० ज्ञानदर्शनचारित्ररूपरत्नत्रयं विना मुक्तेरभावो भाण्डेन विना क्रेतव्यवस्तुन इव ।

६१ जिनागमालोकनं विना भवहानोपायमोक्षसंप्राप्त्युपाययोरभावः ।

६२ चञ्चला संपत् ध्रुव मरणमिति सर्वस्मिन् वदत्यपि न कस्यापि महामुनिसमागमसाध्यसयमाभाव. ।

६३ मुक्तिसुखस्य साधनानि ।

६४ यत्र कुत्रापि स्थितौ जीवदयाया मुक्तिं प्रति कारणत्वम् ।

६५ तपसा सह सयमाद्यभावे साधुमध्ये गणनाया अभावः ।

६६ धर्महीनादावपि दया कृतवतोनैव सिद्धिः ।

६७ मनसः सुस्थिरत्वकरणे ससारस्थित विषण्ण प्रत्युपदेशः ।

६८ रात्रिभोजनात्पापे पतनं ततः संसारे परिभ्रमणम् ।

६९ तपःपरिपालनौत्सुक्यात्ससारे गमनागमनक्रियाया अभावः ।

७० जीवदयोपशमयोरेव कर्तव्यत्वं नान्यस्य कर्मणः ।

७१ परिग्रहालीकभाषणे परित्यज्य उपशमस्य स्वीकर्तव्यत्वम् ।

७१ शरीरजीवितयोरस्थिरत्वं शात्वाऽशुभभावस्त्याज्यः ।

७४ श्रुतार्थस्य श्रवणे कर्णयो. श्रुतार्थस्य स्थिरीकरणे हृदयस्य च कृतार्थत्वम् ।

७४ यस्य कर्णे जिनागमवचनमात्रमपि प्रविष्ठ तस्य त्वदीयं मदीयमिति ममत्वाभाव. ।

७५ यावज्जीव दमकरणे सिद्धलोकगमनम् ।

७६ भद्रत्वादीना सिद्धिं प्रति प्रशमादीनामुत्तरोत्तरमुच्यमानाना कारणत्वम् ।

७७ क्रोधमानमायाजाललोभानामन्त कृत्वा निवर्तने निदेशः ।

७८ ससारत्यागशिवसौख्यसंवेदनयोरतिनिश्चल मनः कारणम् ।

७९ चित्तादीनामनाकुलत्वादिकरणे निश्चलं ध्यान कारणम् ।

८० यमुनादिनदीजले स्नानेपि शिवशर्मप्राप्त्यभावः ।

८१ मनसि जिनमवतीर्णं कुर्वित्यादेशः ।

८२ दयावतामेव निर्वृतिर्न वेषधारिणाम् ।

८३ इति भाषाविनिमयेन परमतत्त्व कथयित्वा नृपोरसि निजकण्ठमाला स्थापयित्वा मङ्गल चोक्त्वा देवीगमनम् ।


---

## TABLE OF CONTENTS


| | |
|---|---|
| Introduction ... ... ... | v |
| विषयानुक्रमः | xxix |
| कुमारपालचरितम् ... ... ... | १–२९९ |
| प्रथमः सर्गः ... ... ... | १ |
| द्वितीयः सर्गः ... ... ... | ४० |
| तृतीयः सर्गः ... ... ... | ७७ |
| चतुर्थः सर्गः ... ... ... | ११३ |
| पञ्चमः सर्गः ... ... ... | १४२ |
| षष्ठः सर्गः ... ... ... | १८० |
| सप्तमः सर्गः ... ... ... | २२१ |
| अष्टमः सर्गः ... ... ... | २६१ |
| अक्षरानुक्रमविशिष्टा शब्दसूची... ... ... | ३०१ |
| परिशिष्टम् ... ... ... | |
| सिद्धहेमशब्दानुशासनस्याष्टमोऽध्यायः ... ... | ४२५ |
| Notes on the Appendix | 635 |




श्री॰ ॥

ओं नम॰ श्रीजिनेश्वरपादपद्मेभ्य ॥

पुण्याङ्कूराः शिवसुखफलं श्रोतृजन्तून् नु नेतु
तैरग्रेऽस्ताः किमुत लिखितुं मङ्गलान्यष्ट लाजा ।
यस्योह्यन्ते सदसि दशनाभीशवो देशनाया
स श्रीचन्द्रप्रभजिनपति प्रातिभ नस्तनोतु ॥ १ ॥

अधोविहितदुर्गतिं प्रकटदिव्यगोत्रोद्धति
वृतं सुमनसा भरैः प्रियतरामृतोद्यत्फलम् ।
सुराजितशुभश्रियं भुवनसत्तमामोदकं
जिनेश्वरमभिष्टुवे गुरुमभीष्टकल्पद्रुमम् ॥ २ ॥

यत्पार्श्वे याचितुं किं किमपि शशिरवी कुण्डलद्वन्द्वदम्भाद्
भेत्तुं दारिद्र्यवृत्ते स्तुतिमति युगपद् दीप्रचक्रे नु भात ।
सद्वीणापुस्तमुक्ताक्षवलयकमलातुल्यहस्ताब्जलक्ष्मी-
र्वाग्देवी सा सुधाभा मम मनसि सदा स्तात् प्रकृत्य प्रसादम् ॥ ३ ॥

यः प्राकृतव्याकरणं नु शब्दैः साहित्यसर्वस्वमिवार्थभङ्ग्या ।
स द्व्याश्रय॰ काव्यमनल्पबुद्धिज्ञेय कथं मादृश एव गम्य ॥ ४ ॥

अभीष्टकल्पद्रुगुरुप्रसादप्रादुर्भवत्प्रातिभवैभवोहम् ।
स्वान्यावबोधाय तथापि किंचिद् यत्नं विधास्ये विवरीतुमेनम् ॥ ५ ॥

इह हि सदिङ्नागनागपतिकूर्मकुलाचलाचलाभाराङ्गीकारव्यावृत्त-
दोर्दण्डकलिताकर्णाकृष्टकाण्डलितप्रचण्डकोदण्डटङ्काराडम्बरत्रासितदुर्धर-

वैरिवारवलस्य अगणितगुणगणतारतारकद्युतिद्योतितदिङ्मण्डलस्य प्रसरत्कीर्तिचन्द्रिकाधवलितनभस्तलस्य दीनानाथजन्तुजातविघातरक्षणक्षमबलस्य परोपकारकरणवर्णशीलस्य (°व्रत° ?) नानाप्रकारभक्तिप्राग्भारवन्दारुचतु समुद्रवसुधराधिपकोटाकोटिकिरीटकोटिकान्तिपिञ्जरितचरणयुगलस्य चौलुक्यवशमुक्ताफलस्य परमार्हतश्रीकुमारपालभूपालस्य संस्कृतव्याश्रयप्रतिपादितावशेष प्राकृतलक्ष्यै रुचिरं चरित वक्तुकाम साहित्यव्याकरणाद्यनेकशास्त्रनिर्माणाप्रत्नप्रजापति श्रीहेमचन्द्रयतिपति प्राकृतद्व्याश्रय महाकाव्य चकार ॥ अथ द्व्याश्रय इति क शब्दार्थ । उच्यते । द्वयो महाकाव्यलक्षणशब्दलक्षणयोराश्रयो द्व्याश्रय । एव तर्हि सर्वमहाकाव्याना द्व्याश्रयत्वप्रसङ्ग । न हि तत्र क्वापि महाकाव्यलक्षणशब्दलक्षणे न स्त । इति चेत् न । अत्र हि "यथापद्य प्राय" इत्यादि महाकाव्यलक्षणमस्ति । तथा व्याकरणाष्टमाध्यायोक्त-"अथ प्राकृतम्"—इत्यादिसर्वसूत्रानुक्रमन्यस्तमूलोदाहरणव्यावृत्त्युदाहरणप्रस्तावायातमतान्तरोदाहरणप्रतिपादनेन सकल प्राकृतलक्षणमपि। न चैवमन्यत्रेति नातिप्रसङ्ग ॥

---

॥ अर्हं ॥

अह पाईआहिँ भासाहिँ संसयं बहुलमारिसं तं तं ।
अवहरमाणं सिरि-वद्धमाण-सामि नमंसामो ॥ १ ॥

अत्र च साधुसमाचारपरिपालनार्थं निर्विघ्नेन शास्त्रपरिसमाप्त्यर्थमासन्नोपकारित्वादभिमतदैवतस्य निखिलमङ्गलालयस्य श्रीवीरस्वामिनो ग्रन्थकार अभिधेयसबन्धप्रयोजनसूचक नमस्कारमादौ आविश्चकार ॥ १ आदौ अथशब्दो मङ्गलार्थं अनन्तरार्थश्च । यदमर । "मङ्गलानन्तरारम्भप्रश्नकारत्स्न्येष्वथो अथ" इति । अथ सस्कृतव्याश्रयानन्तरं प्राकृतव्याश्रयमहाकाव्य चिकीर्षवो वय श्रीवर्धमानस्वामिन नमस्याम । भगवति गर्भस्थिते ज्ञातकुल हास्तिकाश्वीयरथकल्यापादातधनकनकमाणिक्यादिभिर्वर्धेत इति वर्धमान । श्रिया अष्टमहाप्रातिहार्यशोभया युक्तो वर्धमान । स चासौ स्वामी च त श्रीवर्धमानस्वामिनम् । अत्र च श्रीशब्देन पूजातिशय प्रतिपादित ॥ त्रिभुवनविभु प्रति एकवचनम् आत्मान प्रति तु बहुवचनं विरुद्धमिति न वाच्यम् । यत अय निरुपमत्वाद् एक । वय च प्राकृतप्राया प्रभूता इति सूचनार्थम् एकत्वबहुत्वे स्त ॥ किंभूतम् । प्राकृतीभिर्भाषाभि कृत्वा सशय सदेह आर्षं प्रचुरच्छात्रपरिवृतेन्द्रभूत्यादिऋषिसवन्धिन त त अतिशयप्रसिद्ध बहुलं जीवकर्मादिविपयत्वेन प्रभूतम् । यदुक्तम् ।

---

१ C पायआहिँ २ D अथ ३ BC अभिधेयप्रयोजन° ४ BC ज्ञाति°; ५ BC °महाप्राती°

जीवे[1] कम्मे तज्जीव-भूअ-तारिसय-बन्धमोक्खे य ।
देवा नेरइया वा पुन्ने परलोयं[2]-निव्वाणे ॥

अपहरमाणं विनाशयन्तम् । इत्यनेन वचनातिशय उक्तः । स च न ज्ञानातिशयं विनेति तेन ज्ञानातिशयाक्षेपः । सोपि न अपायापगमातिशयं विनेति तेनापि च अपायापगमातिशयाक्षेपः । अपायभूता रागादयः तेषामपगमः । स एव अतिशयः । अथवा । वर्ध च्छेदनपूरणयोः । चौरादिकत्वाण्णिचि[3] कृते वर्ध्यते छिद्यतेऽसाविति स्वरान्तत्वात् कर्मण्यल् । ततो वर्धः छिन्नः मानः अहंकारो येनेति व्युत्पत्त्या वर्धमान इति नाम्नैव सूचितः । इत्थं चतुस्त्रिंशदतिशयज्ञापकमतिशयचतुष्कमुक्तम् । पाइआहिं भासाहिं इत्यत्र बहुवचनमशेषान्यभाषासंग्रहार्थम् । अत्र च संस्कृतद्व्याश्रयप्रतिपादितव्याकरणसप्ताध्यायीसकललक्ष्यतद्व्यावर्ण्यमानश्रीमूलराजनृपादि — चरितरूपाभिधेयानुक्रमायातप्राकृताष्टमाध्यायोदाहरणश्रीकुमारपालभूपालचरित्रस्वरूपमभिधेयमथशब्देन सूच्यते । अनेन च अभिधेयेन सह अस्य महाकाव्यस्य प्रतिपाद्य[4]प्रतिपादकलक्षणः संबन्धः । प्रयोजनं च अनन्तरं सकलप्राकृतलक्षणश्रीकुमारपालचरितपरिज्ञानम् । परं परं च निःश्रेयसम् । यदुक्तम् ।

व्याकरणात् पदसिद्धिः पदसिद्धेरर्थनिर्णयो भवति ।
अर्थात् तत्त्वज्ञानं तत्त्वज्ञानात् परं श्रेयः ॥ १ ॥
सुकृतं जनयत्यादावसुरसुरस्वामितां ततः क्रमशः ।
निर्वृतिवनितावाप्तिं धार्मिकगुणकीर्तनं विदुषाम् ॥ २ ॥

"अहं[5] पाइआहिं" "बहुल" "आरिसं" इति पदभणितिव्याजेन साक्षात् "अथ प्राकृतम्" [१], "बहुलम्" [ २ ], "आर्षम्" [३], इति सूत्रत्रय प्रतिपादितम् । तच्च अग्रे यथालक्ष्यम् अत्र ग्रन्थे व्यक्तीभविष्यति ॥

१ BC जीवो. २ D °लोग°. ३ BC °ण्णिनि. ४ C omits प्रतिपाद्य°.
५ D omits अह... . व्यक्तीभविष्यति

अत्थि अणहिल्ल-नगरं अन्ता-वेइसमाइ-निव-निचिअं ।
सत्तावीसइ-मुत्तिअ-भूसिअ-जुवइ-जण-पइ-हरयं ॥ २ ॥
तिअस-वई-हर-बहु-मुह-आदरिसीहूय-फलिह-सिल-सिहरो ।
जस्सि पुहइ-वहू-मुह-अवयंसो सहइ पायारो ॥ ३ ॥

२. अधुना श्रीकुमारपालस्य चरितं विवर्णयिषुः सकलेन्दिरामन्दिरं तद्राजधानीनगरं वर्णयति । अन्तर्वेदिः गङ्गायमुनयोर्मध्यदेशः तस्य ईशः स आदिर्येषां ते च ते नृपाश्च तैर्निचितं व्याप्तम् । प्रतापपराभूतमार्तण्डमण्डलस्य श्रीकुमारपालभूपालस्य प्रसादनाय सकलदिङ्मण्डलमिलिताखिलनरपालचक्रवालेन सर्वकालमस्य कलितत्वात् । सप्तविंशतिमौक्तिकाभिर्नक्षत्रमालानामहारविशेषैः भूषितो युवतिजनो येषु एवंभूतानि पतिगृहाणि ईश्वरसदनानि यत्र तत् अणहिल्लनगरम् अस्तीति संबन्धः ॥ तत् पुनः कथम् 'अणहिल्लनगरम्' इत्यभिधीयते । अभिधीयते । पूर्वं किल वनराजराजेन नूतननगरविधानविहितचित्तेन प्रधानभूमिखण्डगवेषणार्थं विचरता एकदा अरण्यमध्ये गवाश्चारयन् अणहिल्लो नाम गोपालो दृष्टः । तदग्रे च चित्ताभिप्रायो निवेदितः । तेनापि तत्कार्यकरणार्थं शकुनगवेषणं कुर्वता एकत्र प्रदेशे शृगालो बलिष्ठकुर्कुरं निर्धारयन्नवलोकितः । तत्रैव च अणहिल्लेन वनराजराजो नगरनिवेशं स्वनाम्ना कारित इति अणहिल्लनगरम् ॥

वेइसमाइ इत्यत्र वक्रादित्वाद् [१.२६] अनुस्वारः । बाहुलकात् [१.२४] क्वचिद् अन्यस्यापि व्यञ्जनस्य मः ॥

३. अधुना षड्विंशतिगाथामानेन आदिमहाकुलकेन एतदेव नगरं यच्छब्देन निर्दिशन् वर्णयति । तृतीया दशा येषाम् । मयूरव्यंसकादित्वान्निपातः । तेषां पतिः इन्द्रः तस्य गृहं स्वर्गः तत्र या

---

१ D अणहिल्ल°. २ BC °कुर्कुर. ३ BC बाहुलकत्वात्. ४ D अथ.

निद्द-सह-मुहावयंसा विइया गुरुणो अवीय-गुण-निवहा ।
निवसन्ति अणेग-बुहा जस्सिं पुहवीस-सलहिज्जे ॥ ४ ॥
न हु अत्थि न वि अ हूअं इह लोए अइमएण जस्स समं ।
सुंदरिस-ठाणमसुरिस-रहिअं सालाहण-पुरं पि ॥ ५ ॥

वध्वस्तासां यानि मुखानि तेषाम् उन्नतत्वाद् उज्ज्वलत्वाच्च अनादर्शा आदर्शाः संपन्नानि आदर्शीभूतानि स्फटिकशिलाशिखराणि यस्य । पृथिव्येव वधूः सुखहेतुत्वात् तस्या मुखं सर्वनगरप्रधानत्वात् इदमेव नगरं वक्त्रम् तस्य अवतंसः शोभाकारित्वात् शेखर इत्थंभूतः प्राकारः कोट्टो यत्र राजते ॥

अन्तावेइ । सत्तावीसइ-सुत्तिअ-भूसिअ । "दीर्घह्रस्वौ मिथो वृत्तौ" [४] इति स्वराणां समासे दीर्घह्रस्वौ । वारिम । जुवइ जण । क्वचिद् वा । पइ हरं वई-हर । दीर्घस्य ह्रस्वः । सिल सिहरो । क्वचिद् वा । वहु मुह वहू मुह ॥

४. नृपस्य सभाया रम्यत्वात् मुखस्य अन्यथानुपपत्तेश्च कान्तात्वम् । सा तस्या मुखम् तत्र अवतंसा शोभाकृत्त्वेन आपीडा इव । किल गगनाङ्गणगत एक एव गुरुः प्रसिद्धः । परम् एते विशदप्रज्ञर्द्धितः उत्प्रेक्ष्यन्ते द्वितीया गुरवः । अविद्यमानो द्वितीयः उपमानतया यस्य सः अद्वितीयो निरुपमः । एवंभूतो गुणनिवहो येषाम् । न एकः अनेकः अनेकश्च ते बुधाश्च ते तथा । पृथिवीशैरन्यनगरापेक्षया श्लाघ्ये प्रशस्ये यस्मिन् निवसन्ति ॥

मुह अवयंसो मुहावयंसा । "पदयोः संधिर्वा" [५] इति संस्कृतोक्तः सर्वः संधिर्वा । पदयोरिति किम् । सहइ । बहुलाधिकारात् क्वचिद् एकपदेपि । बिइया अर्थाय ॥

५. सकलनगरतिलकयन्त्रं किल सातवाहनस्य राज्ञो नगरं

---

१ B मुखंगि°, C मउरिंग°. २ C उज्वलत्वाच्चानादर्शा, B उज्वलत्वाद्वा-नादर्शा. ३ B आदरंग°, C आदर्शा° ४ C om. सर्व.

जस्सि नमन्त-सीसो तियसीसो वि हु तवं तवन्ताण ।
तेलुक्क-सज्जणाणं थुणइ स-भिक्खूण सद्धाए ॥ ६ ॥
जरथोन्नय-थण-नीसह-बहु-दंसण-निस्सहं नरा जन्ति ।
दुसहाउ दुस्सहेणं मयणेण हयन्तरप्पाणो ॥ ७ ॥

प्रतिष्ठानं नाम । यतः सत्पुरुषाणां सदाचारनराणां स्थानं पदम् । असुपुरुषैः नीचैश्च रहितं विवर्जितम् । परं तदपि न खलु अस्ति नापि च आसीत् इह लोके अस्मिन् जगति अतिशयेन माहात्म्येन कृत्वा यस्य समं तुल्यम् । एतदनुमानेन अग्रेपि अनेन समं तन्न भावीति विज्ञायते ॥

निवसन्ति अणेग । हु अत्थि । " न युवर्णस्यास्वे " [६] इति न संधिः। अस्व इति किम् । पुहवीस । युवर्णस्येति किम् । गुरुणो अवीय ॥

लोए अइसएण । " एदोतोः स्वरे " [७] इति न संधिश्च । एदोतोरिति किम् । पुहवीस ॥

विअ । हूअं । लोए । अइसएण । रहिअं । "स्वरस्योद्वृत्ते" [८] इति न संधिः । बाहुलकात् क्वचिद् वा । सुउरिस असुरिस । क्वचित् संधिरेव । । सालाहण ॥

निवसन्ति अणेग । " त्यादेः " [९] इति न संधिः ॥

६. यस्मिन् बाह्याभ्यन्तरभेदेन द्वादशप्रकारं तपः तप्यमानानां चरतां त्रयो लोकास्त्रैलोक्यम् । भेषजादित्वाद् यण् । ऊर्ध्वाधो-मर्त्यलोकलक्षणम् । तात्स्थ्यात् प्राणिचयोपि । तस्य परिपालनादिभिः कृत्वा सज्जना बान्धवास्तेषां सद्भिक्षूणां प्रधानमुनीनां श्रद्धया अन्तरङ्गबहुमानेन आस्तां सुरासुरखचरनरनिकरः त्रिदशेशोपि । हु इति निश्चितम् । नमच्छीर्षः स्तौति ॥

तियसीसो । " लुक् " [१०] इति लुक् ॥

तवं । "अन्त्यव्यञ्जनस्य" [११] इति लुक् । वाक्यविभक्त्यपेक्षायां हि अन्त्यत्वम् अनन्त्यत्वं च । तेन उभयम् । सज्जणाण सामग्गूण ॥

७. दुःसहात् असह्यशीतातपादेरपि दुःसहेन असह्येन मदनेन

---

१ BC बाहुलकत्वात् . .

तेअ-दुरालोएहिं अन्तो-उवरिं घराण रयणेहिं ।
छूढ व्व निरवसेसा सरिआहिव-संपया जत्थ ॥ ८ ॥
विज्जु-चलं महुर-गिरो दिन्तो लच्छि जणो छुहत्ताण ।
भिसओ खु जहा सरओ दिसाण पाउस-किलन्ताण ॥ ९ ॥

हृन्तान्तरात्मानस्तिरस्कृतान्त·सत्त्वाः उन्नतस्तनैर्निःसह्या गमनागमनादि· कार्ये मन्दा या वध्वस्तासां दर्शनेन संजातरणरणकत्वाद् निःसहम्' अधीरं यथा भवति एवं नरा भोगिनो यत्र यन्ति यान्ति वेति ॥

' सद्धाए । उन्नय । " न श्रदुदोः " [१२] इति न लुक् ॥

नीसह निस्सहं । दुसहाउ दुस्सहेण । "निर्दुरोर्वा" [१३] इति न लुक् ॥

८. गृहाणाम् अन्त· मध्यप्रदेशे उपरि उपरितनभागे च तेजोदुरालोकैः प्रेङ्खत्प्रभामण्डलखण्डितनेत्रप्रसरै रत्नैः मुक्ताफलप्रवालाद्यैः कृत्वा सरिदधिपसंपदो रत्नाकरविभूतयः निरवशेषाः समस्ताः क्षिप्ता विन्यस्ता यत्र मन्यन्ते ॥

अन्तरप्पाणो । दुरालोएहिं । निरवसेसा । "स्वरेन्तरश्च" [१४] इति लुक् न । क्वचिद् भवत्यपि । अन्तो-उवरिं ॥

९. मधुरगीः प्रियवाक्यः सन् जनः क्षुधार्तेभ्यो बुभुक्षाक्षामकुक्षिभ्यः विद्युच्चलां क्षणदृश्यविनश्वरीम् अतो ददत् कारुण्यात् प्रयच्छन् लक्ष्मीम् स्वास्थ्यजनकत्वेन खु इति संभाव्यते भिषग् वैद्यः । यत्रेति प्रक्रमाज्ज्ञेयम् । अत्रार्थे पूर्णोपमामाह । यथा शरत्कालः प्रावृट्क्लान्तानां वर्षाकालकलुषितानां दिशां लक्ष्मीं प्रसादरूपां शोभां ददाति ॥

सरिआ । "स्त्रियाम् आद् अविद्युतः" [१५] इति आत्वम् । बाहुलकाद् ईषत्स्पृष्टतरयश्रुतिरपि । संपया । अविद्युत इति किम् । विज्जु-चलं ॥

महुर-गिरो । "रो रा" [१६] इति रो ॥

छुहत्ताण । " क्षुधो हा " [१७] इति हा । आर्षे तु छुहेत्यपि ।

१ D कात्ता. २ BC रा. ३ BC आर्षेति.

जत्थच्छरस-मण-हरो बहूहि रमिरो वि अच्छर-समाहिं ।
दीहाऊ वि अदीहाउस-माणी सइ विवेइ-जणो ॥ १० ॥
कुसुम-धणू घणुह-धरो कउहा-मुह-मण्डणम्मि चन्दंमि ।
रज्जं तमेग-छत्तं असंकमुवभुंजए जत्थ ॥ ११ ॥

भिसओ । सरओ । "शरदादेरत्" [ १८ ] इति अन्त्यव्यञ्जनस्य अत् ॥
दिसाण । पाउस । "दिक्प्रावृषोः सः" [ १९ ] ॥

१०. यत्र अप्सरोमनोहरः त्रिदशाङ्गनामानसावर्जकः अप्सरःसमाभिः देवीकल्पाभिर्वधूभिः कान्ताभिः सह रन्तापि रमणशीलोपि दीर्घायुरपि परिपूर्णजीवितव्योपि "मूलविस°" इत्यादिसुगुरूपदेशवशप्रादुर्भूतानित्यत्ववासनावासितान्तःकरणत्वेन अदीर्घायुषम् आत्मानं मन्यते सदा विवेकिजनः युक्तायुक्तविमर्शकृल्लोकः ॥

अच्छरस । अच्छर । दीहाउ । अदीहाउस । "आयुरप्सरसोर्वा" [२०] इति सः ॥

११. ककुम्मुखमण्डने चञ्चत्किरणनिकुरुम्बप्रकृतदिक्कान्तावदनविलेपने चन्द्रे कुसुमधनुः पुष्पधन्वा राज्यम् आधिपत्यं तत् सर्वलोकप्रसिद्धं सर्वोत्कृष्टं वा एकच्छत्रम् अद्वितीयातपत्रम् अशङ्कं निर्भयं यत्र उपभुनक्ति पालयति । तदा तदाङ्गोऽङ्गनासमर्थत्वाज्जगत इति ॥

कउहा । "ककुभो हः" [ २१ ] इति हः ॥
धणू । धणुह । "धनुषो वा" [ २२ ] इति वा हः ॥
रज्जं । "मोनुस्वारः"[ २३ ] इति मस्य अनुस्वारः । क्वचिद् अनन्त्यस्यापि । चन्दंमि ॥
छत्तं असंकमुव° । "वा स्वरे मश्च" [ २४ ] इति वा अनुस्वारः । पक्षे लुगपवादो मस्य मः । बाहुलकाद् अन्यस्यापि व्यञ्जनस्य मः । तमेग° ॥

---

१ C omits °वासिता°.

रोमंच-कंटइल्लो संझाए चंक-जंपण-छइल्लो ।
जत्थ मणंसिल-तिलओ विलसइ अहिसारिआ-लोओ॥१२॥
'जत्थ भवणाण अवरिं देवं नागेहिं विम्हया दिट्ठो ।
रमइ मणोसिल-गोरो मणसिल-लित्तो मयच्छि-जणो॥१३॥
पव्वेसु अपव्वेसुं जत्थ मुणीणं कमेण अक्कमेणं ।
काऊणं पटिवत्तिं हरिसं काऊण देइ जणो ॥ १४ ॥

१२. अभिसरति अभिसारयति वा कामार्ता कान्तम् इत्यभिसारिका । तल्लक्षणो लोक अभिसारिकालोक मन शिलातिलक वचनजल्पने छेक भाषितेतरवाच्यवचनरचनाया निपुण अत एव रोमाञ्चेन कण्टकवान् सन्ध्याया यत्र विलसति क्रीडति । तथाविधजल्पनविलसनयो अन्यथानुपपत्तित कामिभिरिति अनुक्तमपि ज्ञेयम् ॥

अत्तक । उवभुजए । रोमंच । कट्टइल्लो । संझाए । "ङञणनो व्यञ्जने" [ २६ ] इत्यनुस्वार ॥

१३. देवनागै अमरनागकुमारै कथमत्र मनुष्य अप्सरोभ्यो नागाङ्गनाभ्यश्चाभ्यधिकागण्यलावण्यशालिन्यो दृश्यन्त इति विस्मयात् आश्चर्याद् दृष्ट गगनाङ्गणे कस्यचित् कार्यस्य संसिद्धये विचरद्भि अवलोकित मन शिलावद्गौर । सुवर्णवर्णत्वात् । मन शिलालिप्त अङ्गशोभातिरेकहेतुनिम्मादिकरणेन । मृगाक्षिणी इव अक्षिणी यासां ताश्च मे जनश्च भवनानाम उपरि यत्र रमते । कामिभिरिति शेष ॥

बहु अत्र इति आद्यस्य, मणसिल इति द्वितीयस्य, अवरिं इति तृतीयस्य, "वक्रादावन्त" [ २६ ] इत्यनेनानुस्वार । [illegible] पुल्लिङ्ग । दस नागेहिं । वचिम । मणसिल । आर्षे मणासिल ॥

१४. पर्वसु उत्सवपारणपारणादिकेषु अपर्वसु तदतिरिक्ता-न्यदिनेषु क्रमेण प्रथमम् [illegible] पश्चाद् [illegible]

१ D क.

वीस-गुणो तीस-गुणो कलि-कालो नूण जत्थ कय-जुगओ ।
नूणं अणभुञ्जन्ते लोए मासं स-मंसं व ॥ १५॥
जस्सिं सकलंकं वि हु रयणी-रमणं कुणन्ति अकलङ्कं ।
सद्दुधर-संस-भङ्गोज्जलाओ भवणंसु-भंगीओ ॥ १६ ॥
लङ्घिज्जइ नालंघं वञ्चिज्जइ न हु अवंचणिज्जं च ।
वञ्छिज्जइ न वि जस्सिं अवंछणिज्जं च केणावि ॥ १७ ॥

अक्रमेण समकालं प्रतिपत्तिम् " अभिमुह-गमणं " इत्यादिसिद्धान्तोक्त-भक्तिं कृत्वा हर्षं कृत्वा च मुनीनां यत्र जनो ददाति ॥

भवणाण । पस्सेसु अपस्सेसुं । मुणीणं । कमेण अक्कमेण । काऊण काउण ।
" क्त्वास्यादेर्णस्वोर्वा " [ २७ ] इत्यन्तो वानुस्वारः ॥

१५. किल अयं कलिकालः सर्वकालं सर्वकालेषु अधमतमः । परं सोपि सदाचारधार्मिकजनवशेन कृतयुगाद् विंशतिगुणस्त्रिंशद्गुणश्च यत्र। नूनम् इत्युत्प्रेक्ष्यते । नूनं निश्चितं मांसं स्वमांसवत् अभुञ्जाने अनश्नति लोके नरपत्यादौ सति । कृतयुगेपि हि केषाचित् पापात्मना मांसाशित्वात् अत्र च सर्वथा तदभावात् ततोधिकत्वम् ॥

वीस । तीस । "विंशत्यादेर्लुक् " [ २८ ] इति अनुस्वारलुक् ॥

मास मंसं । नूण नूणं । " मांसादेर्वा " [ २९ ] इति वा अनुस्वारलुक् ॥

१६. यस्मिन् शब्दधरशङ्खभङ्गोज्ज्वला चन्द्रधवलपाञ्चजन्यच्छेदविशदा भवनांशुभङ्ग्यः सदनकिरणविच्छित्तयो रजनीरमणं चन्द्रम् । अपि-विस्मये । सकलङ्कमपि समलमपि । हु इति निश्चितम् । अकलङ्कं निर्मलं कुर्वन्ति ॥

१७. अलङ्घ्यम् अनतिक्रमणीयं पूज्यं गुरुमातापितृादिकं न लङ्घ्यते । सदाज्ञातिक्रमेण न पराभूयते । न च खलु अवञ्चनीयम् अविप्रतार्य

वंजिअ-सत्ती सत्ती-अणञ्जिओ सत्ति-वंझ-जण-वञ्झो ।
लुंटाय-लुण्टणो संठे सण्ठो जत्थ निव-लोओ ॥ १८ ॥
उद्दंड-बाहु-दण्डा-जस्सि कुंढासहा सयमकुण्ढा ।
कंतंगा कन्त-गुणा नय-पंथे पन्थिआ पुरिसा ॥ १९ ॥

मित्रादि वञ्च्यते विप्रतार्यते । नापि च अवाञ्छनीयम् अनभिलषणीय परद्रव्यपरदारादि वाञ्छ्यते अभिलष्यते सदाचारानिरतत्वान् केनापि यस्मिन् ॥

१८ व्यञ्जिता प्रोद्धुरकन्धररणकण्डूलदोर्दण्डप्रचण्डशात्रवत्रासने प्रकेटिता शक्ति स्वसामर्थ्य येन । शक्त्या अनञ्जित अगतशक्ति । शक्तिवन्ध्यजनवन्ध्य । पराक्रमवति अभियुक्त । लुण्टाके चोरे लुण्टनो मोषक । शठे मायाविनि शठश्छद्मपर । नीतिमता हि राज्ञा तथाविधेषु प्रतिकूलाचरण न दोषाय । यदाह भारवि ।

व्रजन्ति ते मूढधिय पराभव
भवन्ति मायाविषु ये न मायिन ।
प्रविश्य हि घ्नन्ति शठास्तथाविधान्
असवृताङ्गान् निशिता इवेषव ॥

यत्र नृपलोको गतान ॥

१९ उद्दण्डौ शात्रवग्रामहृत्त्वेन प्रचण्डौ बाहुदण्डौ येषाम । कुण्ठा क्रियासु मन्दा तान न सहन्ते न क्षमन्ते इति कुण्ठासहा । स्वयम् आत्मना च अकुण्ठा स्वार्यकार्यक्रियासु अमन्दा । कान्ताङ्गा मनोज्ञरूपाभ्यवयवा । कान्ता मनोज्ञा निर्भरं वाञ्छिता वा गुणा शौर्यौदार्यधैर्यगाम्भीर्यादयो येषाम । नयपथे न्यायमार्गे पान्था पथिका पुरुषा यत्र ॥

---

१ BC omit प्रकटिता २ BC विवविद्र

चंदुज्जाण व चन्दो वंकिअ-बंधूण बन्धवो जस्सि ।
अणुकंप-कम्पिअ-मणो विहवि-जणो वम्फए धम्मं ॥२०॥
लंबंत-लुम्बि-रंभारम्भिय-तोरण-निरुद्ध-संरंभो ।
सरए वि पाउसम्मि व न जत्थ दीसइ फुडो तरणी॥२१॥
जत्थ चुलुक्क-निवाणं परिमल-जम्मो जसो कुसुम-दामं ।
नहमिव सव्व-गओ दिस-रमणीण सिराइँ सुरहेइ ॥२२॥

२०. चंदुज्जेति देश्यः कुमुदवाची । ततो यथा कुमुदानां चन्द्रो बान्धवः एवं काङ्क्षिता निराश्रयत्वेन अभिलषिता बान्धवा यैस्तेपाम् उपकारकारित्वाद् अनुकम्पाकम्पितमना दयावशगतचेताः सन् बान्धवः विभविजनः ईश्वरलोको यस्मिन् धर्मं काङ्क्षति ॥

२१. लम्बमाना लुम्ब्यः फलसमूहा यासु ताश्च ता रम्भाश्च कदल्यस्ताभिः आरब्धानि प्रतिगृहं कृतानि यानि तोरणानि चन्दनमालास्तैर्निरुद्धः निषिद्धः संरम्भः किरणनिकरप्रसररूप आटोपो यस्य स एवंभूतस्तरणिर्द्युमणिः स्फुटः प्रकटो न यत्र दृश्यते प्रावृषीव प्रावृट्काल इव शरद्यपि शरत्कालेपि । प्रावृषि हि सजलजलधरान्तर्हितत्वाद् न दृश्यते । अत्र तु निर्वृत्तघनायां शरद्यपि न दृश्यत इति विरुद्धार्थः अपिशब्दः ॥

सकलंक-अकलङ्क । सद्ध संरु । भङ्गो भंगीओ । लङ्घिज्जइ लंघं । वञ्चिज्जइ अवंचणिज्जं । वञ्छिज्जइ अवंछणिज्जं । वंजिअ अणञ्जिओ । वंझ वञ्झो । लुंटाय लुण्टणो । संठे सण्ठो । उद्दंड दण्डा । कुंढा अकुण्ढा । कंतंगा कन्त । पंथे पन्थिआ । चंदुजाण चन्दो । बंधूण बन्धवो । अणुकंप कम्पिअ । [ वंकिअ ] वम्फए । लंबंत लुम्बि । रंभा रम्भिअ । "वर्गेन्त्यो वा" [ ३० ] इति वा अनुस्वारस्य वर्गान्त्यः ॥

सरए । पाउसम्मि । तरणी । "प्रावृट्शरत्तरणयः पुंसि" [ ३१ ] इति पुंलिङ्गप्रयोक्तव्याः ॥

२२. यत्र चौलुक्यनृपाणां मूलराजप्रभृतीनां नभ इव गगनमिव

---

१·BC add वंकिअ before बंधूण instead of before वम्फए.

सव्व वयाणं मज्झिम-वय व सुमणाण जाइ-सुमणं व ।
सम्माण मुत्ति सम्मं व पुहइ नयराण जं सेयं ॥ २३ ॥
चम्म जाण न अच्छी णाण अच्छीइं ताण वि मुणीण ।
विअसन्ति जत्थ नयणा किं पुण अन्नाण नयणाइं ॥२४॥
गुरुणो वयणा नयणाइं ताव माहप्पमवि य माहप्पो ।
ताव गुणाइ पि गुणा जाव न जस्सि वुहे निअइ ॥२५॥

सर्वगतम् ऊर्ध्वाधोमर्त्यलोकप्राप्त परिमलस्य सौरभ्यस्य जन्म उत्पत्ति स्थान यश कुसुमदाम पुष्पमाल्य दिग्रमणीना शिरासि सुरभयति सुरभीणि करोति । एतन्नगरम् आरभ्य सकलदिक्चक्रवालव्यापि चौलुक्य नृपाणा यश इत्यर्थ ॥

२३ यथा सर्ववयसा कौमारयौवनवार्धकाना मध्यमवय तारुण्य श्रेय । यथा सुमनसा वकुलविचकिलपाटलादिपुष्पाणा जातिसुमना । यथा शर्मणा चक्रवर्तिदेवेन्द्राहमिन्द्रसौख्याना मुक्तिशर्म तथा पृथिवीनगराणा प्रतिष्ठानादीना मध्ये यत् श्रेय प्रशस्यतरम् ॥

२४ येपाम् अक्षीणि न चर्म किं तु ज्ञान तत्त्वावबोधरूपम् अक्षीणि । तेपामपि मुनीना सातिशयज्ञानिनाम् ऋषीणा यत्र नयनानि विकसन्ति । अत्यद्भुतधर्मधर्मस्थानादिवीक्षणात् प्रीयन्ते । किं पुनरन्येपा चर्मचक्षुषा सामान्यजनाना नयनानि सविकासानीति ॥

जम्मो । जसो । " स्रम् अदामशिरोनभ " [ १२ ] इति पुस्त्वम् । अदामशिरोनभ इति किम् । दाम । नह । सिराइं । बाहुलकात् । वय । सुमण । सम्म । सेय । चम्म ॥

२५ गुरो सुगाचार्यस्य वचनानि तावद् वचनानि । आश्चर्यकारीणीत्यर्थ । माहात्म्य गौरवमपि तावद् माहात्म्यम् गुणा बुद्धिमत्त्वादयोऽपि तावद् गुणा यावत् न यस्मिन् बुधान् पश्यसि ।

हरि-हर-विहिणो देवा जत्थन्नाइँ वि वसन्ति देवाइं ।
एयाए महिमाए हरिओ महिमा सुर-पुरीए ॥ २६ ॥
जत्थञ्जलिणा कणयं रयणाइँ वि अञ्जलीइ देइ जणो ।
कणय-निहीं अक्खीणो रयण-निही अक्खया तह वि ॥२७॥
तत्थ सिरि-कुमर-वालो चाहाए सव्वओ चि धरिअ-धरो ।
सुपरिट्ठ-परीवारो सुपइट्ठो आसि राइन्दो ॥ २८ ॥

एतन्नगरवुधविलोकने तु बृहस्पतेर्वाग्मित्वं माहात्म्यं गुणाश्च न प्रतिभान्तीति भावः ॥

अच्छी अच्छीइँ । नयणा नयणाइँ । वयणा वयणाइ । माहप्प माहप्पो । "वाद्यर्थवचनाद्या." [ ३३ ] इति वा पुस्त्वम् ॥

२६. हरिहरविधयो देवा. अन्येपि सूर्यसुगतफणिपत्यादयो देवा यत्र वसन्ति । अनेन महिम्ना सुरपुर्या स्वर्गलोकस्य महिमा प्रभाव. हृतस्तिरस्कृत. । सुरपुर्यां हि इन्द्र एव एक. प्रवरो वसति । अत्र च महाप्रभावाण्यनेकानि दैवतानि । अतो युक्तस्तन्महिमापहार ॥

गुणाइं गुणा । देवा देवाइ। "गुणाद्याः क्लीबे वा" [३४] इति वा क्लीबत्वम्॥

२७. यत्र कनकम् अञ्जलिना हस्तेन रत्नान्यपि पद्मरागगारुत्मतहीरकमौक्तिकादीन्यपि अञ्जलिना यत्र जनो ददाति । कृपापात्रदीनानाथार्थिषु इति शेषः । तथापि कनकनिधिः सुवर्णशेवधि. अक्षीणः परिपूर्णः । रत्ननिधिश्च अक्षीणः । प्रतियाचकं तथा दाने शेवधीनां ह्रास. संभवति । परं वैश्रवणकल्पत्वाज्जनानां तत्परिपूर्णतैवेत्यर्थः । आदिमहाकुलकम् ॥

माहिमाए महिमा । अञ्जलिणा अञ्जलीइ । निही निही । "वेमाञ्जल्याद्याः स्त्रियाम्" [ ३५ ] इति स्त्रीत्वम् ॥

२८. सर्वतः सकलविश्वलयावनिपालेभ्यो दिग्गजकूर्मकुलाचल-

---

१ BC °कुमार°

तुह आणा-ओमालं सिरम्मि धरिमो जहा अणिम्मल्लं ।
अम्हे एत्थाम्हेत्थ य इअ भणिउं जो निवेहि नओ ॥ २९ ॥
तुह हरि-पिआ जइ इमा किं पि पिआ किमवि मेइणी जइमा।
ता किं ति मए त्ति रुसेव जस्स कित्ती गया दूरं ॥ ३० ॥

फणिपलिभ्यो वा बाहौ स्वदोर्दण्डे धृतधरः संस्थापितवसुंधरः सुप्रतिष्ठ सन्नयायमार्गस्थितः परीवारो मित्रामात्यादिवर्गो यस्य । सुप्रतिष्ठः प्रतिज्ञाशूरः तत्र अणहिल्लनगरे श्रीकुमारपालो राजेन्द्र आस्ते ॥

बाहाए । "बाहोरात्" [ ३६ ] इत्याकारोन्तादेशः ॥

वालो । सव्वओ । धरो । वारो । सुपइट्ठो । राइन्दो । "अतो डो विसर्गस्य" [ ३७ ] इति विसर्गस्थाने डो. ॥

२९. अधुना एकान्नविंशत्या गाथाभिः अस्यैव राज्ञो वर्णनम् आह । तव आज्ञैव शासनमेव निर्माल्यं शेषां शिरसि शीर्षे धराम वहामः । किमिव । यथा अनिर्माल्य तत्कालविकसितशतपत्रिकाचम्पकादिदाम । अत्र सिन्धुदेशादौ वयम् अत्र कुङ्कणदेशादौ च वयं वर्तामहे इति भणित्वा यो नृपैर्नत. ॥

सुपरिट्ठ सुपइट्ठो । ओमाल अणिम्मल्ल । "निष्प्रती ओत्परी माल्यस्थोर्वा", [ ३८ ] । निर्प्रती माल्ये स्थाधातौ च यथासंख्यम् ओत्परी वा ॥

३०. तव इयं हरेः प्रिया भार्या यदि किमपि अनाख्येयं यथा भवति एवं प्रिया मेदिनी च चाण्डाली इयं यदि किमपि प्रिया तदा किमिति किम् एवं सति मयेति अस्माद्धेतो रुषेव यस्य कीर्तिर्गता दूरम् ॥ कान्ता हि यदा नीचान्यकान्तासक्तं भर्तारम् अवलोकयति तदा रोषाद् अन्यत्र व्रजति । कीर्तिरपि तथा सर्वत्र भ्रमणाद् इत्थम् उत्प्रेक्षा । अत्र च हरिप्रिया लक्ष्मीः मेदिनी पृथ्वी ॥

"आदेः" [१९] । आदेरित्याधिकारः कगचजेत्यादिसूत्रात् प्राग् अविशेषे वेदितव्य. ॥

अम्हे एत्थ अम्हेत्थ । जइ इमा जइमा । "त्यदाद्यº" इत्यादिना [४०] त्यदादेरव्ययाच्च तयोरेवादेः स्वरस्य बहुलं लुक् ॥

जो दूसासण-रिउणो आसत्थामस्स राम-सीसस्स।
वीसामिअ-जस-पसरो स-जसेणं कासवि-तलम्मि॥ ३१॥
वीसुं वासा-नीसित्त-महि-अले ऊस-मालि-तेअस्स।
रज्जे जस्स न कास वि नीसत्तं नीसहत्तं वा॥ ३२॥
गुण-सामिद्धी पयडा कला-समिद्धी वि पायडा जस्स।
जो दाहिण-पवण-निहो दाक्खिण्ण-निही गुणि-वणाण॥३३॥

किं पि किमवि। "पदाद् अपेर्वा" [४१] पदात् परस्य अपेः आदेर्लुग् वा॥ किं ति मए त्ति। "इतेः स्वरात् तश्च द्वि." [४२] इति पदाद् इतेः आदेर्लुक् स्वराच्च तकारो द्विः॥

३१. दुःशासनस्य रिपुर्भीमस्तस्य। अश्वत्थाम्न. द्रोणाचार्याङ्गजस्य। रामस्य परशुरामस्य शिष्यो भीष्मस्तस्य च विश्रमितयशःप्रसरः प्रशमितसुश्लोकप्रपञ्चः स्वयशसा कृत्वा य. काश्यपीतले पृथ्वीपीठे। भीमादीनां शौर्यादिगुणगणेभ्योपि अद्भुतगुणत्वाद् अस्य सुघटस्तद्यशःप्रशमः। अथ च चिरभ्रमणखिन्नं विश्राम्यते॥

३२. उस्रमालितेजसः दु.सहत्वाद् मार्तण्डकल्पप्रतापस्य यस्य विष्वक् समन्ताद् वर्षासु प्रावृट्काले निषिक्तं धाराधरधाराधोरण्या उक्षितं महीतलं यत्र तस्मिन् राज्ये न कस्यापि निःस्वत्वं निर्द्रव्यत्वं नि.सहत्वं असमर्थत्वं वा। राजन्वत्यां हि पृथ्व्यां स्वकालं वृष्टिः ईश्वरा. समर्थाश्च लोका इत्यादि सर्वं सुघटमिति॥

दूसासण। आसत्थामस्स। सीसस्स। वीसामिअ। कासवि। वीसुं। वासा। नीसित्त। ऊस। कास। नीसत्तं। नीसहत्त। "लुप्तयरव०" इत्यादिना [४३] लुप्तयादीनां शषसानाम् आदेः स्वरस्य दीर्घः॥

३३. गुणानां शौर्यादीनां समृद्धिः संपत् प्रकटा अत्युत्कर्षप्राप्तत्वात् प्रसिद्धा। कलानां गीतपठितादिद्विसप्ततिसंख्यानां समृद्धिरपि यस्य

सिविणम्मि वारण-बलं सुमिणम्मि अ आस-साहणं जस्स।
दिण्ण-भयं पिच्छन्ता दत्त-करा रिउ-निवा जाया॥ ३४॥
अङ्गार-पिक्क-गोह्ले खाए इङ्गाल-पक्क-कन्दे अ।
तत्त-निलाडा रिउणो जस्स णलाडं-तवे तवणे॥ ३५॥

प्रकटा। दाक्षिण्यस्य अनुकूलताया निधिः शेवधिः। गुणिनः सन्त. त एव सर्वसाधारणत्वेन वनानि। तेषां फलसमृद्ध्यादिजनकत्वेन दक्षिण-पवननिभो योस्ति॥

सामिद्धी समिद्धी। पयडा पायडा। "अतः समृद्ध्यादौ वा" [४४] इति आदेरस्य दीर्घो वा॥

दाहिण। "दक्षिणे हे" [४५] इति आदेरस्य दीर्घः। हे इति किम्। दक्खिण्ण॥

३४. स्वप्ने वारणबलं गजसैन्यं स्वप्ने अश्वसाधनं तुरगकटकं च दत्त-भयं वितीर्णत्रासं यस्य प्रेक्षमाणा दत्तकरा अर्पितदण्डा रिपुनृपा जाता.। तद्गजादिबलं चरेभ्य. सभयं निशम्य स्वप्ने साक्षादिव पश्यन्तस्त्रस्तचित्ता रिपुनृपा. स्वसौख्याय यं दण्डादिना प्रसादयन्तीति भाव.॥

सिविणम्मि। दिण्ण। "इः स्वप्नादौ" [४६] इति इत्वम्। आर्षे उकारोपि। सुमिणम्मि। बाहुल्काण्णत्वाभावे न। दत्त॥

३५. ललाटंतपे अत्युष्णे तपने मार्तण्डे सति तप्तललाटाः संतप्तभाल-स्थला रिपवो यस्य अङ्गारपक्वानि यानि गोह्लेति देश्यत्वाद् बिम्बीफलानि तानि। अङ्गारेषु पक्वा ये कन्दास्तांश्च खादन्ति भक्षयन्ति। यद्भयाद् अरण्यानीमध्यम् अध्यासीना अङ्गारपक्वबिम्बीफलकन्दादिभि. शत्रव: प्राणधारणं कुर्वन्तीत्यर्थः॥

अङ्गार इङ्गाल। पिक्क पक्क। निडाल णलाड। "पक्वाङ्गारललाटे वा" [४७] इति वा इत्वम्॥

१ D °ण्डा°. २ BC °धारणं. ३ D निडाल णडाल.

कइमं मज्झिम-लोए रिऊहिँ चत्तं न छत्तिवण्ण-वणं ।
नव-छत्तवण्ण-परिमल-मए गए जस्स संभरिउं ॥ ३६ ॥
अमयमइओ च्च अहवा अमयमयाओ वि समहिओ जस्स ।
हर-हीर-पिआहि वि जस-गीअ-झुणी सुव्वए वीसुं ॥ ३७ ॥
अखुडिअ-पडिहा-पसरस्स अग्गओ जस्स दप्प-कण्डूलं ।
खण्डिअ-नाण-प्पडिहं बुंद्रं-चुडं गउअ-वण्डं व ॥ ३८ ॥

३६. मध्यमेलोके मर्त्यलोके कतमत् सप्तपर्णवनं सप्तच्छदकाननं रिपुभिर्न त्यक्तम् नवसप्तपर्णपरिमलमदान् गजान् यस्य संस्मृत्य ॥

कइमं । मज्झिम । "मध्यमकतमे द्वितीयस्य" [ ४८ ] इति अत इत्वम् ॥

छत्तिवण्ण छत्तवण्ण । "सप्तपर्णे वा" [ ४९ ] इति अत इत्वं वा ॥

३७. अमृतस्य विकारः अमृतमयः स इव अथ वा अमृतमयादपि सुधाविकारादपि समधिकः समग्रीतो यस्य यशसो गीतस्य गानस्य ध्वनिर्निनादः आस्तां तावद् अन्यजनैः किं तु हरः ईश्वरः हरप्रिया गौरी ताभ्यामपि विष्वक् समन्तात् श्रूयते ॥

अमयमइओ अमयमयाओ । "मयट्यइर्वा" [५०] इति आदेरतो अइः वा ॥

हर हीर । "ईर्हरे वा" [५१] इति आदेरतो वा ईः ॥

झुणी वीसुं । "ध्वनिविष्वचोरुः" [५२] इति आदेरत उत्वम् ॥

३८. अखण्डितः अच्छिन्नः प्रतिभा । नवनवोन्मेषशालिनी प्रज्ञा प्रतिभा । तस्याः प्रसरो यस्य तस्य यस्य अग्रतः पुरतो दर्पेण सकल-शास्त्राद्भुतावबोधाभिमानेन पूर्वं कण्डूलं सखर्जूलं खण्डिता निकृत्त-त्वाच्छिन्ना ज्ञानप्रतिभा यस्य तद् बुधवण्टम् । उत्प्रेक्ष्यते । गवया गवाकृतयः साक्षादृश्या आरण्यकपशवः तेषां वण्डमिव ॥

अखुडिअ खण्डिअ । बुंद्रं वन्द्रं । "वन्द्रखण्डिते णा वा" [५३] इति आदेरस्य णेन सह उत्वम् ॥

१ BC बुंद्रबुड गउअवट्व, D बुद्बुन्द गउअवट्व. २ D मध्यलोके. ३ BC omit प्रज्ञा. ४ D °द्भुतबोधा°. ५ BC °वंट, D वट. ६ BC वंद्रमिव, D वट्मिव. ७ BC बुद्र वट । वट्खटिते &c, D बुट । वर्ण्ड°.

असि-पुढुमो धणु-पुढमो छुरिया-पढुमो अ सेह्ल-पढमो य ।
सव्वण्णु व्व अहिण्णू जो सयल-कला-कलावस्स ॥ ३९ ॥
उर-सेज्जाइ वि हरिणो सुन्देर-घरम्मि सइ सिरी अथिरा ।
जस्स गुण-वेल्लि-तरुणो थिरासि भू-वल्लि-पेरन्ते ॥ ४० ॥
जस्स य दिस-पज्जन्ते अहरिअ-जोण्हो कुरो जसोकेरो ।
अच्छेर-निरीहाण वि अच्छरिअं किं व न करेइ ॥ ४१ ॥

गउअ । "गवये व." [५४] इति वस्य उत्वम् ॥

३९. असौ प्रथमः धनुपि प्रथमः छुरिकायां प्रथमश्च । सेहेति देश्यः प्रासवाची । तस्मिन् प्रथमश्च । असिधनुश्छुरिकासेल्लशब्दैः एतत्क्रियापटवः सुभटा उच्यन्ते । तेषु प्रवरः स्वघातदानपरघात-वञ्चनादिक्रियानिपुणत्वात् । किं बहुना यः सकलकलाकलापस्य अभिज्ञो विचक्षणः । किंवत् सर्वज्ञ इव सर्ववेदीव ॥

पुढुमो पुढमो पढुमो पढमो । "प्रथमे पथोर्वा" [५५] इति पथयोः अस्य युगपत् क्रमेण च उर्वा ॥
सव्वण्णु । अहिण्णू । "ज्ञो णत्वेभिज्ञादौ" [५६] इति ज्ञस्य णत्वे ज्ञस्यैव अत उत्वम् ॥

४०. आस्तां तावत् स्वावासकमलादौ अस्थिरा । सौन्दर्यगृहे हरेः उरःशय्यायामपि [सदा] श्रीः अस्थिरा चञ्चला । परं सापि गुणा एव यशःप्रसूनजनकत्वाद् वल्लयः वल्ल्यः तासां तरुरिव आधारभूतत्वात् । तस्य यस्य भूवल्लिपर्यन्ते सकले पृथ्वीवलये स्थिरा आसीत् । चापलम् अपास्य अस्मिन् गुणगणनिधौ लक्ष्मीः स्थितेति भावः ॥

सेज्जा । सुन्देर । "एच्छय्यादौ" [५७] इति आदेरस्य एत्वम् ॥

४१. पूर्ववर्णनापेक्षया चः समुच्चये । यस्य दिक्पर्यन्ते अधरितः पराभूतो ज्योत्स्नायाश्चन्द्रिकाया उत्करो राशिर्येन स यशउत्करो

जो आसि बम्भचेर-ग्गहण गुरू पइ-विओअ-विहुरस्स ।
रण्णन्तग्गय-रिउ-अन्तेउर-पोम्मच्छि-लोअस्स ॥ ४२ ॥
पय-पउम-नमोक्कारे परोप्परामद्द-तुट्ट-हारेहिं ।
जस्स सहाइ निवेहिं ओप्पिअमिव मुत्तिआहरणं ॥ ४३ ॥
जत्थप्पिअ-भू-भारो सुवइ फणी – तत्थ सोवइ हरी वि ।
जोन्नत्थ-दिन्न-भारो न उणाइ सयालुओ न उणा ॥ ४४ ॥

न केवलम् अन्येपाम् आश्चर्ये कौतुके निरीहाः सद्ध्यानविन्यस्त-चित्तत्वात् निराकाङ्क्षास्तेषां योगिनामपि आश्चर्यं किमिव न करोति । किं तु सर्वं आश्चर्यं वितनोतीत्यर्थः ॥

वेल्लि वल्लि । पेरन्ते पज्जन्ते । जोण्होक्करो जसोकेरो । अच्छेर अच्छारिअं । "वल्लयुत्करपर्यन्ताश्चर्ये वा" [५८] इति वा आदेरस्य एत्वम् ॥

४२. ब्रह्मचर्यं मैथुनसेवनविरमणं तस्य ग्राहणे अङ्गीकारणे गुरुः दीक्षादाता य आसीत् पत्युर्वियोगेन विधुरस्य संकष्टस्य[1] अरण्यस्य अन्तः मध्ये गतो यो रिपूणाम् अन्तःपुरपद्माक्षीलोकः अवरोधवधूजनस्तस्य । सर्वशत्रूणां निर्मूलकापंकपितत्वात् तन्नायिकानां[2] ब्रह्मचर्यदीक्षादानम् । ब्रह्मचारी प्रायः अरण्यचारी भवतीत्युक्तिलेशः ॥

बम्भचेर । "ब्रह्मचर्ये चः" [५९] इति चस्यात एत्वम् ॥

अन्तेउर । "तोन्तरि" [६०] इति तस्यात एत्वम् । क्वचिन्न । रण्णन्तग्गय ॥

४३. पदपद्मनमस्कारे । क्रियमाणे इति शेषः । परस्परामर्देन अन्योन्यसंघर्षेण त्रुटिताः स्रस्ता ये हारास्तैः कृत्वा नृपैर्यस्य सभाया मौक्तिकाभरणमिव अर्पितं दत्तम् ॥

पोम्म । "ओत् पद्मे" [६१] इति आदेरतः ओत्वम् । "पद्मछद्म०" [२.११२] इति विश्लेषे न । पउम ॥

नमोक्कारे । परोप्परा । "नमस्कारपरस्परे द्वितीयस्य" [६२] इति अत ओत्वम् ॥

४४. यत्र अर्पितभूभारः स्वपिति फणी शेषः तत्रैव अर्पितभूभारः

[1] D कष्टस्य. [2] D नायिकाना.

जइ सक्को न उण नरो न उणो नारायणो वि सारिच्छो।
जस्स पुणाइ पुणाइ वि भुवणाभय-दाण ललिअस्स ॥ ४५ ॥
रण्णे अरण्ण साणाउलम्मि लाऊ-लया-हरे रुन्नं।
जस्सारि-वहूहि तहा अलाउ कुल्ला जह कयाओ ॥ ४६ ॥
उक्खय-संठविअ-निवेण जेण वच्छत्थलाओ हरिणो वि।
उक्खाया भुय-दण्डे निअम्मि संठाविया लच्छी ॥ ४७ ॥

हरिरपि स्वपिति। यः पुनः अन्यत्र न दत्तो भारः अर्थाद् भुव एव येन। अत एव च न पुनः शयालु' आलस्योपहतः॥

ओप्पिअ अप्पिअ "वार्पो" [६३] इति अर्पयतेः आदेरस्य ओत्वं वा॥
सुवइ सोवइ। "स्वपावुच" [६४] इति स्वपितौ आदेरस्य ओत् उच॥

४५. यस्य यदि शक्रः इन्द्रः सदृक्षो न। पुनः नरः अर्जुनो न पुनर्नारायणोपि। कुतः पुन.पुनरपि भूयोभूयोपि भुवनस्य सकलसचराचरलोकस्य यद् अभयदानं वधनिवर्तनं तेन ललितस्य मनोहरस्य। यदीति संभावने। शौर्यादिभि. इन्द्रो यत्तुल्यः संभाव्यते। परमार्थतस्तु सोप्यविरतत्वाद् यत्तुल्यो नास्तीत्यर्थः॥

न उणाइ न उणा। "नात् पुनर्यादाइ वा" [६५] इति आदेरस्य आ आइ इत्यादेशौ वा। पक्षे। न उण न उणो। केवलस्यापि दृश्यते। पुणाइ॥

४६. अरण्ये अरण्यश्वभिः वृकैः आकुले संकीर्णे अलावूलतागृहे तुम्बिनीवल्लिमण्डपे यस्य अरिवधूभिः तथा अनवरताश्रुपनीपातनेन रुदितं यथा अलाबूनां नैराय कुल्या. सारणयः कृताः॥

रण्णे अरण्ण। लाऊ अलाउ। "वालाब्वरण्ये लुक्" [६६] इति आदेर्लुक्॥

४७. अहम् एवं मन्ये। येन हरेरपि वक्ष'स्थलात् लक्ष्मीः उत्खाता उत्पाटिता ततो निजभुजादण्डे संस्थापिता। कथम् एवं ज्ञायत इति विशेषणद्वारेण हेतुमाह। पूर्वम् उत्खाता. अभक्तत्वात् स्वस्थानाच्च्याविताः

१ D omits गृहे...। "वालाब्व"

अह कइया वि दिवा-मुह-पत्थावे पत्थवोचिअं तस्स ।
अणुरागागय-मरहट्ठमाइ-सूएहिँ इअ पढिअं ॥ ४८ ॥
हय-मसल-तम-पसरो सइ वामो पंसुलाण पच्चूसो ।
सामय-त्र्यय-दिन्नग्घो तं व पयट्टो सया पुन्नो ॥ ४९ ॥

पश्चात् सेवावशवर्तित्वात् संस्थापिता देशाधिपत्ये नियोजिता नृपा अनेनेति नृपस्वभावेन हरेः प्रियाया अपि इत्थं संभाव्यते । कविमार्गे विभूतिहरिप्रिययोरैक्याद् एवं वर्णना ॥

तह्रा जह । उक्खय उक्खाया । सठविअ संठाविया । "वाव्ययोत्खातादा वदातः" [६०] इति आदेराकारस्य अत् वा ॥

४८. अथ अनन्तरं कदाचिदपि कस्मिंश्चित् काले दिवामुखप्रस्तावे वासरप्रारम्भावसरे तस्य श्रीकुमारपालभूपालस्य प्रस्तावोचितं प्रभात-पठनीयम् अनुरागेण अत्यद्भुतगुणगणश्रवणसंजातदर्शनस्नेहेन आगता ये ते च ते महाराष्ट्रः आदिर्येषां देशानां ते तथा तेषां सूताश्च मङ्गल-पाठकास्तैः इति वक्ष्यमाणं पठिलम् ॥

पत्थावे पत्थवो । "घञ्वृद्धेर्वा" [६८] इति आदेराकारस्य अत् वा । क्वचिन्न । अणुरागा ॥

मरहट्ठ । "महाराष्ट्रे" [ ६९ ] इति आदेराकारस्य अत् । वक्रादित्वाद् अनुस्वारः । बाहुलकाद् अन्यस्यापि व्यञ्जनस्य मः ॥

४९. अथ द्वाविंशत्या गाथाभिः सूतोक्तम् एवाह । हतः नवदिन-करकरसंपर्काद् ध्वस्तः मांसलः सूचिभेद्यस्तम.प्रसर. तिमिरप्रवृत्ति-र्येन सदा वामः विटादिगृहगतिनिषेधकत्वेन प्रतिकूलः । कासाम् । पांसुलानां स्वैरिणीनाम् । श्यामाकपयोभिः आरण्यव्रीहिजलैः दत्तः त्रिःप्रदक्षिणापूर्वं मार्तण्डमण्डलं प्रति क्षिप्त. अर्घः पूजा यत्र । प्रत्यूषः अहर्मुखम् । पुण्य. सकललोकलोचनान्ध्यपटलविध्वंसकत्वेन प्रशस्यः

१ B पुसलाण. २ BC पाठितम्. ३ BC °राकार· स्यात् for °राकारस्य अत्. ४ D द्वाविंशतिगाथाभि.

दिसे-कुप्पिसन्त-जस-भर देवय-हरए तुमं सकुप्पासा ।
दिक्खाइरिआ सिक्खायरिएहि सहोवसप्पन्ति ॥ ५० ॥
गय-थीण-तिमिर-केसे खल्लीडे नह-सिरम्मि संवुत्ते ।
थुवआ हवन्ति लोआ एण्हिं सुण्हाल-चिन्धस्स ॥ ५१ ॥

प्रवृत्तः संजात. । त्वमिवेति । भवानप्येवंविध. । जिनवचनावबोधाद् ध्वस्तनिबिडाज्ञानप्रवृत्ति. । पांशुलानां पाप्मिनां सदा वामः, दुःखदायित्वात् । सामजनजैः हस्तिघटाभिर्दत्त. अर्घ. उपायनं यस्मै । सदाचारनिरतत्वात् पवित्रश्चेति ॥

मसँल । पंसुला । "मासादिष्वनुस्वारे" [७०] इति मासप्रकारेष्वनुस्वारे सति आदेरातोऽत् ॥

सामय । "श्यामाके म." [७१] इति मस्य आत अत् ॥

७०. दिक्षु कूर्पास कञ्चुलिका तद्वद् आचरन् यशोभरो यस्य स तथा तस्यामन्त्रणम् । हे दिक्कूर्पासयशोभर देवतागृहे सकूर्पासा.सकञ्चुका दीक्षाचार्या बटुककरणादिसंस्कारकारिणः शिक्षाचार्यैः शास्त्रपाठकैः सह त्वाम् उपसर्पन्ति । आशीर्वादप्रदानार्थं समीपम् आगच्छन्ति । इदानीम् इति प्रक्रमाज्ज्ञेयम् । एवम् अन्यत्रापि ॥

सह सया । कुप्पिस कुप्पासा । "इः सदादौ वा" [७२] इति आत इत्व वा ।

दिक्खाइरिआ सिक्खायरिएहि । "आचार्ये चोऽच" [७३] इति चस्य आत इत्वम् अत्वं च ॥

५१. गतं नष्टं स्त्यानं घनं तिमिरमेव श्यामवर्णत्वात् केशा यत्र । अत एव खल्वाटे खलतौ नभ एव सकललोकस्य उपरिवर्तित्वात् शिरस्तस्मिन संवृत्ते जाते सति सास्नालचिह्नस्य वृषभध्वजस्य भगवत आदिनाथस्य शूलिनश्च इदानीं प्रत्यूषे लोका आर्हतमाहेश्वराः स्तावकाः स्तोतारो भवन्ति ॥

थीण । खल्लीडे । "ई स्त्यानखल्वाटे" [७४] इति आदेरातः ई[5]॥

थुवआ । सुण्हाल । "उः सास्नास्तावके" [७५] इति आदेरातः उत्वम् ॥

१ D दिसि. २ BC वट्टंति ३ D omits मसल .°रातोत्. ४ BC °सरकारिण . ५ D omits ई रात

गयणे तुहिणोसारिणि तुहिणासारं पडन्तमगणन्ता ।
उट्ठन्ति वहूओ पुरो अज्जूणं विणय-गेज्झाण ॥ ५२ ॥
कुट्टिम-चउ-वारेसुं सतिण्हमिण्हिं कुणन्ति रमणीओ ।
देरागय-पारावय-रावोट्ठिअ-पिअ-परीरम्भं ॥ ५३ ॥
पारेवय-मणिएहिं तेत्तिअमेत्तं रमेसु वेसाओ ।
तेत्तिअमत्तं मग्गन्ति चलिअ-मेत्ते भुअङ्गम्मि ॥ ५४ ॥

५२. तुहिनस्य प्रालेयस्य आसारो वेगवद्वर्षो विद्यते यस्मिन् एवंभूते गगने सति तुहिनासारं पतन्तं शरीरे लगन्तम् अगणयन्त्यः अमन्यमाना विनयग्राह्याणां भक्त्या आवर्जनीयानाम् आर्याणां श्वश्रूणां पुरः पूर्वं वध्वः उत्तिष्ठन्ति ॥

तुहिणोसारिणि तुहिणासारं । "ऊद् वासारे" [७६] इति आदेरात् ऊत् वा ॥
अज्जूणं । "आर्याया र्यः श्वश्र्वाम्" [७७] इति र्यस्य आत ऊः ॥
गेज्झाण । "एद् ग्राह्ये" [७८] इति एत्वम् ॥

५३. कुट्टिमानि मण्यादिभिर्बद्धतलानि यानि चतुर्द्वाराणि चतुर्मुखगृहविशेषास्तेषु सतृष्णं दिने आशङ्कितभाविबहुविरहत्वेन मतृषं यथा भवति एवम् इदानीं प्रातःक्षणे द्वारेषु आगता ये पारापतास्तेषां रावैः शब्दैरुत्थिता जागरिता ये प्रियास्तेषां परीरम्भम् आलिङ्गनं रमण्यः कुर्वन्ति ॥

देरा । "द्वारे वा" [७९] इति आत एत्वं वा । पक्षे वारे ॥ दुआरं । दारं इति प्रयोगद्वयम् अनुक्तमपि ज्ञेयम् ॥

५४. पारापतमणितानीव कलरवकूजितानीव यानि मणितानि रतकूजितानि तैः कृत्वा यावान् प्रतिज्ञातः कालस्तावन्मात्रं वेश्याः पण्याङ्गना अरंसिपत अक्रीडिषुः । भुजङ्गे विटे चलितमात्रे गमनोन्मुख एव तावन्मात्रं प्रतिज्ञातकालमनितं मार्गयन्ति गवेषयन्ति ॥ पूर्वार्धे जित्तिअमित्तं इति तु रम्यः पाठः ॥

१ B °गाराणि. २ D रमिमु. ३ B °सारानि. ४ BC °तलानि चहु°. ५ D omits दिने......°रुत्थिता.

अद्द-नहङ्काण पियाण अल्ल-आलावयाण विलयाओ ।
उल्लन्ति अङ्कमंसुअ-ओल्लीहिँ ओल्ल नक्खङ्का ॥ ५५ ॥
निअ-ठाण-मीलणं पिक्खिऊण चिन्ता-परा मिउल्लावा ।
नीलुप्पल-पेण्डे पिण्डिऊण भसला रुअन्ति व्व ॥ ५६ ॥

पारावय पारेवय । "पारापते रो वा" [८०] इति रस्य आत एत्वं वा ॥

तेत्तिअमेत्तं तेत्तिअमत्तं । "मात्रटि वा" [ ८१ ] इति आत एत्वं वा । बाहुलकात् क्वचिन्मात्रशब्देपि । चालिअ-मेत्ते ॥

५५. आर्द्रास्तत्कालदत्तत्वात् सरसा नखाङ्का कररुहव्रणानि येषाम् आर्द्राः स्नेहमिश्रा आलापाः परस्परोक्तयो येषां ते तथा । तेषां प्रियाणाम् अङ्कम् उत्सङ्गम् आर्द्रनखाङ्का वनिता योषितः अश्रालिभि- नेत्रवाष्पपङ्क्तिभिः आर्द्रयन्ति आर्द्रं कुर्वन्ति । सर्वरात्रं सुरतादिसुखनिमग्ना वयम् इदानीं च तदुच्छेदजनक प्रियविप्रयोगो भवितेति दुःखाद् रुदन्तीत्यर्थः ॥

उल्लन्ति ओल्ल । "उदोद्वार्द्रे" [८२] इति आदेरातः उत् ओच वा पक्षे अद्द । अल्ल ॥

ओल्लीहिं । "ओदाल्यां पङ्क्तौ" [८३] इति आत ओत्वम् ॥

५६. प्रातः संकोचान् प्रागेव नीलोत्पलेभ्यो निर्गत्य रारट्यमानान् तत्कोशस्थांश्च भ्रमरान् वीक्ष्य कविः एवम् उत्प्रेक्षमानः प्राह । निजस्थानमीलनं स्वावाससंकोचं प्रेक्ष्य विलोक्य चिन्तापराः क वयम् इदानीं निराश्रयाः स्थास्याम इत्यादिविकल्पसंकल्पनिमग्नाः । मृदु मरुट्त्वात् कलः उल्लापः अन्योन्यजल्पनं येषां ते तथा सन्तो भसला नीलोत्पलपिण्डे असितोत्पलषण्डे पिण्डयित्वा मिलित्वा रुदन्तीव । येषां किल राजादिना गृहं मुष्यते तेपि मिलित्वा रुदन्तीत्युक्तिलेशः ॥

मिउल्लावा "ह्रस्वः संयोगे" [८४] इति यथादर्शनं ह्रस्वः ॥

किंसुअ-कुसुमायम्बो केंसुअ-दल-सामलं विगय-मेरं ।
दलिऊण अन्धयारं दंसइ पुहवीइ पहमरुणो ॥ ५७ ॥
काउं महाविलं अतम मूसयं कय-पडंसुए सूरे ।
लक्ख-हलद्द वहेडय-रत्त व्व करा विअम्भन्ति ॥ ५८ ॥
विरइअ हलद्दि कन्दाभ-दीवओ नव हलिद्दि-रत्त-करो ।
अहलिद्दा-राओ कामउ व्व पुव्वं भअइ सूरो ॥ ५९ ॥

पेण्डे पिण्डिऊण । " इत एद्वा " इति आदेरिकारस्य एत् वा । क्वचिन्न । चिन्ता ॥

५७. किंशुकदलश्यामलं पलाशपलाशनीलं विगतमेरं सर्वत्र उच्छृङ्खलम् अन्धकारं दलयित्वा विध्वस्य किंशुककुसुमानीव आताम्रः आरक्तः अरुणः सूर्यः तत्सारथिर्वा पृथिव्याः पन्थानं दर्शयति ॥

किंसुअ केंसुअ । " किंशुके वा " [८६] इति आदेरितः एत्त्वं वा ॥
मेरं । " मिरायाम् " [८७] इति इत एत्वम् ॥

५८. महाविलं कन्दरादिकम् अविद्यमानस्तम एव मूषिको यत्र तत् यथाभूतं कर्तुं कृतप्रतिश्रुति विहितप्रतिज्ञे सूर्ये सति करा अंशवो विजृम्भन्ते ऊर्ध्वाधः प्रसरन्ति । कीदृशाः । लाक्षाहरिद्राविभीतकै रक्ता इव ॥ प्रातःक्षणे दिनकरकराणां क्रमेण तथाभावाद् इत्थम् उत्प्रेक्षा ॥

५९. विरचिता विहिता विष्वग्विसारिप्रभारहितत्वेन हरिद्राकन्दाभा दीपा येन । नवहरिद्रया रक्ता इव करा यस्य स सूरः पूर्वां भजति । अहरिद्रारागो निविडस्नेहः कामुक इव । तस्मिन्नप्यागच्छति कान्तया दीपः क्रियते । कुङ्कुमादिना आरक्तकरश्च स भवति । अत्र कामुक इत्युपमानात् पूर्वस्याः कान्तात्वं निरूप्यते ॥

पुहवीइ । पह । मूसय । पडंसुए । हलद्द । हलद्दि । वहेडय । "पथिपृथिवी°"

१ D °हलिद्दि°. २ D °हलद्द°. ३ BC omit अ°. ४ BC °स्नेहकामुक.

पिक्कुअं व निवडइ पिक्किुअ-धूसरो ससी एस ।
सिढिल-करो सढिलङ्गो तित्तिर मइल-प्फुड कलङ्को ॥ ६० ॥
इअ आसंसन्ति नि-सीह सिंहदत्ताइणो दिआ तुज्झ ।
वीसं तीसं कप्पे जयसु दुजीहारि-नीसङ्क ॥ ६१ ॥
अदुइअ-रवि-भा-विहए गयणे जह पाइयम्मि दो-वयणं ।
कत्थ वि नत्थि तमो अहि-निवास लोअम्मि व णुमन्तो ॥६२॥

इत्यादिना [ ८८ ] आदेरितः अकारः । हरिद्राया विकल्प इत्यन्ये । हलिद्दी । अहलिद्दा ॥

६०. शिथिलकरो मन्दकिरणः शिथिलाङ्गो मन्दविम्बः । तित्तिरि-लावकः । तद्वन्मलिनः स्फुटः कलङ्को यस्य । पक्वेक्षुदवत् परिपाकप्राप्त-तापसतरुफलवद् धूसरो धूम्रः एष शशी पक्वेक्षुदवत् निपतति अस्ताचले स्रंसते ॥

पिक्कुअं पिक्किुअ । सिढिल सढिल । " शिथिलेङ्गुदे वा " [ ८९ ] इति आदेरितः अद् वा ॥
तित्तिर । " तित्तिरौ रः" [९०] इति रस्य इतः अत् ॥

६१. हे नृसिंह नरोत्तम सिंहदत्तादयो द्विजाः तव इति आशंसन्ति आशीर्वादं कुर्वन्ति । तदेवाह । हे द्विजिह्वारिर्गरुडस्तद्वद् निःशङ्क निर्भय त्वं विंशतिं त्रिंशतं कल्पान् जय । कल्पो देवयुग-सहस्रद्वयम् ॥

इअ । " इतौ तो वाक्यादौ " [९१] इति इतिशब्दस्य इतः अत् ॥
निसीह । वीसं । तीसं । जीहा । " ईर्जिह्वा° " इत्यादिना [९२] जिह्वादिषु इकारस्य स्थाने ईः । बाहुलकात् क्वचिन्न । सिंहदत्त ॥
नीसङ्क । " लुकि निरः" [९३] इति रलोपे इत ईः ॥

६२. यथा प्राकृते वापि द्विवचनं नास्ति । " द्विवचनस्य बहु-

१ B C निग्गुअ.

जरढोच्छु-रुई चन्दो निस-पिअ-पावासुओ व्व नो सहइ ।
सच-जैहुट्ठिल सूरे भू-सग्ग-दुहाइअ-करोहे ॥ ६३ ॥
धम्मे जहिट्ठिला दोहाइअ-पवहा दुहा वि मल-पटॅलं ।
ओज्झर-निज्झॅरिणीसुं ण्हाऊण खिवन्ति वम्हाणॉ ॥ ६४ ॥

वचनम् '' [३. १३०] इति वचनात् । तथा अद्वितीयरविमाद्वितीये निरुपमभास्करप्रभायुक्ते गगने सति तमः क्वापि नास्ति । तिर्यगूर्ध्वादिदेशेषु तद् अपश्यन् कविरेवम् ऊहते । अहीनां सर्पाणां वासे लोके पाताल इव निमग्नं प्रविष्टम् ॥

दुजीहा । णुमन्नो । "द्विन्योरुत्''[९४]इति द्विनिशब्दयोः इत उत् ॥ बाहुलकात् क्वचिद् वा । अदुइअ । बिइए ॥ क्वचिन्न । दिआ । निवाय॥ओत्वम्।दो-वयणम्॥

६३. हे सत्ययुधिष्ठिर भूस्वर्गयोर्द्विधाकृतः पञ्चशत्या पञ्चशत्या पृथग्विहितः करौघो येन तस्मिन् सूरे सति जरठः परिपक्वो य इक्षुस्तद्वद् रुचिर्यस्य स तथाभूतश्चन्द्रो नो राजते । अत उत्प्रेक्ष्यते । निशैव प्रिया ततः प्रवासीव वियुक्त इव । अन्योपि यः प्रियावियुक्तः स विच्छायो भवति ॥

जरढोच्छु । पावासुओ । "प्रवासीक्षौ" [९५] इति आदेरित उत्वम् ॥

६४. धर्मे सदाचारे युधिष्ठिराः द्विधाकृतो मध्यप्रवेशेन खण्डितः प्रवाहः ओघो यैस्ते निर्झरनिर्झरिर्णीषु झरनदीषु स्नात्वा शौचं कृत्वा द्विधापि बाह्याभ्यन्तरभेदेन द्विप्रकारमपि मलपटलं रजःस्तोमं ब्राह्मणाः क्षिपन्ति ॥

जहुट्ठिल जहिट्ठिल । "युधिष्ठिरे वा" [९६] इति आदेरित उत्वम् ॥

दुहाइअ दोहाइअ । "ओच्च द्विधाकृगः" [९७] इति इत ओत्वम् उत्वं च॥ क्वचित् केवलस्यापि । दुहा ॥

ओज्झर निज्झर । "वा निर्झरे ना" [९८] इति नेन सह इत ओत्वं वा॥

१ BC °रुई. २ BC जुहिट्ठिल. ३ D पडलं. ४ B निज्झरणी°. ५ B बम्हाण C तम्हाणा; ६ BC °निर्झरणीषु.

हय-कम्हार-हरडई-चिक्किण-तिमिरस्स गहिय-पाणीया ।
पाणिय-तडम्मि विप्पा अजुण्ण-सूरस्स देन्तग्घं ॥ ६५ ॥
जिण्ण-तमं मल-हीणा अहूण-तेअं विहीण-अन्न-पहं ।
अविहूणं तूह-दिआ थुणन्ति तित्थे रविं तं व ॥ ६६ ॥
पेऊसासण-साभिय-दिस-आमेले रविम्मि उअ तारा ।
केरिस-एरिसिआओ वहेडयाभाओं नह-पेढे ॥ ६७ ॥

६५. हतं विदारितं कश्मीराणां हरीतकीव चिक्कणं निबिडं तिमिरं येन तस्य । अजीर्णो नवः स चासौ सूर्यश्च तस्य पानीयस्य निर्झरनद्यादिसंबन्धिजलस्य यत् तटं तस्मिन् । गृहीतं करपुटे कृतं पानीयं यैस्ते विप्रा अर्घम् अर्घाञ्जलिं ददति त्रि-प्रदक्षिणापूर्वं वितरन्ति ॥

हरडई । " हरीतक्याम् ईतोऽत् " [ ९९ ] इति आदेरीतः अत् ॥

कम्हार । " आत् कश्मीरे " [ १०० ] इति ईत आत् ॥

पाणिअ । " पानीयादिष्वित् " [ १०१ ] इति ईत इत् ॥ क्वचिद् वा । पाणीय ॥

६६. जीर्णं ध्वस्तं तमस्तिमिरम् अज्ञानं च येन । अविहीनतेजसम् अन्यूनद्युतिम् उग्रप्रतापं च । विहीनः सन्मार्गप्रदर्शनेन विध्वस्तः अन्यो विपरीतः पन्था मार्गः अन्यायश्च येन । अविहीनम् अत्युच्चं पूर्वाचलचूलासंस्थं सकलभूपालप्रवरं च । तीर्थे आदित्यालये नद्याद्यवतारे वा तीर्थस्य तीर्थभूता वा द्विजा रविं त्वामिव स्तुवन्ति । रविं त्वां च स्तुवन्तीत्यर्थः ॥

अजुण्ण । "उर्जीर्णे" [१०२] इति ईत उत् ॥ क्वचिन्न । जिण्ण ॥

हीण अहूण । विहीण अविहूणं । " ऊ हीनविहीने वा " [ १०३ ] इति ईत ऊत्वं वा ॥

तूह । "तीर्थे हे" [१०४] इति ईत ऊः । हे इति किम् । तित्थे ॥

६७. पीयूषाशना देवास्तेषां स्वामी इन्द्रः तस्य दिक् पूर्वा तस्या आपीडे शेखरत्वेन अवतंसे रवौ सति उअ इति पश्य । विभीतक-

1 BC केरिसएरिसिआओ. 2 D omits त्वामिव...रविं.

चत्तूण नेड पीढं नीड घरा मउलिआ मही मउड ।
विद्दाय निद्दमुड्डन्ति घरोवरिं रुक्ख-अवरिं च ॥ ६८ ॥
गरुआ वि गुरुअ भिउडीहिँ वार वालेहि पडिखलिज्जन्ता ।
नहु-पोरिसा नि पुरिसा निरुद्ध छीआ इहं एन्ति ॥ ६९ ॥

वद् आभा सादृश्य यासा तास्तारा नभ पीठे कीदृश्य ईदृश्य । न कीदृश्योपीत्यर्थ ॥

पेऊसा । आमेले । केरिस । एरिसिआओ । नहेडया । "एत् पीयूष°" [ १०५ ] इत्यादिना एषु ईत एत्वम् ॥

६८ हे पृथ्वीमुकुट पूर्वं मुकुलिता रात्रौ एकत्र स्थितास्ततो नीडपीठ कुलायतल त्यक्त्वा नीडगृहा पक्षिणो विद्रुतनिद्र गततन्द्र यथा भवति एवम् उड्डीयन्ते गृहस्योपरि वृक्षस्योपरि च ॥

पढे पीढ । नेड नीड । "नीडपीठे वा" [ १०६ ] इति ईत एत्वम् ॥

मउलिआ । मउड । "उतो मुकुलादिष्वत्" [ १०७ ] इति एषु आदे रुत अत्वम् ॥ क्वचिद् आत्वमपि । विद्दाय ॥

घरोवरिं अवरिं । "वोपरौ" [ १०८ ] इति उत अत् वा ॥

६९ गुरुकभ्रुकुटिभिर्द्वारपालै प्रतीहारै प्रतिस्खल्यमाना निरुध्यमाना गुरुका अपि कुङ्कणादिदेशस्वामिनोपि बहुपौरुषा अपि प्रचुरपराक्रमा अपि पुरुषा मा भूत् अस्मत्स्वामिन कापि कार्ये अशकुनम् इति निरुद्धक्षुता इह युष्मत्पादपद्मान्तिके आयन्ति आगच्छन्ति ॥

गरुआ गुरुअ । "गुरौ के वा" [ १०९ ] इति स्वार्थिके के आदेरुत अत् वा ॥

भिउडीहिँ । "इर्भ्रुकुटौ" [ ११० ] इति आदेरुत इ ॥

पोरिसा । पुरिसा । "पुरुषे रो" [ १११ ] इति रोरुत इत्वम् ॥

छीआ । "ई क्षुते" [ ११२ ] इति आदेरुत ई ॥

---

१ B पुरिसा रुद्ध च्छीआ २ D ईदृश्योपीत्यर्थ

मुसल-धर-बाहु-मूसल रइ-सुहव-सुहय तुज्झ मुह-कमलं ।
दट्ठुं ऊसुअ नयणा पुणो पुणो ऊससन्ति निवा ॥ ७० ॥
अणउच्छन्नोच्छाहो रिउ-दुसहो दूसह-प्पयावेण ।
वोक्कन्त-निद्द-पसरो अह राया ओट्ठिओ सयणा ॥ ७१ ॥
कोऊहल-कुसलेहिं कुऊहलत्थेसु कोउहल्ली वि ।
सण्हाण वि सुण्हयरं परमप्पं थुणिय सव्वण्णुं ॥ ७२ ॥
अमलोव्वीढ-दुअल्लो उव्वूढ-दूऊल-दण्डि-दिन्न-करो ।
सो अत्थाणि पत्तो दुगुल्ल-उल्लोअ-सोहिल्लं ॥ ७३ ॥

७०. मुसलधरबाहू इव बाहुमुसलौ यस्य तस्य आमन्त्रणम् । तथा रतिसुभग. कन्दर्प. तद्वत्सुभग सकललोकप्रिय हे राजन् तव मुखकमलं दृष्ट्वा उत्सुकानि सोत्कण्ठानि नयनानि येषां ते नृपा पुन पुन उच्छ्वसन्ति भूयोभूय पुलकिताङ्गा भवन्ति ॥

मुसल मूसल । सुहव सुहय । "ऊत् सुभग०" इत्यादिना [ ११३ ] आदेरुत ऊद् वा ॥

७१. अनुच्छिन्नोत्साहः अखण्डितोद्यम. दु.सहप्रतापेन उग्रतेजसा रिपुदुःसहः अथ एवंमङ्गलपाठप्रपठितानन्तरं व्युत्क्रान्तनिद्राप्रसरो जागरित. सन् राजा शयनाद् उत्थित ॥

ऊसुअ । ऊससन्ति । "अनुत्साहोत्सन्ने त्सच्छे" [ ११४ ] इति आदेरुत ऊत् ॥ अनुत्साहोत्सन्न इति किम् । उच्छन्नोच्छाहो ॥

दुसहो दूसह । "लुंकि दुरो वा" [११५] इति रलोपे उत उत् वा ॥

वोक्कन्त । ओट्ठिओ । "ओत् संयोगे" [११६] इति सयोगे परे आदेरुत ओत्वम् ॥

७२. ७३. अधुना राज्ञः प्रातस्त्यं कृत्यम् आह । युग्मम् । कुतू-

[1] B is wanting in the commentary on the two couplets from कुतूहलकुशलैः up to करो यस्येति.

**तस्स भुमयाइ वसगा अवाउला पेसणिक्क-हणुमन्ता ।**
**वल-कण्डुअमाण-भुआ पुरो निविट्ठा निवा नमिरा ॥७४॥**
**पासम्मि ठिआ तस्स य महूअ-गोरीओ महुअ-महुर-गिरा ।**
**वज्जन्त-कणय-नूउर-मणि-नेउर-वइर-निउराओ ॥ ७५ ॥**

हल्कुशलैः कौतुकनिपुणैः कृत्वा कुतूहलार्थेषु कुतुकवस्तुषु कुतूहल्यपि सूक्ष्माणां परमाण्वादीनां मध्येपि सूक्ष्मतरं दुर्ज्ञेयत्वाद् अणुतरं सर्वज्ञं लोकालोकपदार्थसार्थपरिज्ञानचतुरं परमात्मानं स्तुत्वा स कुमारपाल-भूपः दुकूलानाम् उल्लोचैः शोभावतीम् आस्थानीं प्राप्तः । किंभूतः सन् । अमलानि उज्ज्वलानि उव्यूढानि परिहितानि दुकूलानि सितपट्टांशुकानि येन उव्यूढदुकूलेन दण्डिना दत्तो गमनकाले वितीर्णः करो यस्येति ॥

कोऊहल कुऊहल कोउहल्लो । "कुतूहले वा ह्रस्वश्च" [११७] इति उत ओत् वा तत्संनियोगे ह्रस्वश्च वा ॥

सण्हाण । सुण्ह । "अदूतः सूक्ष्मे वा"[११८] इति ऊतः अत् वा ॥ आर्षे सुहुमेति ज्ञेयम् ॥

दुअल्लो दुऊल । "दुकूले वा लश्च द्विः" [११९] इति ऊकारस्य अत्वं वा तत्संनियोगे च लस्य द्विः ॥ [आर्षे] । दुगुल्ल ॥

अमलोव्वीढ उव्वूढ । "ईर्वोद्व्यूढे" [ १२० ] इति ऊत ईत्वं वा ॥

७४. तस्य राज्ञो भ्रुवो वशगा । भ्रूक्षेपमात्रेण समस्तकार्यसाधका इत्यर्थः । अवातूलाः युक्तकारिणः । प्रेषणे स्वामिनिरोपणे एके अद्वितीया हनूमन्तः । वलेन कण्डूयमानौ कण्डूलौ । सदर्पावित्यर्थः । तथाभूतौ भुजौ येषां ते नम्रा नृपाः पुरः अग्रे निविष्टाः ।

· भुमयाइ अवाउला । हणुमन्ता । कण्डुअमाण । "उर्भ्रूह०" [१२१] इत्यादिना ऊत उत्वम् ॥

७५., चतुर्भिः कलापकम् । चामरदर्पणहस्ता वारयुवत्यस्तस्य राज्ञः

---

१ BD नविरा. २ BC °पदार्थपरि°. ३ BC शत°. ४ D omits 'ह्रस्वश्च...लस्य द्विः'. ५ D °निरोपे.

कोहण्डि-कुसुम-मउचीओं काम-तोणीर-थोर-कवरीओ ।
निम्मोल्लङ्गय-मण्डिअ-कोप्परया गहिअ-तम्बोला ॥ ७६ ॥
विब्भम-गलोइ-मेधा रम्भा-थोणा-निहोरु-थूणाओ ।
तोणीहविअ सयं चिअ रइ-वइणो तूण-छड्डवणा ॥ ७७ ॥
सरउग्गय-मय-लञ्छण-सरिच्छ-वयणाओं घार-जुवईओ ।
चामर-दप्पण-हत्था अकास-कन्ती किसङ्गीओ ॥ ७८ ॥

पार्श्वे स्थिताः । किंभूताः । मधूकवद् गुडपुष्पवद् गौर्यः गौराङ्ग्यः । मधूकवन्मधुरा मनोज्ञा गीर्यासाम् । वदन्तौ चङ्क्रमणवशात् सिञ्जानौ कनकस्य नूपुरौ मञ्जीरौ मणयः पद्मरागाद्याः तत्खचितौ नूपुरौ वज्राणि हीरकाणि तत्खचितौ च नूपुरौ यासाम् ॥

७६. *कूष्माण्डीकुसुमवद् मृद्व्यः कोमलाङ्ग्यः । कामतूणीरवत्* तद्बाणानां पुष्पाणां तत्र प्रक्षेपात् स्थूलाः कवर्यः घना वेणयो यासाम् । निर्मूल्याङ्गदमण्डितकूर्पराः अनर्घ्यकेयूरभूषितभुजमध्या गृहीतताम्बूलाः॥

७७. विभ्रमा विलासास्त एव गुडूची अमृता तत्र वृद्धिजनकत्वेन मेघाः । रम्भायाः स्थूणा स्तम्भस्तत्संनिभा ऊरुस्थूणा यासां स्वयमेव तूणीभूय रतिपतेस्तूणमोचनाः ।

७८. शरदुद्गतमृगलाञ्छनसदृक्षवदनाः अकृशा सर्वत्र विस्तृतत्वाद् घना कान्तिर्यासाम् कृशाङ्ग्यस्तनुशरीराः ॥

महुअ महूअ । " मधूके वा " [ १२२ ] इति ऊत उत् वा ।

नेउर निउराओ । "इदेतौ नूपुरे वा"[१२३]इति ऊत इत् एत् वा। पक्षे। नूउर ॥

कोहण्डि । तोणीर । थोर । निम्मोल्ल । कोप्परया । तम्बोला । गलोइ । " ओत् कूष्माण्डी° " इत्यादिना [ १२४ ] एषु उत ओत् ॥

---

१ BC स्थूणास्तम्भसंनिभा. २ BC थोरो.

मत्तेभ-मउअ-गमणे तम्सि माउक्क-आसणासीणे ।
माउक्के अमउत्ते वि सुइ-गिराणं फुड-गिरेहिं ॥ ७९ ॥
आसंसिअं दिएहिं किवालु-हिअओ हवेहि महि-वट्ठे ।
तुह पिट्ठ-चरा देवा हवन्तु नागा वि पट्ठ-चरा ॥ ८० ॥
अह खग्गि-सिङ्ग-पत्ते मसिणे मसणेण चन्दणेण गहे ।
अच्चिअ राय-मयङ्को अकासि तिलयं मिअङ्क-निहं ॥ ८१ ॥

थोणा थूणा । तोणी तूण । "स्थूणातूणे वा" [१२५] इति ऊत ओत् वा । मय । "ऋतोऽत्" [१२६] इति ऋतः अत्त्वम् ॥

७९. युग्मम् ॥ मत्तेभस्येव मृदुकं मन्थरं गमनं यस्य । मृदुकं हंसरूतपूरितत्वेन कोमलं यद् आसनं गद्दिकादि तस्मिन्नासीने उपविष्टे सति तस्मिन् राज्ञि श्रुतिगिरां वेदवाक्यानां मृदुत्वे अमृदुत्वेपि स्फुटगीर्भि. । वेदवाक्येषु यथास्थानम उदात्तादिस्वरन्यासेन व्यक्तवाग्भिरित्यर्थः ॥

८०. द्विजैः इति आशंसितम् आशीर्वादः कृत. । तदेवाह् । कृपालुहृदयो महीपीठे त्वं भव । तथा तव पृष्ठचरा. पश्चाद्यायिनो देवाः पृष्ठचरा नागा अपि भवन्तु । तव क्षुद्रोपद्रवव्रातविकर्तनं सुरफणिपत्यादयः कुर्वन्त्वित्यर्थः । इतीत्यध्याहार्यम् ॥

अकास किसङ्गीओ । मउअ माउक्क । माउक्के अमउत्ते । "आत् कृशा०" इत्यादिना [१२७] एषु ऋत आत् वा ।

किवालु । हिअओ । "इत् कृपादौ" [१२८] इति आदेः ऋत इत्त्वम् ॥

पिट्ठ पट्ठ (पृष्ठे "वानुत्तरपदे" [१२९] इति ऋत इत् वा ॥ अनुत्तरपदे इति किम् । महि-वट्ठ ॥

८१. अथ द्विजाशीर्वादानन्तरं मसृणे श्लक्ष्णे खड्गिनो गण्डकस्य शृङ्गं विषाणं तस्य पात्रे भाजने यच्चन्दनं तेन मसृणेन ग्रहान्

मिच्चु-अवमच्चु-हरणे दिजे विसज्जिअ निसामिआ तेण ।
रिउ-सङ्ग-भञ्जणेणं धिट्ठाधट्ठाण विन्नत्ती ॥ ८२ ॥
पुहवीस-उउ-वसन्तो निवुत्त-तिलय-क्खणो कलि-निअत्तो ।
वन्दारय-वुन्दारय-समो पयट्टो तिहिं[२] सोउं ॥ ८३ ॥

अर्चयित्वा राजैव सौम्याह्लादकत्वादिगुणोपेतत्वाद् मृगाङ्कः मृगाङ्कनिभं वृत्तत्वशुक्लत्वाभ्यां चन्द्रतुल्यं तिलकम् अकार्षीत् ॥

८२. मृत्युः आयुषः परिसमाप्तौ मरणम् अपमृत्युः अकालमरणम् । तयोर्हरणान् विध्वंसकान् द्विजान् विसृज्य संमाननापूर्वं प्रेष्य रिपूणां शृङ्गस्य उत्कर्षस्य भञ्जकेन विनाशकेन [ तेन राज्ञा ] धृष्टाधृष्टानां[३] प्रगल्भाप्रगल्भानां विज्ञप्तयो निशामिताः परिभाविताः ॥

खिङ्ग सङ्ग । मसिणे मसणेण । मयङ्को मिअङ्क । मिच्चु मच्चु । धिट्ठाधट्ठाण ।
"मसृणमृगाङ्कमृत्युशृङ्गधृष्टे वा" [१३०] इति एषु ऋत इत् वा ।

८३. निवृत्तः समाप्तस्तिलकस्य मन्त्राभिमन्त्रितविशेषकस्य क्षणः अवसरः उत्सवो वा यस्य । निवृत्तः समग्रसचराचरलोकाभयप्रदानविधानाद् गतः कलिः कलियुगं यस्मात् । वृन्दारका देवास्तेषु योगक्षेमवाहित्वाद् वृन्दारकः श्रेष्ठः । इन्द्र इत्यर्थः । तेन समः सदृक्षः । पृथ्वीश एव निखिलभूमण्डलमोदकत्वाद् ऋतुवसन्तः तिथिं श्रोतुं प्रवृत्तः । वसन्तर्तुरपि निर्वृत्तः संजातस्तिलकानां तिलककुसुमानां क्षणः अवसरो यत्र । निवृत्तः कामवशवर्तित्वेन[४] उपरतः कलिः कामिकलहो यत्र । वृन्दारकेषु निरतिशयरूपोपेतत्वेन वृन्दारको मनोहरः । कन्दर्प इत्यर्थः । तेन समः तादृक्प्रकारः विकारकारित्वात् मित्रं च मित्रेण समं भवतीति ॥ कलि-निअत्तो इत्यत्र प्राकृतत्वाद् निअत्तो इत्यस्य परनिपातः । यथा

"भूअङ्कुरावयंसं छणपसर-महग्घ-मण-हर-सुरामोअं ।
अपणामिअं पि गहिअं कुसुमसरेण महु-मास-लच्छीए मुहं ॥"

इत्यत्र महग्घेत्यस्य परनिपातः ॥

---

१ BCD निअत्त...°निवुत्त. २ B तिद्. ३ D धृष्टानां प्रगल्भानाम्. ४ C निर्वृत्तः. ५ D कामवर्तित्वेन.

निअ उसहो दिय वसहे पिउ कम माउ हर आगए तत्तो ।
दाणेण तप्पिऊणं संपत्तो माइ हरयम्मि ॥ ८४ ॥
माईण अमोमासीसयाण राया अमूस-परिआरो ।
अमुसा-वाई वुट्ठो धण वुट्ठी-रयण विट्ठीहिं ॥ ८५ ॥
विट्ठु घण निम्मलेणं देवाणं पिहुय पुहय देवीणं ।
तेणादिट्ठं गीअं मुइंङ्गि कर ताडिय मिइङ्गं ॥ ८६ ॥

उउ । उदत्वादौ [ १३१ ] इति आदेर्ऋत उत् ॥

निअत्तो निवुत्त । वन्दारय वुन्दारय । "निवृत्तवृन्दारके वा" [१३२] इति ऋत उत्व [ वा ] ॥

८४. तत तिथिश्रवणानन्तर पितृक्रमात् पितृवशात् मातृगृहान् मातृवशाच्च आगतान् द्विजवृषभान् प्रधानब्राह्मणान् दानेन तर्पयित्वा सतोष्य नृपवृषभो मातृगृहे सप्राप्त ॥ वृषभशब्दस्य उत्तरपदस्थस्य प्रधानार्थाभिधायित्वम् । यद् अमर ।

स्युरुत्तरपदे व्याघ्रपुगवर्षभकुञ्जरा ।
सिंहशार्दूलनागाद्या पुसि श्रेष्ठार्थगोचरा ॥

उसहो वसहे । "वृषभे वा वा" [१३३] इति वेन सह ऋत उत् वा ॥

पिउ-क्कम । माउ हर । "गौणान्त्यस्य" [१३४] [इति] गौणपदस्य योन्त्य ऋत् तस्य उत् ।

८५ न विद्यते मृषा कूटभाषण यस्य स परिवारो यस्य । अमृषा-वादी राजा अमृषा सत्या आशिष प्रणामे कृते चिर जीवेत्याद्या-शीर्वचनानि यासा तास्तथा ताभ्यो [ मातृभ्य ] धनवृष्टिरत्नवृष्टिभि वृष्टो वर्षति स्म । ताभ्यो धन रत्नानि [ च ] ददावित्यर्थ ॥

माउ हर माइ हर । "मातुरिद्वा" [१३५] इति मातुर्गौणस्य ऋत इत् वा । क्वचिद् अगौणस्यापि । माईण ॥

अमोसा अमूस अमुसा । "उदूदोन्मृषि" [१३६] इति ऋत उत् ऊत् ओत् ॥

८६. देवानाम् । अग्रत इति शेष । पृथक् असामर्थ्येण देवीना

१ BCD मुअगिकरताडियमिअग　२ BC °पदस्यस्यात्र°

कुल जरईणं नत्तिअ नत्तुअ सहिआण सो वसु अदासि ।
धरणि-बिहप्फइ सीसो बुहप्फइ-सरिच्छ गुरु पुरओ ॥ ८७ ॥
सो कुसुम विण्ट-तिक्ख प्पण्णाइ बहप्फइ व्व लच्छीए ।
काही पूअं सह-वेण्ट फलेहिँ स-वोण्ट फुल्लेहिं ॥ ८८ ॥
रिद्धि-हय-अणत्त-रिणो राय रिसी धणुह वेअ राम इसी ।
रिज्जु सहुज्जुएहिं नर उसहेहि चालिओ निवइ-रिसहो ॥८९॥

पृथग् वृष्टो मुक्तजलो यो घनस्तद्वन्निर्मलेन गतकलुषेण तेन राज्ञा गीतम् आदिष्ट कारितम् । कीदृशम् । मृदङ्गिकरै मार्दङ्गिकहस्तैस्ताडिता आहता मृदङ्गा यत्र तत् तथाभूतम् ॥

८७ कुले जरत्यो वृद्धस्त्रिय ताभ्य । नप्तृकैर्युक्ता नप्तृका ताभि सहितास्ताभ्य पौत्रपौत्रीयुक्ताभ्यो धरण्या बृहस्पते शिष्य उद्धव तद्वत् । हेयोपादेयविचारचतुरत्वात् । स राजा बृहस्पते सदृक्ष अद्भुतविशदप्रज्ञर्द्धियुक्तत्वेन समो यो गुरु पुरोहितस्तस्य पुरतो वसु द्रव्यम् अदात् ॥

वुड्ढो विड्ढ । वुड्ढी विड्ढीहिं । विद्दय पुद्दय । सुदंड मिदङ्ग । नत्तिअ नत्तुअ । " इदुतौ वृष्ट० " इत्यादिना [१३७] एषु ऋत इकारोकारौ ॥

८८ कुसुमवृन्तवत् तीक्ष्णा या प्रज्ञा तया नून बृहस्पति स राजा लक्ष्म्या सवृन्तफलै सवृन्तपुष्पैश्च पूजाम् अकार्षीत् ॥

बिहप्फइ बुहप्फइ । "वा बृहस्पतौ" [१३८] इति ऋत इदुतौ वा । पक्षे बहप्फइ ॥

विण्ट वेण्ट वोण्ट । इदेदोद्वृन्ते" [१३९] इति ऋत इत् एत् ओच ॥

८९ ऋद्धया हृत स्वधनेन निवर्तितम् ऋणेन ऋता पीडितानेषाम ऋण येन । राजेव जीवरक्षाविधायित्वेन ऋषि । धनुर्वेदे धनु-र्यत्प्रतिपादकशास्त्रे राजर्षि परशुराम । ऋजु अकुटिल ऋजुभि

१ D धरिण्यां. २ BCD मुभंग मिभग.

**सो वसन्त-रिउ-सरि-विलासओ तह य गिम्ह-उउ सरिस-लीलओ।**
**महुर-तिव्व-तेआसरिच्छओ सम-हरं दरिअ-आढिअं गओ ॥९०॥**

नरऋषभैः सह नृपतिऋषभश्चलितः गुणनिकां कर्तुं प्रस्थित ॥ रिपुच्छन्दा छन्दः ॥

रिद्धि । " रिः केवलस्य" [१४०] इति व्यञ्जनेन असंपृक्तस्य ऋतो रिः ॥

९०. मधुरं सदाचारिप्रमोदकत्वेन प्रियं तीव्रं शत्रुसंतापकत्वेन प्रचण्डं यत् तेजो माहात्म्यं तेन असदृक्ष· निरुपमः । अत एव वसन्तर्तुसदृक्षः विलासो विलसितं यस्य । तथा ग्रीष्मर्तुसदृक्षा लीला केलिर्यस्य च । मित्रामित्रेषु शान्ततीव्रवृत्तिरित्यर्थः । स राजा दृप्तादृतं बलिष्ठभटवृतं श्रमगृहं गुणनिकास्थानं गत इति उत्तरसर्गार्थसूचनम् ॥ पश्चिमान्तिका छन्दः । वदनकं वा ॥

अण रिणो । रिसी राम-इसी । रिज्जू सहुज्जुएहिं । उसहेहि रिसहो । रिउ उउ । " ऋणर्ज्वृषभर्त्वृषौ वा " [१४१] इति ऋतो रिर्वा ॥

सरि । सरिस । सरिच्छ । " दृशेः क्विप्टक्सकः " । [१४२] क्विप् टक् सक् इत्येतदन्तस्य दृशो धातोः ऋतो रिरादेशः ।

आढिअं । " आदृते ढिः " [१४३] इति ऋतो ढिः ॥

दरिअ । "अरिर्दृप्ते " [ १४४ ] इति ऋतः अरि· ॥

इत्याचार्यश्रीहेमचन्द्रविरचितश्रीकुमारपालचरितप्राकृतद्व्याश्रयमहाकाव्यवृत्तौ प्रथम सर्ग समाप्त ॥

---

पङ्कय-केसर-कन्ती अकिलिन्नो हरि-चवेल-चविलो सो ।
स-किसर-किलित्त-दामो निवो पयट्टो समं काउं ॥ १ ॥
गुरु-मण-थेणो रेवइ-देअर-सीअ-दिअराण वल-थूणो ।
काही विअणं सो सयमवेअणो मल्ल सेलाण ॥ २ ॥

१. त्रिक षट्क द्विक चतुष्क द्विक एक एक एक इत्येवं विंशत्या गाथाभिर्यथासंख्यं राज्ञो मल्लश्रमं धनुःश्रमम् असिश्रमं शक्तिश्रमं चक्रश्रमं सेल्लश्रमं परशुश्रमं शूलसीरश्रमम् आह ॥ पङ्कजकेसरः कमलकिञ्जल्कस्तद्वत् कान्तिः शरीरच्छविर्यस्य । स्वर्णवर्ण इत्यर्थः । अक्लिन्नः घर्मरहितः । हरिचपेटावत् सिंहतलप्रहारवत् चपेटा यस्य सकेसरं क्लृप्तं कण्ठकन्दले स्थापितं दाम पुष्पमाला यस्य स नृपः श्रमं मल्लकलाभ्यासं कर्तुं प्रवृत्त इति ॥

अकिलिन्नो । किलित्त । "लृत इलिः क्लृप्तक्लन्ने" [१५४] इति लृत इलिः ॥

२. गुरोः कलाचार्यस्य मनःस्तेनः निरवधिकलाकौशलकरणेन चित्तहारकः । वलस्य सामर्थ्यस्य स्तेनश्चोरः । कयोः । रेवती रामप्रिया तस्या देवरः कृष्णः स च सीताया जानक्या देवरो लक्ष्मणश्च तयोः । तद्वत्पराक्रमवान् इत्यर्थः । स राजा स्वयम् अवेदनः मल्ला एव उच्चत्वाद् दृढत्वाच्च शैलास्तेषां वेदनां संतापम् अकार्षीत् ॥

केसर किसर । चवेल चविलो । देअर दिअराण । विअणं वेअणो । "एत इद्वा" [१४६] इति एत इत् वा ॥

थेणो थूणो । "ऊः स्तेने वा" [१४७] इति एत ऊत् वा ॥

सेलाण । "ऐत एत्" [१४८] इति आदेरैतस्य एत् ॥

तस्स सणिच्छर-पिउणो व्व कर-हयं सिन्धवं व मल्ल-कुलं ।
घम्म-जलोल्लं जायं स-सिन्न-पर-सेन्न-महिअं पि ॥ ३ ॥
मुर-वेरिओ व्व रक्खिअ-दइच्च-कयं वइरं-दइवय-सइन्नो ।
गेण्हीअ स तत्थ धणु कइलास-सओ व्व केलासे ॥ ४ ॥
देच्चालक्खो दइवे वि असङ्को महि-अले नव दइव्वं ।
उच्चअ-नीचअ-लक्खे अणचुक्को अवर-धीर-हरो ॥ ५ ॥

३. तस्य राज्ञः शनैश्चरपिता रविस्तस्येव कराहतं हस्तताडितं किरणतापितं च सत् स्वसैन्यपरसैन्ययोर्महितं पराक्रमवत्त्वेन श्लाघितमपि मल्लकुलं सैन्धवमिव लवणवद् घर्मजलार्द्रं क्षरत्स्वेदबिन्दु जातम् । अपिर्विस्मये ॥

सणिच्छर । सिन्धव । "इत् सैन्धवशनैश्चरे" [१४९] इति ऐत इत्त्वम् ॥
सिन्न सेन्न । "सैन्ये वा" [१५०] इति ऐत इत् वा ॥

४. मुरवैरीव नारायण इव रक्षितं दैत्यकृतवैरं दैवतसैन्यं येन [स इव] तत्र श्रमगृहे स राजा धनुरग्रहीत् । किंवत् । यथा कैलासे कैलासशयो हर इति ॥

दइच्च । दइवय । सइन्नो । "अइर्दैत्यादौ च"[१५१]इति सैन्ये दैत्यादिषु च ऐतः अइः ॥

वेरि वइर । कइलास केलासे । "वैरादौ वा" [१५२] इति ऐतः अइर्वा ॥

५. युग्मम् । स राजा शरान् वृष्टौ वर्षति स्म । किंभूतः । शरग्रहसंधानादि कुर्वन् दैववद् अलक्ष्यः फलानुमेयप्रारम्भत्वात् । दैवेपि अशङ्कः लोकोत्तरधैर्यधारित्वाद् निर्भयः महीतले नवः साक्षाच्छिष्टप्रतिपालकत्वेन दुष्टनिग्रहेण च अपूर्वो दैवः । उच्चैर्नीचैश्च लक्ष्ये वेध्ये अभ्रष्टः सम्यक्कलाचातुरीचुञ्चुत्वाद् अस्खलितः । अपरस्य विपक्षस्य धैर्यहरः ॥

---

१ BC °क्ङ. २ BC पराक्रमित्वेन. ३ BC °चञ्चु°.

अन्नन्नं जोहेहिं सलाहिओ तह वुहेहि अन्नोन्नं ।
मण-हर-सरलिअकुञ्चिअ-उहय-पवट्ठो सरे वुट्ठो ॥ ६ ॥
कण्णो वलिअ-मणोहर-पउट्ठ कर सररुहेण नर-वइणो ।
लम्बिर-नाल-सरोरुहवतंसिओ व्वासि संधाणे ॥ ७ ॥
कय-दुज्जण-सिर-विअंणं सिर-कुसुमाहरणमणसिरो-विअंणं ।
आवज्जिअ-वाइअ-आउज्जस्सादिट्ठ-पुड-दलणं ॥ ८ ॥
सूसास-वलिअ-चिवुओ अकासि सो गउअपुन्छ-पमुहेहिं ।
गाअङ्क-कोअरिउ-सुन्देरं पत्तो धणुह-सुण्डो ॥ ९ ॥

६. अन्योन्यं योधैस्तथा वुधैश्च श्लाघितः प्रशंसितः । मनोहरसरलितः सरलः कृतः आकुञ्चितः कुटिलः कृतः उभयप्रकोष्ठः कलाचिको येन तथाविधः । स इति राजवाचकम् अनुक्तमपि प्रक्रमाज्ज्ञेयम् ॥

दव्वा दइवे दइव्वं । "एच्च दैवे" [१५३] इति ऐत एत् अइश्चादेशः ॥
उच्चअ । नीच्चअ । "उच्चैर्नीचैस्यअः" [१५४] इति ऐतः अअः ॥
धीर । "ईद्धैर्ये" [१५५] इति ऐत ईत् ॥

७. संधाने शरासनशरारोपे वलितः आकर्णाकर्षणे पश्चाद्गतो मनोहरप्रकोष्ठो यः करः स एव सरोरुहं तेन कृत्वा । उत्प्रेक्ष्यते । लम्बमाननालं यत् सरोरुहं तेन अवतंसितः शेखरितो नरपतेः कर्ण आस्ते ॥

८. युग्मम् । कृता दुर्जनानां शिरोवेदना संतापो यत्र । शिरसि कुसुमान्येव अलंकारो यत्र । शेषालंकारान् मुक्त्वेत्यर्थः । अशिरोवेदनं यथा भवति एवं राजा आतोद्यिकैर्वादितं यद् आतोद्यं मृदङ्गपटहादिकं तस्य अदृष्टपुटं दलनं च गोपुच्छप्रमुखैः शरविशेषैरकार्षीत् ॥

९. किंभूतः । सोच्छ्वासं वलितं तिर्यग् नामितं चिवुकम् अधरोधः-

१ C °वयणं. २ B °वअणं. ३ D मनोहरः सर° ४ BC ° पुटदलनं.

अह कुच्छेअय-हत्थो कोच्छेअय-कउसलेण सो दिट्ठो ।
कोवेस कउच्छेअय-सिद्धो त्ति असेस-पउरेहिं ॥ १० ॥
अब्भास-गारवेणं गोविअ-सव्वङ्ग-गउरवो फलए ।
नावाकारे तेरह-तेतीस-गुणो व्व सो आसि ॥ ११ ॥

प्रदेशो येन । धनुषि प्रसक्तः शौण्डः धनुःशौण्डः । सप्तमी शौण्डा-यैरिति समासः[1] । धनुःकलाकुशल इत्यर्थः । अत एव गवाङ्कक्रौञ्च-रिप्वोर्हरभार्गवयोः सौन्दर्यं सौभाग्यं प्राप्तः प्राप्नोति स्मेति ॥

अन्नन्नं अन्नोन्नं । मणहर मणोहर । पवट्ठो पउट्ठ । सररुहेण सरोरुह । सिर-विअणं सिरो-विअणं । आवज्जिअ आउज्जस्स । "ओतोऽद् वान्योन्य°" इत्यादिना [१५६] एषु ओतः अत्वं वा तत्संनियोगे च यथासंभवं कतयोर्वादेशः॥

*ऊसास । "ऊत् सोच्छ्वासे" [१५७] इति ओत ऊत् ॥*

गउअ गाअङ्क । "गव्यउआअम्" [१५८] इति ओतः अउ आअश्च ॥

कोञ्च । "औत ओत्" [१५९] इति आद्यौतः ओत् ॥

सुन्देरं । सुण्डो । "उत् सौन्दर्यादौ" [१६०] इति औत उत् ॥

१०. अथ अदृष्टपुटव्यधनानन्तरं कौक्षेयककौशलेन हेतुना कोपि लोकोत्तरः कश्चिदप्येषः कौक्षेयकसिद्धः खड्गविद्यासिद्ध इत्यशेषपौरैः निखिलनागरैः कौक्षेयकहस्तः सन् स राजा दृष्टः ॥

कुच्छेअय कोच्छेअय । "कौक्षेयके वा" [१६१] इति औत उर्वा ॥

कउसलेण । कउच्छेअय । पउरेहिं । "अउः पौरादौ च" [१६२] इति औतः अउः ॥

११. नावाकारे फलके अभ्यासगौरवेण शिक्षामहत्त्वेन गोपितसर्वाङ्गगौरवस्तिरोहितसमस्तगात्रगुरुत्वोपि स राजा आसीत् त्रयोदशत्रयस्त्रिंशद्गुण इव । स तदा अनेकभटप्रहारदानाद् अनेकस्तैर्ज्ञात इत्यर्थः । अपिः विरोधार्थोत्र द्रष्टव्यः । यः किल तिरोहितगात्रः स एकोपि

---

1 BCD सः for समासः.

घडिआ अथेर-एकारएहि बहुएहिँ दुव्वहा सत्ती ।
वेइल्ल-केल-कन्नेरयं व भामिय भुवि निहित्ता ॥ १२ ॥
विअइल्ल-कण्णिआरय-कयलेहिँ ऐ-अइ त्ति भणिरेहिँ ।
जेहिहि बोर-पोप्फल-पोरं-मन्नेहिँ सा महिआ ॥ १३ ॥
नोमालिअ-नोहलिआ-सोमालाहिँ सलोण-मोहाहिँ ।
तस्मोब्भमिअं लवणं सुकुमाल-मऊह-मालिस्स ॥ १४ ॥

न लक्ष्यते कथं पुनस्त्रयोदशगुणस्त्रयस्त्रिंशद्गुणो वेति विरोधः । परिहारस्तु उक्त एव ॥

गारवेणं गउरवो । " आच गौरवे " [१६३] इति औत आत्वम् अउश्च॥
नावा । " नाव्यावः " [१६४] इति औत आवादेशः ॥
तेरह । तेतीस । " एत् त्रयोदशादौ॰" इत्यादिना [१६५] त्रयोदशन् इत्येवंप्रकारेषु संख्याशब्देषु आदेः स्वरस्य सस्वरेण व्यञ्जनेन सह एत् ॥

१२. बहुभिः अस्थविरायस्कारैः दुर्वहा शक्तिः आयुधविशेषो घटिता निर्मापिता विचकिलकदलकर्णिकारमिव भ्रमयित्वा उपरि समन्तश्चलयित्वा तेन राज्ञा भुवि निक्षिप्ता । तेनेति अत्र ज्ञेयम् ॥

१३. अयि अयि भो भो इति भणितृभिः ब्रुवाणैः बदरपूगफलपूतरवद् आत्मानं मन्यन्ते ये ते तथा । तैर्योधैः विचकिलकर्णिकारकदलैः पुष्पफलैः सा शक्तिः महिता अर्चिता ॥

अथेर । एकार । वेइल्ल । "स्थविरविचकिलायस्कारे" [१६६] इति पूर्ववद् एत्वा । विअइल्ल इत्यपि दृश्यते ॥
केल कयलेहिं । " वा कदले " [१६७] इति पूर्ववद् एत् वा ॥
कन्नेरय कण्णिआरय । "वेतः कर्णिकारे" [१६८] इति पूर्ववद् एत् वा ॥
ऐ-अइ । "अयौ वैत् " [१६९] इति पूर्ववद् ऐत् वा ॥

१४. नवमालिका यूथिका नवफलिका नूतनम् अल्पं फलं

चोद्दह-मणु-चोग्गुणओ भुवण-चउद्दहय-वइ-चउग्गुणओ ।
चोत्थे वि जुगे ति-पुरिस-चउत्थओ लक्खिओ स तया ॥ १५ ॥
सागोक्खल-खइरोहल-लोहोऊखल-सिला-उलूखलया ।
चक्केण तेण दलिआ चोव्वारं पुण चउव्वारं ॥ १६ ॥
इअ रइअ-कोउहल्लो कोहल-दक्खेहिँ तक्किओ राया ।
उअ कण्हो एस इहं भरहेसर-चक्कवट्टी ओ ॥ १७ ॥

[ यस्याः सा ] तद्वत्सुकुमाराभिः सलवणा लावण्ययुक्ता मयूराः कान्तयो यासां ताभिः स्त्रीभिः सुकुमारमयूरमालिनः दर्शनीयद्युतिधारिणस्तस्य राज्ञः लवणम् उद्भ्रमितम् उत्तारितम् । विशेषणान्यथानुपपत्त्या अत्र स्त्रीभिरिति ज्ञेयम् ॥

थोरं । पोप्फलं । पोरं । नोमालिअ । नोहलिआ । "ओत् पूतर°" इत्यादिना [ १७० ] पूर्ववद् ओत् ।

१५. चतुर्दशानां मनूनां स्वायंभुवाद्यृषीणां समाहारश्चतुर्दशमनु । तस्माच्चतुर्गुणः । सर्वजनहितत्वेन अधिक इति भावः । भूर्भुवःस्वर्महर्जनस्तपः सत्येति सप्त । तान्येव सप्तभिर्वायुस्कन्धैः सह चतुर्दश भुवनानि । तेषां चतुर्दशकम् । तस्य पतिर्विष्णुः तस्माच्चतुर्गुणः । चतुर्थेपि युगे कलावपि त्रिपुरुषस्य ब्रह्मविष्णुमहेश्वररूपस्य सकललोकमहनीयत्वेन चतुर्थः स राजा तदा लवणोत्तारणक्षणे लक्षित. ।

१६. शाकस्य उलूखलश्च खदिरस्य उदूखलश्च लोहस्य उदूखलश्च शिलाया उलूखलश्च ते तथा तेन राज्ञा चक्रेण आयुधविशेषेण[1] दलिताः । कथम् । चत्वारो वारा यत्र दलने तत् तथा । पुनश्चतुर्वारं च । ते तेन भूयो भूयो भग्ना इति भावः ॥

१७. इति धनुःखड्गशक्तिचक्रादिकलाकौशलप्रकारेण रचितकुतूहलो राजा कुतूहले कौतुकहेतुकर्मणि धनुःकलादौ दक्षैः प्रवीणैस्तर्कितः पर्यालोचितः । कथम् । इह पृथ्व्याम् उत किं कृष्णः उत अथवा भरतेश्वरचक्रवर्तीति ॥

---

1 D उदूखलश्च. २ D उदूखलश्च.

ओआरे अवयार-क्खमेण तेणावसद्द-रहिएण ।
सेल्ल-कला-अवयासे भग्गो जोहाण ओआसो ॥ १८ ॥
पन्नास-पलोऽवगओ किं जलणो उअ रवि त्ति तस्स करे ।
उवहसिअ-परसुरामस्सूहसिअ-पवी महा-परसू ॥ १९ ॥

सोमालाहिं सुकुमाल । सलोण लवणं । मोहाहिं मऊह । चोद्दह चउद्दह्य । चोग्गुण चउग्गुणओ । चोत्थे चउत्थओ । सागोक्खल खइरोहल लोहोऊखल उदूखलया । चोव्वारं चउव्वारं । कोउहल्लो कोहल । "न वा मयूख॰" इत्यादिना [१७१] पूर्ववद् ओत् वा ॥

१८. अपकारे अपकारक्षमेण । सापराधे शिक्षाकरणसमर्थेनेत्यर्थः । अपशब्देन अयशसा रहितेन । कचिदपि स्खलिताभावात् । तेन राज्ञा । सेल्लेति देश्यः प्रासवाची । तस्य कलावकाशे योधानाम् अवकाशः स्फूर्तिः भग्नः । प्रासेन वेध्यव्यधनम् अस्य विलोक्य तथाविधकला-विकलत्वेन सभोपहासपात्रं स्वं तर्कयन्तो भटा न प्रासं करेपि चक्रुरित्यर्थः ॥

१९. पञ्चाशत् पलानि मानम् अस्य स्यात् । °मात्रडिति संशये मा-त्रद् । द्विगोः संशये चेति तस्य लुप् । उपहसितः दीप्तितैक्ष्ण्याभ्यां तिर-स्कृतः पविर्वज्रं येन स महापरशुः उपहसितस्तथाविधप्रहरणाङ्गीकारेण अनुकृतः परशुरामो येन स तथा तस्य राज्ञः करे गतः सन् ऊह्यते किं ज्वलनः उत रविरिति ॥

उअ ओ । ओआरे अवयार । अवयासे ओआसो । "अवापोते"[१७२] इति पूर्ववद् ओत् वा ॥ क्वचिन्न । अवसद्द । अवगओ । उअ रवि ॥

उवहसिअ रामस्सूहसिअ रामस्सोहसिअ । " ऊचोपे " [ १७३ ] इति पूर्ववद् ऊत् ओच्च वा ॥

१ BC °स्सोह°. The author means that we should read ° रामस्सोहसिअ ( =° रामस्स ओहसिअ° ) as well as ° रामस्सूहसिअ ° (=°रामस्स ऊहसिअ.)

सूल-कलाइ णुमण्णो सीर-णिमण्णो अ कित्ति-पङ्गुरणो ।
सो किची-पाउरणं सिइ-पावरणं च अणुकाही ॥ २० ॥
अह राय-वाडिअत्थं नाओ आणाइओ रिउ-घरट्टो ।
पुहइ-सईसेणागरु-सुरहि-मओ सुकुसुम-सुतारो ॥ २१ ॥
सचमर-कण्णो विदुरो गय-पावो देव-दुज्जओ विजणे ।
सो धरिओ पर-वारण-कवलण-नेचंचर-चरित्तो ॥ २२ ॥
बालक-मुहो सुहकर-गज्जी सुहयर-गई अ इअ थुणिओ ।
जग-आगमिओ बहुतर-आअमिअ-कलेहिं बहुअरयं ॥ २३ ॥

२०. कीर्तिस्त्रिजगतीश्लाघा प्रावरणं यस्य [स] राजा शूलकलायां निपण्णो व्यापृतः । सीरे हलरूपायुधे निपण्णश्च कृत्तिप्रावरणम् ईश्वरं सितिप्रावरणं बलभद्रं [च] अन्वकार्षीत् अनुकृतवान् ॥

णुमण्णो णिसण्णो । "उमो निषण्णे" [१७४] इति पूर्ववद् उमादेशो वा ॥ पङ्गुरणो पाउरणं पावरणं । "प्रावरणेऽङ्ग्वाऊ" [१७५] इति पूर्ववद् अङ्गु आउ इत्येतौ आदेशौ वा ॥

२१. अथ शस्त्राभ्यासानन्तरं रिपुषु उपमर्दकत्वेन घरट्टः अगरुरिव सुरभिर्मदो दानजलं यस्य सुकुसुमा सुतारा शोभन आभरणविशेषो यस्य स तथाविधो नागः कुञ्जरो राजपाटिकार्थं चतुरङ्गसैन्यश्रमकरणाय बहिर्गन्तुं पृथिवीशचीशेन पृथिवीन्द्रेण आनायितः ॥

२२. अधुना गाथाद्वयेन तद्वर्णनम् आह । सचमरौ समीपप्रेङ्खत्प्रकीर्णकौ कर्णौ यस्य विदुरः हस्तिपकाभिप्रेतकृत्यकरणाद् विचक्षणः गतं भद्रजातीयत्वेन नष्टं पापं कुचेष्टा यस्य देवदुर्जयः सुरैरपि दुरभिभवः । परेषां शत्रूणां परे अन्ये वा पराः प्रकृष्टा वा वारणास्तेषां कवलने ग्रसने नक्तंचरचरित्रः अत एव स गजो विजने एकान्ते धृतः॥

२३. बालार्क इव अरुणत्वाद् मुखं यस्य सुखकरा शुभकरा वा

१ BCD नक्त°.

जलयर-अजलचर-वई जस्स य इन्धं रुसा-पिसाजी सो ।
सुहदेसु वि सुहओ जइ एरिसओ सो उण सुरेहो ॥ २४ ॥
अमुगो कर-आउण्टण-रम्मो चाउँण्ड-काउँए तुट्ठे ।
लब्भइ अणिउँत्तय-सुरहि-जउँण-जल-बहुल-मय-वट्टो ॥२५॥

गर्जिर्बृंहितं यस्य शुभे करगर्जी यस्येति वा शुभतरगतिः जगता आगमितो ज्ञातश्च स गजः इति वक्ष्यमाणप्रकारेण बहुतरा आगमिता ज्ञाता कला यैः पुरुषैस्तैर्बहुतरकम् अतिशयेन स्तुतः श्लाघितः । स इति प्रक्रमात् ज्ञेयम् ॥

२४. जलचराजलचरयोः । हस्तिनोरिति गम्यम् । उत्कृष्टत्वेन पतिः यस्य चिह्नं रुषापिशाची । कोपेन चण्डाल इत्यर्थः । शुभदेष्वपि राज्यसमृद्धिकृत्त्वेन शुभदः स गजः ॥ अथवा अलं बहुनोक्तेन । यदि पुनरीदृशः एतत्समः स त्रिभुवनप्रसिद्धः सुरेभ ऐरावणः । यदीति संभावने ॥

२५. अमुकोयं गजः करस्य शुण्डादण्डस्य आकुञ्चनं मण्डलीकरणं तेन रम्यः । अतिमुक्तकानीव माधवीलताकुसुमानीव सुरभिः यमुनाजलवद् बहुलः शितिः मदपट्टो दानप्रवाहो यस्य स तथा । चामुण्डाकामुके चन्द्रशेखरे तुष्टे परितोषं गते लभ्यते प्राप्यते ।

" स्वराद् असंयुक्तस्यानादेः [ १७६] । अधिकारोयम् । यद् इत उर्ध्वम् अनुक्रमिष्यामः तत् स्वरात्परस्य असंयुक्तस्य अनादेर्भवतीति वेदितव्यम् ॥

राय-चाडिअत्थं । नाओ । आणाइओ । रिउ । पुहइ सईसेण । मओ । "कगचजतदपयवां प्रायो लुक् " [१७७] इति कादीनां लुक् ॥ प्रायोग्रहणात् क्वचिन्न ॥ अगरु । सुकुसुम सुतारो । समचर । विदुरो । गयनावो । देव । विजणे ॥ स्वराद् इत्येव । नसंचरं ॥ असंयुक्तस्येति किम् । दुक्खओ । चरित्तो । वालक्क । गव्वो ॥ क्वचित् संयुक्तस्यापि । नक्तंचर ॥ अनादेरिति किम् । विदुरो । गय । विजणे । पद । जग । यस्य तु जत्वम् आदौ क्रियते ॥ समासे तु वाक्यविभक्त्यपेक्षया भिन्न-

---

१ B अणिउँतय; C अणिउत्तय. २ BC पूर्णेन°. ३ BCD नक्त°. ४ BCD न्पूं°.

अइमुत्तय-विन्दु-करो अइमुत्तय-गोर-दन्तओ एस ।
सविमो खु साव-चविओ तिअस-गय-वरो महि-अलम्मि॥२६
अच्छ-कय-कण्ण-चिउओ महु-पिङ्गल-नयणओ मयङ्क-नहो ।
पियइ व लायण्णमिमो अखुज्ज-कुम्भो पर-गयाण ॥२७॥

पदत्वमपि । तेन तत्र यथादर्शनम् उभयमपि । सुहयर सुहयर । आगमिओ आअमिओ । वहुतर वहुअर । जलयर अजलचर । सुहदेण सुहओ ॥ क्वचिद् आदेरपि । इन्धं । उण ॥ क्वचित् चस्य जः । पिसाजी ॥ अमुगो इत्यादिषु तु "व्यत्ययश्च" [४.४४७] इति कस्य गत्वम् ॥ आर्षे अन्यदपि दृश्यते । आउण्टण । अत्र चस्य टः ॥

२६. अतिमुक्तकानीव करे विन्दवो यस्य अतिमुक्तकवद् गौरदन्तः एष राजगजो ज्ञायते । सोयं त्रिदशगजो मुनेः कस्यचिच्छापेन आक्रोशेन च्युतो भ्रष्टः स्वर्गाद् महीतले ॥ मनसा प्रत्यक्षमिव परिकल्प्य सुरेभम् इदमा निरदिक्षत् ॥

चाउँण्ड-काउँए । अँणिउँत्तय । जउँण । "यमुना" इत्यादिना [१७८]मस्य लुक् । लुकि च मस्य स्थाने अनुनासिकः ॥ क्वचिन्न । अइमुत्तय अइमुत्तय ॥ साव । "नावर्णात् पः" [१७९] इति न पस्य लुक् ॥

२७. अच्छं मलरहितं कचकर्णचिबुकं यस्य । मधुवत् पिङ्गले नयने यस्य । मृगाङ्कवद् निर्मलत्वाद् नखा यस्य । अकुब्जौ उन्नतौ कुम्भौ यस्य स गजः परगजानां लावण्यं पिबतीव निखिललावण्यस्य तत्र दर्शनाद् इति भावः ॥

गय । कय । नयणओ । मयङ्क । लायण्ण । गयाण । "अवर्णो यश्रुतिः" [१८०] "कगचज" इत्यादिना [१७७] लुकि शेषोऽवर्णः अवर्णात् परो लघुप्रयत्नतरयश्रुतिः । अवर्ण इति किम् । चिउओ ॥ अवर्णादित्येव । तिअस ॥ क्वचिद् भवति । पियइ ॥

१ BC कस्यचित्यानाज्ञासेन च्युतो. २ BC अणिउतय.

खप्पर-खीलय-कुज्जय-कुसुम-समा जस्स सेल-खम्भ-दुमा ।
रुन्धिअ-खासिअ-छिक्कं पिक्खिज्जइ मय-गलो एस ॥२८॥
मरगय-गेन्दुअ-सरिसालि-गुच्छ-गण्डे निवो इहारूढो ।
जयइ चिलाए व्व परे सिरिकण्ठ-किराय-वीरे वि ॥२९॥
जिअ-घण-सीभर-गङ्गा-सीहर-चन्दिम-सुसीअ-सीअरओ ।
फलिहामल-वीस-नहो निहस-प्पह-चिहुरओ एस ॥३०॥

२८. कर्परश्च घटखण्डं कीलकश्च शङ्कुः कुब्जकः शतपत्रिकाविशेषः तस्य कुसुमानि च तैः समा । एतान् अनायासेन उत्पाटयतीत्यर्थः । यस्य शैलस्तम्भद्रुमाः । एप मदकलो मदोत्कटः रुद्धकाशितक्षुतं यथा भवति एवं प्रेक्ष्यते ॥

अखुज्ज । खप्पर । खीलय । "कुब्ज°" [१८१] इत्यादिना एषु कस्य ख.। पुष्पं चेत् कुब्जाभिधेयं न । अपुष्प इति किम् । कुज्जय ॥ आर्षेन्यत्रापि । खासिअ ॥

२९. मरकतकन्दुकसदृशा अलिगुच्छा ययोस्तौ तथाभूतौ गण्डौ यस्य तस्मिन्निह गजे आरूढः स नृपः श्रीकण्ठकिरातवद्वीरानपि परान् शत्रून् किरातानिव पुलिन्दानिव जयति ॥

मय गलो । मरगय । गेन्दुअ । "मरकत°" [१८२] इत्यादिना कस्य गः। कन्दुके तु आद्यस्य गः ॥

चिलाए। "किराते चः" [१८३] इति कस्य चः । कामरूपिणि तु नेष्यते ॥ किराय ॥

३०. जिता. शैत्येन अभिभूता घनशीकरा गङ्गाशीकराश्च यैः अत एव चन्द्रिमावत् सुशीताः शीकरा मदबिन्दवो यस्य । स्फटिक-

१ D मयगलो. २ BC °गेंडुअ°.

पिहु-जहणो साहु-मुहो सरिसव-खल-कडुअ-सलिलओ अथिरो।
इह एसो निव-जोग्गो पत्तो चोत्थिं मयावत्थं॥ ३१॥
निव-धम्म-रओ अह सो नभम्मि पाउस-घणो व्व पिधमिन्दो।
अपिहं य आसणाओ असङ्कलं तं समारूढो॥ ३२॥

वद् अमला विंशतिर्नखा यस्य। निकषः कषपट्टः। तस्य प्रभावत चिकुरा यस्य स तथाभूत एष गजः॥

सीभर सीहर। "शीकरे भहौ वा" [१८४] इति कस्य भहौ वा। पक्षे सीअरओ॥

चन्दिम। "चन्द्रिकाया मः" [१८५] इति कस्य मः॥

फलिह। निहस। चिहुरओ। "निकषस्फटिकचिकुरे हः [१८६] इति कस्य हः। चिहुरः संस्कृतेपीति दुग्गः (दुर्गः)॥

३१. पृथुजघनो विकटकटीतटः साधुमुखः सौम्यवदनः सर्षपखलवत् कटुकं सलिलं मदजलं यस्य। अस्थिरः निरन्तरं हस्तकर्णतालचलनेन चञ्चलः एषः गजः चतुर्थी मदेन उपलक्षिताम् अवस्थां प्राप्तः। त्रिंशद्वर्षदेश्यः संपन्न इत्यर्थः। अत एव नृपयोग्यः। एतावता भद्रजातीयत्वम् उक्तम्। तथा च तल्लक्षणम्।

महु-गुलिय-पिङ्गलक्खो अणुपुव्वि-सुजाय-दीह-नङ्गूलो।
पुरओ उदग्ग-धीरो सव्वङ्ग-समाहिओ भद्दो॥ इत्यादि॥

३२. [अथ] नृपस्य धर्मे दुष्टनिग्रहशिष्टप्रतिपालनादौ आचारे रतः। पृथक् भूतलस्थितत्वेन भिन्नः इन्द्रः स श्रीकुमारपालभूपः आसनाद् अपृथगिव शरीरसौख्यकृत्त्वेन सिंहासनकल्पे अशृङ्खले अपासितनिगडे तस्मिन् हस्तीन्द्रे समारूढः। यथा नभसि प्रावृड्घनः। "सप्तम्या द्वितीया" [३.१३७] इति तम् इत्यत्र सप्तम्याः स्थाने द्वितीया॥

नहो। प्पह। पिहु। जहणो। साहु। मुहो। "खघथधभाम्"[१८७]इति

१ D मयावत्थं.

पुन्नाम-दामवन्तो पुलोइओ भामिणीहि पउरीहिं ।
छालङ्क-देव-तेओ सुहओ रइ-सूहवो व्व निवो ॥ ३३ ॥
इन्दो दुहओ चन्दो वि दूहवो आसि खेअर-वहूणं ।
तम्सि दिट्ठे तइआ मणि-खसिआहरण-खइअङ्गे ॥ ३४ ॥

खादीना ? । असयुक्तस्यैव । चोथिअ । मयावत्थ ॥ प्राय इत्येव । सरिसव खल । अथिरो । निव धम्म । नमथिम ॥

पिध अपेद । "पृथकि धो वा" [१८८] इति थस्य धो वा ॥

अङ्कल । "ङ्कले ख क [१८९] इति खस्य क ॥

३३ गाथासप्तकेन राजवर्णनम् आह । पुन्नागदामवान् सुरपर्णिका-कुसुममालायुक्त । छागाङ्कदेवो वह्नि । तद्वद् द्विपदारुदाहकत्वात् तेजो यस्य । सुभग अनुकूलाचरणेन जगज्जनप्रिय नृप रतिसुभग इव कन्दर्पवद् भामिनीभि भाग्ययुक्ताभि पौरीभि नागराङ्गनाभि प्रलोकित सोत्कण्ठम् ईक्षित ॥

पुन्नाम । भ मिणी हि । "पुन्नागभागिन्योर्गो म"[१९०] इतिगस्यम ॥

छालङ्क । "छागे ल" [१९१] इति गस्य ल ॥

३४ तदा राजवीथीचलन्मदकलपृष्ठतलारोहकाले मणिखचिताभरणे पद्मरागेन्द्रनीलादिरत्नरोचिष्णुकटककेयूरमुकुटाद्यलङ्कारै खचितानि युक्तानि अङ्गानि हस्तचरणोत्तमाङ्गप्रमुखा अवयवा यस्य तस्मिन् राज्ञि दृष्टे सति खेचरवधूनाम् इन्द्रो दुर्भगश्चन्द्रोपि दुर्भग आसीत् ॥ सौम्यसौभाग्यलावण्योपततेतत्कुवलयेक्षणे सर्वाङ्गीणनयनसहस्रेण भीषणत्वात् इन्द्र अन्तर्मलिमसत्वेन च चन्द्रस्तासा न प्रियभावुकता जगामेत्यर्थ ॥

दुहवो । दूहवो । "ऊर्वे दुर्भगसुभगे व" [१९२] इति गस्य व ॥ ऊत्व इति किम् । सुहओ । दुहओ ॥

वेस-पिसाओ मुत्ती-पिसल्लओ अ झडिलो अजडिलो य ।
खट्टङ्ग-घण्ट-भूसो निवारिओ न जह अटइ पुरो ॥ ३५ ॥
केढव-सयढारि-सढाल-विक्कमो फालिह-विमल-नेवच्छो ।
चविला-फालिअ-कुम्भो नहं व चविडाइ फाडन्तो ॥ ३६ ॥
अङ्कोल्ल-तेल्ल-णिद्धो असढो पिहडो कलाण सयलाण ।
लहु-जढर-पिढर-पडियार-पाडणत्ताण कय-कीलो ॥ ३७ ॥

३५. वेषेण पिशाचः जीर्णविवर्णविकृतवेषवान् ग्रहिलप्रायः । मूर्त्या पिशाचश्च भीषणदर्शनः । जटिलः सर्वत्र उद्गतरोमा । अजटिलः मुण्डितशिरमुण्डः कापालिकादिः । खट्वाङ्गघण्टाभ्यां भूषा यस्य । स च मृतककपालघण्टादिकलित ईश्वररूपधारी । जटाधर इत्यर्थः । निवारितो दुःशकुनकारणाद् निषिद्धः यथा येन पुरः अग्रे न अटति नागच्छति ॥

खसिअ खइअङ्गे । पिसाओ पिसल्लओ । "खचित०" इत्यादिना [ १९३ ] यथासंख्यं सल्लौ वा ॥

झडिलो अजडिलो । "जटिले जो झो वा" [ १९४ ] इति जस्य झो वा । "टो डः" [ १९५ ] इति टस्य डश्च ॥ स्वरादित्येव । घण्ट ॥ असंयुक्तस्येत्येव । खट्टङ्ग ॥ क्वचिन्न । अटइ ॥

३६. चतुर्भिः कलापकम् । कुमारेण कुमारपालेन कारितो विहारः कुमारविहारस्तस्मिन् श्रीपार्श्वनाथचैत्ये प्राप्तः । राजेति प्रक्रमात् ज्ञेयम् । कीदृशः । कैटभशकटौ दैत्यौ तयोर्यः अरिभूतः सटालो नरसिंहस्तद्वद् विक्रमो यस्य । स्फटिकवद् विमलनेपथ्यः । चपेटया पाटितस्ताडितः कुम्भो येन स तथाभूतः । श्यामकुम्भस्थलास्फालनात् अत्युच्चत्वेन अदृश्यकुम्भस्थलदत्तचपेटोत्थप्रतिरवाद् वा उत्प्रेक्ष्यते नभश्चपेटया पाटयन्निति ॥

३७. अङ्कोठतैलवत् स्निग्धः अरूक्षकायः अशठः शाठ्यवर्जितः

---

१ D मृतकपाल°. २ B अच्छव्युतत्वेन; C अव्यतत्वेन.

दड-खन्ध-हार-नाडिं पेल्लन्तो निविड-कच्छ-नालिमिभं ।
उव्वेलु-अतुच्छङ्कुस-अतुच्छ-वेणूहि आवरिओ ॥ ३८ ॥
अणतुच्छ-टयर-कप्पूर-धूव-महमहिअ-टसर-सुइ-वत्थो ।
कुमर-विहारे पत्तो टूवर-पडिहार-दिन्न-करो ॥ ३९ ॥

सकलानां कलाना पिठरो भाजनम् । लघु जठरं बुभुक्षाक्षामकुक्षि तदेव पिठरस्तस्य प्रतीकारो भोजनलाभ तेन पातनम् इतस्ततो भ्रमणं नेन ऋता' । पीडिता इत्यर्थ । तेषां कृता मनोरथातिगवस्तुदानेन जनिता क्रीडा स्वेच्छाविलसनं येन स तथा ॥

३८. दृढा स्कन्धे हारभूता नाडिर्वरत्रा यस्य । निविडा निश्चला कक्षायां मध्ये च नाडिर्यस्य स तथा । तम् इभं क्षिपन् प्रेरयन् । उद्वेणवः उद्गूर्णवंशदण्डास्ते च अतुच्छाङ्कुशाश्च एवंभूता ये अतुच्छा वेणवः प्रभूता राजविशेषास्तैरावृत । वेणुर्वंशे नृपान्तरे इति वेणुशब्दो राजविशेषवाच्यपि ॥

३९. अतुच्छं तगरश्च सुरभिद्रव्यभेद कर्पूरो घनसारः धूपश्च नानासुरभिद्रव्यक्षोद तै । अर्थात् तद्गमै प्रसृतानि व्याप्तानि त्रसरः सूत्रभेदस्तस्य शुचीनि वस्त्राणि यस्य । तूवर' अनुद्भिन्नश्मश्रुर्मुण्डित-श्मश्रुर्वा य प्रतीहारस्तेन दत्तः करो यस्य स तथा ॥

केढव । सयढारि । गड्डा । "सटाशकटकैटभे ढः" [ १९६ ] इति टस्य ढः ॥ फलिह । "स्फटिके लः" [ १९७ ] इति टस्य ल. ॥

चविडा चविडाइ । फाडिअ फाडन्तो । "चपेटापाटौ वा" [ १९८ ] इति चपेटायां ण्यन्ते पाटौ धातौ च टस्य डो वा ॥

जढर । "ठो ढः" [ १९९ ] इति ठस्य ढः ॥

अङ्कोल । "अङ्कोठे ल्लः" [ २०० ] ॥

पिढरो पिठर । "पिठरे हो वा रश्च डः" [ २०१ ] इति ठस्य हो वा तत्संनियोगे च रस्य डः ॥

---

१ BC अङ्कस्था. २ D टटा°.

सुपइट्ठं सुपडायं वेडिस-दल-नील-भित्ति-गब्भिणयं ।
अणिउँत्तयं-फुल्ल-हरं बालाण वि रुण्ण-अवहरणं ॥ ४० ॥
बाहत्तरि-कल-सालाहण-सम-जणमलभि-कुसुम-कय-सोहं ।
पलिल-सिर-पलिअ-पीवल-करण-घुसणुम्मीस-ण्हवण-जलं ४१

कीलो । "डो लः" [२०२] इति डस्य लः ॥ क्वचिद् वा । नाडि नालि । क्वचिन्न । निविड ॥

उव्वेल्लु वेणुहि । "वेणौ णो वा" [२०३] इति णस्य लो वा ॥

अचुच्छ अतुच्छ अणतुच्छ । "तुच्छे तश्चछौ वा" [२०४] इति तस्य चछौ वा ॥

टयर । टसर । टूवर । "तगरत्रसरतूवरे टः" [२०५] इति तस्य टः ॥

४०. अधुना यादृशं तज्जिनमन्दिरं यादृशश्च सन् राजा प्रविष्टस्तद् गाथाद्वादशकेनाह ॥ द्वादशभिः कुलकम् । निजनाम्ना अङ्कितम् उपलक्षितं यद् निजकीर्तनम् । कुमारविहार इत्यर्थः । तद् मस्त्या आदरेण ततः प्राप्त्यनन्तरं स श्रीकुमारपालभूपः प्रविष्टः प्रविशति स्म । कीदृशं सत् । सुप्रतिष्ठं शास्त्रविधिविहितविधानविशेषम् अतिशयप्रसिद्धं वा । सुपताकं चश्चद्वैजयन्तीकं वेतसो वानीरस्तस्य दलानीव नीलमणिनिर्मितत्वेन या नीला भित्तयस्ताभिर्गर्भितं गर्तापुरोर्ध्वशिखरान्तराले युक्तम् । अतिमुक्तककुड्मलानां गृहाणि पूजार्थं कृता गृहाकारा विच्छित्तयो यत्र । किं बहुना । बालानामपि रुदितापहरणम् कौतुकान् कृतसस्मितबालकम् इत्यर्थः ॥

४१. द्विसप्ततिः कला येषाम् अत एव सातवाहनसमा जनाः श्रावकलोका यत्र । अतसीकुसुमकृतशोभं क्षुमाप्रसूनजनितान्तराविच्छित्ति । पलितशिरसां यानि पलितानि तेषां पीतकरणं स्वर्णवर्णा-

१ BC अणिउंतय°. २ BCD °घुसणुम्मीस°. ३ BC अचुच्छ. ४ B गर्तोपूरो°.

पीअल-धाउ-विणिम्मिअ-विहत्थि-पम-माहुलिङ्ग-आहरणं ।
भरह-जिण-भवण-सरिसं मङ्गल-वसहिं सिरी-वसइं ॥ ४२ ॥
अध काहल-भव्व-जणं सिढिलिअ-कलि-कालमसढिलाणन्दं ।
नयरस्स मेढिभूयं पढमं तित्थं व पुढवीए ॥ ४३ ॥
पुहवी-निसीढ-तम-भर-निसीहिणीनाह-सरिस-जिण-बिम्बं ।
खण्डिअ-डम्भिअ-दम्भं उद्दण्ड-सुवण्णमय-डण्डं ॥ ४४ ॥
डरिआणं दर-हरणं डड्ढागरु-दड्ढ-धूम-सुह-गन्धं ।
अहि-डसण-डड्ढ-सरणं दसण कआडंसु-दड्ढ-तमं ॥ ४५ ॥

पाटन यद् घुसृण कुङ्कुम तेन उन्मिश्र स्नपनजल यत्र तत् तथा । स्नान-जलचन्दनेन यत्र पलितशिरस स्वर्णवर्णकचा भवन्तीत्यर्थ ॥

४२. पीतधातुना गाङ्गेयेन विनिर्मित वितस्तिप्रम मातुलिङ्गाभरण यत्र । भरतजिनभवनसदृश मङ्गलाना कल्याणाना वसतिं स्थान श्रिय शोभाया लक्ष्म्या वा वसतिम् ॥

४३. अथ कातरा पापभीरवो भव्यजना यत्र । शिथिलित अनवरतधर्मनिमग्नजनतापूर्णत्वेन मन्दीकृत कलिकालो येन । अशिथिल निबिड आनन्दो यस्मात् । नगरस्य मेथिभूत नाभिभूतम् । अन्यतीर्थपरित्यागेन तदाराधनधार्मिकलोकदर्शनाद् उत्प्रेक्षते । पृथिव्या प्रथम तीर्थम् ॥

४४. पृथिव्या निशीथे अर्धरात्रे यस्तमोभरस्तत्र निशीथिनीनाथसदृशं निर्मूलपापप्रलयत्वेन चन्द्रकल्प जिनबिम्ब यत्र खण्डितदाम्भिकदम्भम । विघ्नविधानेन ध्वस्तमायिकमायम इत्यर्थ । उद्दण्डसुवर्णमयदण्डम ॥

४५. दरिताना भीताना दरहरण भयध्वंसपरम । दग्धागरुदग्ध-

---

१ B °विणम्मिअ°, C °विणमिअ°, D omits विहत्थि भव्वजणं
२ BC सिढिलिअ°

डाहत्त-दाह-हरणं कय-डोहलयाण पुन्न-दोहलयं ।
कडण-मइ-चत्त-कदणं डब्भङ्कर-नील-नीलमणिं ॥ ४६ ॥
दब्भग्ग-मई दर-डोलिर-सीसमदोलिरेण हिअएण ।
दूरमहरं डसन्ते डहमाणो मिच्छ-दिट्ठि-जणे ॥ ४७ ॥
थुणिरो देवं बारह-रवि-तेअं भत्ति-गग्गर-गिराए ।
धम्म-करि-करलि-हूओ कयलि-मिऊ कोह-अपलित्तो ॥४८॥

धूपाभ्यां शुभगन्धम् । अहिदशनदष्टानां शरणं त्राणस्थानम् । लग्नगाढविपाशिपोऽपि तत्रागता जीवन्तीत्यर्थः । दशनानां दन्तिदन्तानां कपटानि तेषाम् अंशवः तैर्दष्टं ग्रस्तं तमो येन ॥

४६. दाहार्तदाहहरणं भवदावसंतापापनोदकम् । कृतदोहदानां संजातदोहदानां पूर्णदोहदम् । पूरिताभिप्रेतम् इत्यर्थः । कदनमतिभिः हिंसाबुद्धिभिः । पापिष्ठैरित्यर्थः । तैरपि त्यक्तं कदनं यत्र । दर्भाङ्कुरवद् नीला नीलमणयः प्राङ्गणादिषु यत्र तत् तथा ॥

४७. स च कीदृश । दर्भस्य कुशस्य अग्रं तद्वत् सूक्ष्मार्थपरिच्छेदकत्वेन मतिर्यस्य । अदोलावता निश्चलेन हृदयेन उपलक्षितः । दरदोलावत् शीर्षं जिनबिम्बरामणीयकविलोकनविस्मयेन ईषच्चलन्मस्तकं यथा भवति एवं प्रविष्टः जिनप्रवचनप्रभावनामात्सर्येण विप्राशक्ततया च दूरं अतिशयेन अधरं दशतो मिथ्यादृष्टिजनान् दहन् संतापयन् ॥

४८. द्वादशरवितेजसं देवं वीतरागं भक्तिगद्गदगिरा जयजयेत्यादिवाचा स्तोता स्तवनशीलः । धर्म एव करी तत्र कदलीभूतः शोभाकृत्त्वेन पताकातुल्यः । कदलीवद् मृदुः कोमलाङ्गः । क्रोधेन अप्रदीप्तः । प्रशान्त इत्यर्थः ॥

दोहल-दुउणिअ-धाराकयम्ब-धूलीकलम्ब-कण्टइओ ।
धिप्पिर-सुवन्न-दिप्पिर-तणु-कन्ति-कवट्टिअन्न-पहो ॥ ४९ ॥
चइउं निव-कउहाइं निसेढाइ-निवाण धम्म-सिक्खाओ ।
ओसहमोसढिओ इव दिन्तो स निसीहिअं काउं ॥ ५० ॥
निअ-नामङ्किअ-णिअ-कित्तणयं अनिला व्व अतुल-थामेण ।
पज्जलिआनल-तेओ भत्तीइ तओ पइट्ठो सो ॥ ५१ ॥

४९. दोहदेन स्वसमयोद्भूतधूलिधाराधरधाराधोरणीछोटनरूपदोहद-परिपूर्त्या द्विगुणितौ वृद्धिं गतौ यौ धाराकदम्बधूलीकदम्बौ ताविव कण्टकित संजातरोमाञ्चः । दीप्रसुवर्णवद् दीप्रा या तनुकान्तिस्तया कदर्थितान्यप्रभः ॥ एकस्यैव कदम्बस्य द्विधा अभिधा । यदुक्तम् ।

ग्रीष्मसमये[3] विकासी कथितो धूलीकदम्ब इति लोके ।
जलधरसमयप्राप्तौ[4] स एव धाराकदम्बः स्यात् ॥

५०. नृपककुदानि छत्रखड्गवाहनमुकुटचामररूपराजचिह्नानि त्यक्त्वा निपधादिनृपेभ्यो धर्मशिक्षाः धर्मोपदेशान् ददत् वितरन् । किंवत् । यथा औपधानि पण्यम् अस्य औपधिकः गान्धिकः औपधम् इति । स चतुःसमुद्रवसुंधराप्रसिद्धः नैपेधिकीं[5] कृत्वा ॥

५१. अतुलस्थाम्ना अमितबलेन कृत्वा अनिल इव वायुसदृक्षः प्रज्वलितानलतेजा जाज्वलितज्वलनप्रतिमप्रताप इति ॥

पडिहार सुपडायं । "प्रत्यादौ डः" [ २०६ ] इति तस्य डः ॥ आर्षे दुष्कडादि ज्ञेयम् ॥ प्राय इत्येव । सुपइट्ठं ॥

वेडिस । "इत्वे वेतसे" [ २०७ ] इति तस्य डः ॥

गब्भिणय । अणिउँत्तय । "गर्भितातिमुक्तके ण [२०८] इति तस्य णः ॥

रुण्ण । "रुदिते दिना ण्ण " [२०९ ] इति दिना सह तस्य ण्णः ॥

सत्तरि । "सप्ततौ र " [ २१० ] इति तस्य रः ॥

मासाहण । अल्णि । "अतसीसातवाहने लः " [२११] इति तस्य लः ॥

---

१ BC निसिढाइं°. २ BC °धोरिणी. ३ BC °समय°. ४ BC प्राप्तौ स एव. ५ D निषेधिकीं. ६ BC अणिउंतय.

**लिम्बासय-निम्बगिरा कालि-ण्हाविअ-पाव-नाविआदरिसा।**
**धम्म-रिउणो वि तस्सिं दिट्ठे धम्मोम्मुहा हूया ॥ ५२ ॥**

पलिल पलिअ। "पलिते वा" [२१२] इति तस्य लो वा॥

[पीवल] पीअल। "पीते वो ले वा" [२१३] इति तस्य वो वा स्वार्थे ले परे॥

विहत्थि। माहुलिङ्ग। भरह। वसहि। काहल। "वितस्ति°" [२१४] इत्यादिना तस्य ह ॥ बाहुलकात् क्वचिन्न । वसइ ॥

सिढिलिअ। असढिला। मेढि। पढम। "मेथि°" [२१५] इत्यादिना थस्य ढ ॥

पुढवीए पुहवी। निसीढ निसीहिणी। "निशीथपृथिव्योर्वा" [२१६] इति थस्य ढो वा ॥

डम्भिअ दम्भ। उद्दण्ड डण्ड। डरिआण दर। डट्ठा दट्ठ। डसण दसण। डट्ठ दट्ठ। डाह दाह। डोहलयाण दोहलय। कडण कदण। डम्भ दम्भ। डोलिर अदोलिरेण। "दशन°" इत्यादिना [२१७] दस्य डो वा॥दरस्य भयार्थवृत्तेरेव। अन्यत्र दर ॥

डसन्ते। डज्झमाणो। "दशदहो" [२१८] इति दस्य ड ॥

बारह। गग्गर। "सङ्ख्यागद्गदे र" [२१९] इति दस्य र ॥

करलि।"कदल्याम् अद्रुमे" [२२०] इति दस्य र॥ अद्रुम इति किम्। कयाली॥

पलित्तो। दोहल। "प्रदीपिदोहदे ल" [२२१]। प्रदीप्यतौ धातौ दोहदे च दस्य ल ॥

कलम्ब कलम्ब। "कदम्बे वा" [२२२] इति दस्य लो वा॥

दिप्पिर दिप्पिर। "दीपौ धो वा" [२२३] इति दस्य धो वा॥

कवट्टिअ। "कदर्थिते व" [२२४] इति दस्य व ॥

कउहाइ। "ककुदे ह" [२२५] इति दस्य ह ॥

निसढाइ। "निषधे धो ढ" [२२६] इति धस्य ढ ॥

ओसह ओसढिओ। "वौषधे" [२२७] इति धस्य ढो वा॥

कित्तणय। "नोण" [२२८] इति नस्य ण ॥आर्षे अनिलो। अनल इत्यादि॥

निअ। णिअ। "वादौ" [२२९] इति नस्य णो वा॥

५२ निम्बवत् कटु । क्रूर इत्यर्थ । एवभूत आशय अभिप्राय

मो फणस-फालिहद्दय-दीहर-भुअ-फलिह-जोडिअ-णडालो ।
अफरुस-गिराइ फालिअ-मोहो इअ जिण-थुइमकासि ॥५३॥
फलिहा-जलं पहुत्तम्बुजेहिँ जह जह वणं च नीमेहिं ।
जग-सिरि-नीवावेडय संहइ मही तह तुह पएहिँ ॥ ५४ ॥
तुह कय-कुसुमामेला पणट्ठ-पारद्धि-पमुह-पाव-मला ।
मुत्ताहल-विमला इह हवन्ति रेभ व्व मुद्धन्ना ॥ ५५ ॥

तथा निम्बवद् गौश्च येषाम् । कलिरेव कुत्सितकर्मणा नापित पापमेव नापित तयो उपकरणभूतत्वेन ज्ञापकत्वेन च आदर्शा अत एव धर्मरिपवोपि तस्मिंस्तथाविधनृपे दृष्टे सति धर्मोन्मुखा भूता जाता । अपिर्विस्मये ॥

लिम्बा निम्ब । ण्हाविअ नाविअ । "निम्बनापिते लण्ह वा" [२३०] इति नस्य लण्हौ वा ॥ 'पो व ' [२३१] इति पस्य च व ॥ प्राय इत्येव । रिउणो ॥

५३ पनसपारिभद्राविव यौ दीर्घा भुजपरिघौ ताभ्या योजित ललाटं भालस्थलं येन । ललाटयोजितकर इत्यर्थ । पाटितमोहो विनाशित विपरीतावबोध सन् अपरुषगिरा मृदुस्वरेण इति वक्ष्यमाणरीत्या स राजा जिनस्तुतिम अकार्षीत् ॥

५४. स्तुतिमेव गाथाष्टकेनाह । परिखा खातिका तस्या जल यथा प्रभूताम्बुजै वन च यथा नीपै राजति । जगता श्रियो नीपाना कदम्ब-कुसुमानाम आपीड शोभाकरत्वेन [?] शेखर तथा तव पादैर्मही राजति॥

पणस । फालिहद्दय । फलिह । अरुस । फालिअ । फलिहा । "पाटि°" इत्यादिना [२३२] ण्यन्ते पटिधातौ परुषादिषु च परस्य फ ॥

पहुत्त । "प्रभूते व " [२३३] इति वस्य व ॥

५५ तव कृतकुसुमापीडा प्रनष्टपापर्द्धिप्रमुखपापमला अत एव मुक्ताफलवद् विमला विगतकर्ममला इह अस्मिन् जन्मनि भवन्ति

१ C तह गहइ मही तह पएहिं

सहलो जम्मो समलं च जीविअं-ताण देव फणि-चिन्ध ।
जे तं चम्पय-सवलेहिं भिसिणि-कुसुमेहिं अचन्ति ॥ ५६ ॥
असिर-कमन्धे अकयन्ध-सिरे समरम्मि तुज्झ झाणेण ।
केढव-रिउणो व्व निवा विसढाविसमं न जाणन्ति ॥ ५७ ॥
वम्मह-पिआहिवम्मू अहिमन्नु-पिआ य अहरिओ तेण ।
तुह भमल-साम पय-पङ्कएसु भमराइअं जेण ॥ ५८ ॥

रेफवद् मूर्धन्याः सकललोकाग्रस्थाः । सिद्धा भवन्तीत्यर्थः । रेफोपि "ऋवर्णटवर्गरपा मूर्धन्याः" इति मूर्धन्यः ॥

नीमेहि । नीव । आवेडय कुसुमामेळा । "नीपापीडे मो वा" [२३४] इति पस्य मो वा ॥

पाराद्दि । "पापर्द्धौ रः" [२३५] इति अपदादौ पस्य रः ॥

५६. हे देव पार्श्व फणिचिह्न तेषां जन्म सफलम् जीवितं च सफलम् । ये त्वां चम्पकशवलैर्बिसिनीकुसुमैः अर्चन्ति पूजयन्ति ॥

क्वचिद् भः। रेभ॥ क्वचित् हः। मुत्ताहल॥ क्वचिद् उभावपि। सहलो। समलं। "पो भहौ" [२३६] इत्यनेन ॥अनादेरित्येव। फणि ॥

सवलेहिं । "बो वः" [२३७] इति बस्य वः ॥

भिसिणि । "बिसिन्या भः" [२३८] इति बस्य भः ॥

५७. आशिरांसि कबन्धानि यत्र अविद्यमानकबन्धानि शिरांसि यत्र तस्मिन् समरे तव ध्यानेन भवतः स्मरणेन कैटभरिपव इव विष्णव इव [नृपा] विषमाविषमं न जानन्ति ॥ सर्वत्र विजयवैजयन्तीं प्राप्नुवन्तीति भावः ॥ असिर इति कबन्धविशेषणं स्वरूपभणनार्थम् । केढव-रिउणो इत्यत्र बहुत्वं मत्स्याद्यवतारापेक्षया ॥

कमन्धे अकयन्ध । "कबन्धे मयौ" [२३९] इति बस्य मयौ ॥

केढव । "कैटभे भो वः" [२४०] इति भस्य वः ॥

विसढाविसमं । "विषमे मो ढो वा" [२४१] इति मस्य ढो वा ॥

५८. मन्मथपिता, विष्णुः अभिमन्युः अर्जुनाङ्गजः अभिमन्यु-

पहु तुम्हकेर-अह-खाय-संजमे सोवओगं-साहूण ।
न समो अह जाओ तव-किसङ्ग-लट्ठी वि हु कुदिट्ठी ॥५९॥
करणिज्जाकरणीअं पेआपिज्जं च जे न वि मुणान्ति ।
ते दोस-दुइज्जा वि हु गुण-बीआ हुन्ति तइं दिट्ठे ॥ ६० ॥

पिता च तेन अधरित न्यक्कृत. । स सर्वोत्कृष्ट इत्यर्थ. । हे मसलयत् श्यामल तव पदपङ्कजयो येन भ्रमरायितं चञ्चरीकवद् आचरितम् । यस्त्वा प्रणत इत्यर्थ. ॥

वम्मह । " मन्मथे वः " [ २४२ ] इति मस्य वः ॥
पिआहिवण्णू अहिमन्नु । " वाभिमन्यौ " [ २४३ ] इति मो वो वा ॥
मसल ममराइअ । " भ्रमरे सो वा " [ २४४ ] इति मस्य सो वा ॥

५९. हे प्रभो पार्श्व त्वदीये भवत्संबन्धिनि यथाख्यातसंयमे पञ्चमचारित्रे सोपयोगसाधूनां सावधानयतीनाम् । हु इति निश्चितम् । न समो न सदृक्ष. । क'।यथाजात' शीतातपाद्युपद्रवसहनाय प्रावरणरहित तपसा कृशाङ्गयष्टि. दुर्बलगात्रोपि कुदृष्टिर्जमदग्न्यादि. ॥

जेण । " आदेर्यो ज. [२४५] इति यस्य जः ॥ आदेरिति किम् । ममराइअ । बाहुल्कात् सोपसर्गस्य अनादेरपि । संजमे ॥ क्वचिन्न । सोवओग ॥ आर्षे लोपोपि । अह-खाय । अह जाओ ॥

तुम्हकेर । युष्मदर्थपरे तः " [ २४६ ] इति यस्य तः ॥
लट्ठी । " यष्ट्या ल. " [ २४७ ] इति यस्य ल' ॥

६०. हे देव करणीयाकरणीयं पेयापेयं च ये नैव जानन्ति ते दोषद्वितीया अपि गुणद्वितीया सगुणास्त्वयि दृष्टे सति भवन्ति । संबोधनपदम् अत्र ज्ञेयम ॥

---

१ BC सोवओग°. २ C ° चारित्रे. ३ C शीतवाताद्यु°.

वेकक्ख-उत्तरीआ धवल-दुगूलोत्तरिज्ज-पिहिअ-मुहा ।
तुह कय-ण्हवणा घण-छाय-छत्त-छाहीओं माणन्ति ॥ ६१ ॥
इय सच्छाओ कइवाह-परिअणो कइअवं थुइं काउं ।
आइ-किडि व्व अभेडो जिण-ण्हवणे अह पयट्टो सो ॥६२॥
पल्लाणिअ-अपडायाणिअ-हयमाएहि अवर-राएहि ।
कणवीरचिय-कलसो हलिद्द-गोरो स किर दिट्ठो ॥ ६३ ॥

६१. हे देव वैकक्ष्ये उत्तरासङ्गे उत्तरीयम् उपरितनं वस्त्रं येषाम् धवलं तदेव धौतत्वाच्छुचि यद् दुकूलं क्षौमं तच्च तद् उत्तरीयं च तेन पिहितं विगन्धोष्णोच्छ्वासलग्नाशातनाशङ्कया स्थगितं मुखं यैस्ते तथा । तव कृतस्नपना घना सान्द्रा छाया आतपाभावो यस्मात् तच्च तच्छत्रं च तेन याश्छायाः शोभास्ता अनुभुञ्जते अनुभवन्ति ॥

कराणिज्जाकरणीअं । पेआपिज्जं । दुइज्जा बीआ । उत्तरीआ दुगूलोत्तरिज्ज । " योत्तरीयानीयतीयकृद्ये ज्जः " [ २४८ ] इति यस्य ज्जो वा ॥

६२. इति पूर्वोक्तरीत्या कतिपयां स्वशक्त्युचितां स्तुतिं कृत्वा सच्छायः शोभनकान्तिः कतिपयपरिजनः मितपरिवार. । आदिकिरिः आदिवराहः स इव अभेरः अकातरः स श्रीकुमारपालभूपः जिनस्नपने अथ स्तवनभणनानन्तरं प्रवृत्तः ॥ अत्र स्तुतिं कृत्वेति क्त्वाप्रत्ययेन स्नानप्रवृत्तेरानन्तर्यमात्रे उक्तेपि अत्यानन्तर्यप्रतिपादनार्थम् अथशब्दः । यथा देवदेवं प्रणम्यादौ इत्यत्र आदिशब्दः अतिसामीप्यप्रतिपत्त्यर्थः ॥

छाय छाहीओ । " छायाया होऽकान्तौ वा " [ २४९ ] इति हो वा ॥ *अकान्तौ इति किम् । सच्छाओ ॥*

कइवाह कइअव । " डाहवौ कतिपये " [ २५० ] इति यस्य डिदाह-वौ पर्यायेण ॥

किडि । अभेडो । " किरिभेरे रो डः " [ २५१ ] इति रस्य डः ॥

६३. पर्याणं गृह्णन्ति हयाः । णिज् बहुलम् इत्यादिना णिज् । ते

तेण जिणम्मि दुवालस-रवि-तेए मुहल-घण्ट-थोर-रवं ।
णङ्गलि-लङ्गलिभायर-सरिसेण पलोट्टिआ कलसा ॥ ६४ ॥
णङ्गूलि णाहलत्तण-अपुण-भवत्थं निवेण करुणाए ।
लङ्गूलि-लाहला वि हु सित्ता जिण-ण्हवण-सलिलेण ॥६५॥

सैन्यपाले प्रयुज्यन्ते स्म । प्रयोकृव्यापारे णिभि त्त । तत पर्याणिता प्राहितपल्ययना अपर्याणिताश्च हया यत्रेति । एवम् आयाते अपरराजे करवीरैः करवीरकुसुमै अर्चितकलश । हरिद्रावद् गौर स राजा किल दृष्ट । सविस्मयोत्कण्ठ विलोकित । किलेति प्रसिद्धौ ॥

पल्लाणिअ अपडायाणिअ । "पर्याणे डा वा" [२५२] इति रस्य डा वा ॥
कणवीर । "करवीरे ण" [२५३] इति आद्यरस्य ण ॥

६४. लाङ्गलिलाङ्गलिभ्रातृसदृशेन बलभद्राच्युततुल्येन तेन राज्ञा मुखरा प्रतिरवैर्वाचाला या घण्टास्तासा स्थूलो रवो यत्र इत्येव जिने जिनबिम्बे द्वादशरवितेजसि पर्यस्ता कर्पूरकुङ्कुमादिसुरभिद्रव्यक्षोदमिश्र-जलमोचनाय अवाञ्च कृता कलशा सुवर्णमणिमृन्मयादिकुम्भा ॥

हलिद्द । मुहल । "हरिद्रादौ ल" [२५४] इति रस्य ल ॥ आर्षे दुवालस ।

थोर । "स्थूले लो र." [२५५] इति लस्य र ॥

६५ लाङ्गूलिलाहलत्वयो तिर्यक्त्वम्लेच्छविशेषत्वयो अपुनर्भवार्थं पुनरप्रादुर्भावाय नृपेण करुणया । आस्ताम् अन्ये । लाङ्गूलिलाहला अपि । हु इति निश्चितम । सित्ता आर्द्रा. कृता जिनस्नपनसलिलेन ॥

णङ्गलि लङ्गलि । णङ्गूलि । णाहल लाहला । "लाहललाङ्गललाङ्गूले वादेर्णः" [२५६] । एषु आदेर्लस्य णो वा ।

1 D सुवर्णदुर्वर्णमणि°.

सासि-खण्ड-णडालाहिँ समरी-भासाइ दूसिमिण-हरणं ।
सिविणे वि दुलहमणुजिणमकारि संगीयमित्थीहिँ ॥ ६६ ॥
दढिआ सुनीविआहिँ नीमीओ नच्चणीहिँ तक्कालं ।
सविसेस-सद्द-गीए सज्जाइ-क्कमोक्कम-पयट्टे ॥ ६७ ॥

६६. शशिखण्डवद् अष्टमीचन्द्रवत् ललाटं भालस्थलं यासां ताभिः स्त्रीभिः शबरीभाषया गायनप्रसिद्धपुलिन्दीभाषया उपलक्षितं दुःस्वप्नहरणम् । जिनगुणगणोत्कीर्तनाकर्णनैर्दुःस्वप्नसूचितोपद्रवविघातात् । स्वप्ने[1] किल दुःप्रापमपि प्राप्यते । परं तत् स्वप्नेपि दुर्लभं जिनमनु पार्श्वनाथं लक्षीकृत्य संगीतकं प्रेक्षणीयकम् अकारि प्रारब्धम् ॥

[णडालाहिँ । "ललाटे च" [२५७] इति आदेर्लस्य णः ॥]

समरी । "शबरे बो मः" [२५८] इति बस्य मः ॥

६७. गाथैकादशकेन तद्वर्णनम् आह । शोभनाः । रचनया बन्धुरा इत्यर्थः । नीवयो वस्त्रग्रन्थयो यासां ताभिर्नर्तनीभिः नीवयः तत्कालं प्रेक्षणक्षणे दृढिताः नर्तनाय निश्चलीकृताः । कदा । षड्भ्यो जातः षड्जः । यदुक्तम्

नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संस्पृशन् ।
षड्भ्यः संजायते यस्मात् तस्मात् षड्ज इति स्मृतः ॥

स आदिर्येषाम् ऋषभादिस्वराणां तेषां क्रमेण नादाध्यारोहपरिपाट्या उत्क्रमेण च तथैव व्यावुटनेन ताभ्यां प्रवृत्ते । एतेन शुद्धरागयुक्तत्वम् अत्रोक्तम् । सविशेषा निर्दोषसदर्थसार्थत्वेन रम्याः शब्दा यत्र तच्च तद् गीतं च तस्मिन् सति ॥

दूसिमिण सिविणे । सुनीविआहिँ नीमीओ । "स्वप्ननीव्योर्वा" [२५९] इति वस्य मो वा ॥

सविसेस । सद्द । सज्जाइ । "शषोः सः" [२६०] इति शषयोः सः ॥

---

१ BC स्वप्नेपि.

तइआ वणिअ-सुसाहिं निव-सुण्हा-वल्लहाओं ता दिट्ठा ।
पाहाण-पुत्तिआहि व पासाण-त्थम्भ-लग्गाहिं ॥ ६८ ॥
वञ्जिअ-दस-विह-धाऊ जणणी लासस्स दह-विहस्सावि ।
दिवसे दिवहावगमे अ सुह-यरी वाइआ वीणा ॥ ६९ ॥
रञ्जिअ-नर-सिंघेणं चंमिअ-सीहेण वाइओ वंसो ।
दाघत्त-दाह-हरणो छुह-धवले जिण-गुणे गाउं ॥ ७० ॥

६८ तदा प्रेक्षणीयकक्षणे नृपस्नुषाणा राजवधूनामपि वल्लभा विलोकनाय ईप्सितास्ता नर्तनस्य पापाणस्तम्भे लग्नाभि सकीर्णत्वेन प्रेक्षणीयकस्य दुर्दर्शत्वेन सच्छाभिर्वणिजस्नुषाभि दृष्टा । नर्तनरामणीयकलोलुपत्वेन निर्निमेपनिश्चलत्वादिना तथावस्थानात् पापाणपुत्तिकाभिरिवेत्युत्प्रेक्ष्यते ॥

मुसाहिं सुण्हा। "स्नुषाया ण्हो न वा" [२६१] इति षस्य ण्हो वा ॥

६९. व्यञ्जित तत्प्रदेशकोणसारणया प्रकटितो दशविधो दशभेदो धातु भरतादिशास्त्रप्रसिद्ध आलत्तिविशेपो यया । दशविधो गेयपदाद्यङ्गभेदेन दशप्रकार । यदुक्तम्

गेयपद स्थितपाठ्य आसीन पुष्पगण्डिका ।
प्रच्छेदकस्त्रिमूढ च सैन्धवाख्य द्विमूढकम् ॥
उत्तमोत्तमक चैव उक्तप्रत्युक्तमेव च ।

इति दश लास्याङ्गानि। तस्यापि लास्यस्य जननी उत्पादिका। तत्स्वरानुसारेण नर्तकीना नर्तनात्। दिवसे दिवसापगमे च। अहर्निशम् इत्यर्थ । अमृतास्वादवत्स्वरकलितत्वेन सुखकरी वीणा वादिता क्वणिता ॥

पाहाण पाषाण। दस दह। "दशपाषाणे ह" [२६२] इति शषयोर्यथा दर्शन हो वा ॥

दिवसे दिवहा। "दिवसे स." [२६३] इति सस्य हो वा ॥

७०. रञ्जित आह्लादित नरसिंह कुमारपालराजो येन तेन

1 BC omit 'रामणीयक त्प्रेक्ष्यते' २ C आलत्तिषय°. ३ C स्थित. ४ BC पाठ्य मार्गीत

छमि-छत्तिवण्ण-गोरी छट्ठी भल्लि व्व पञ्च-बाणस्स ।
मय-छावच्छी वर-मुहर-गायणी गिण्हिउं तालं ॥ ७१ ॥
अमय-छिरा-महुर-सरा अमय-सिरोवम-सराहि अणुगमिआ ।
जिण-गाणम्मि पयट्टा गुण-भायण-दाण भाणं तो ॥ ७५ ॥
दणु-कुल-दणुअ-कुलाराइ-दुल्लहं तीइ रा-उल-विहारे ।
राय-उल-पियमवीअं गीअं सोउं न को आओ ॥ ७६ ॥

वांशिकसिंहेन । वंशवादनं शिल्पम् अस्य वांशिकश्रेष्ठेन दाहार्तानां दाहस्य हरणः श्रुतिसुखकृत्त्वेन संतापस्य विनाशको वंशो वेणुर्वादितः सुधावत् मकोलवत् निर्मलान् जिणगुणान् गातुम् ॥

सिंघेणं सीहेण । "हो घोऽनुस्वारात्" [ २६४ ] इति हस्य घो [वा]॥ क्वचिद् अननुस्वारादपि । दाघत्त दाह ॥

७१. युग्मम् । ततः वीणावेणुवादनानन्तरं वरमुखरगायनी तालं कांस्यिकां गृहीत्वा जिनगाने प्रवृत्ता । कीदृशी । शमिमप्तपर्णवत् शमीसप्तच्छदपुष्पवद् गौरी गौरवर्णा । पञ्च बाणा. उन्मादनमदन-मोहनतापनशोषणाख्याः शरा यस्य स पञ्चबाणः कन्दर्पस्तस्य षष्ठी भल्लिरिव । तया हि बाणैरिव स सर्वं स्ववशं करोतीति भावः । मृग-शावस्येव अक्षिणी यस्याः ॥

७२. अमृतशिरावत् सुधाधारावत् मधुरः स्वरो यस्याः सा तथा अमृतशिरोपमः स्वरो यासां ताभिः अनुगता । आलतिकाक्षणे अन्यगायनीभिः कृतपृष्टनिनादेत्यर्थः । गुणभाजनानां गुणपात्राणां यद् दानं जिनसद्गुणोत्कीर्तनोत्थपरितोषाद् धनवितरणं तस्य भाजनम् ॥

छुद । छमि । छत्तिवण्ण । छट्ठी । छावच्छी । "षट्शमी°" [२६५] इत्यादिना आदेर्वर्णस्य छः ॥

छिरा सिरो । "सिराया वा" [ २६६ ] इति आदेश्छो वा ॥

७३. दनुजकुलस्य दैत्यसमूहस्य दनुजकुलारातयो देवास्तेषां च

—१ BC कांस्यिका. २ BCD शिराया.

सक्कय वारण-पाइअ-वायरण-पउत्त सद्द-कय गीए ।
आउज्जिअ पायारे रङ्गे पुण आसि गुणि-पारो ॥ ७४ ॥
तत्थागओ अ कालायस-सम कालास-अहिअ-हिअओ जो ।
सो केलि किसलयासोअ किसल-कोमल हिओ आसि ॥७५॥
दुग्गावी-पा-वीढं दुग्गा-एवीस पाय-वीढं च ।
मोत्तुं गण-गन्धव्वा तं गीअं सोउमोच्छरिया ॥ ७६ ॥

दुर्लभं राजकुलस्य नरनाथयूथस्य प्रिय श्रोत्रसुखकृत्त्वेन हृद्यम् अद्वितीयं तस्या वरमुखरगायन्या गीत श्रोतु राजकुलविहारे कुमारविहारे को नायात । किं तु सर्वोप्यायात ॥

भायण भाण । दणु दणुअ । रा-उल राय-उल । " लुग् भाजन° " [ २६७ ] इत्यादिना सस्वरस्य जस्य लुग् वा ॥

७४. संस्कृतव्याकरणप्राकृतव्याकरणयो प्रयुक्ता प्रतिपादिता ये शब्दास्तै कृतं गीतं यत्र आतोद्यिकाना मृदङ्गादिवादकाना प्राकारो मण्डल यत्र तस्मिन् रङ्गे पुन गुणिप्राकार आसीत् ॥ सगीतकाकर्णनाय समागतममन्त्रलोकेपि प्रासादे रङ्गभूमौ विचक्षणा एव उपवेशिता इति पुन शब्दार्थ ॥

७५. तत्र च रङ्गे कालायस लोहजातिस्तेन समं कालायसाद् अधिक च हृदयं यस्य स तथाविधो य आगत स केलिकिसलया-शोककिसलयवत् रम्भाकन्दलीदलवत् कोमलहृदय आसीत् ॥ चित्त चमत्कारकारिजिनेन्द्रगुणस्फीतगीतश्रवणात् सोपि सार्द्रहृदयः संवृत्त इति यावत् ॥

वारण वायरण । पायारे पारो । आओ तत्थागओ । " व्याकरणप्राकारा गते कगो." [ २६८ ] इति को गश्च लुग् वा ॥

कालायस कालास । किसलया किसल हिअओ । हिओ । " किसलय° " [ २६९ ] इत्यादिना यस्य लुग् वा ॥

७६. दुर्गादेव्या गौर्या पादपीठं पादासनम । अत्र च सामीप्यात

जिण-पाय-वडण-गुरु-पा-वडणाइं चइअ तत्थ उब्भ-जणो
पुलयङ्कुरेहि कलिओ उउम्बरो उम्बरेहिं व ॥ ७७ ॥
जाव निवो कय-पूओ आरत्तिय-मङ्गलं न जा कुणइ।
ता देव-उले मरुवय-पूअं अणुसोइउं लग्गो ॥ ७८ ॥
मइ ताव देउलमिमं निम्मविअं सहल-जीविअमणेण।
सव्व-रिउ-कुसुम-पूआ नो जइ जीअं न मे सहलं ॥ ७९ ॥

चरणान्तिकम् इत्यर्थः। दुर्गादेवीशस्य पादपीठं मुक्त्वा गणा नन्दिवन्दि-प्रभृतयस्ते च ते ते गन्धर्वाश्च किंनरास्तद् गीतं श्रोतुं कर्णाञ्जलिभिः पातुम् अवस्तृता आगताः ॥

७७. जिनपादपतनगुरुपादपतनानि त्यक्त्वा तत्र रङ्गस्थाने ऊर्ध्वजनः आसीत्। किंभूतः। पुलकाङ्कुरैः कलितो युक्तः। किंवत्। यथा उदुम्बरो जन्तुफलः उदुम्बरफलैरिति ॥

दुग्गावी दुग्गा एवी। पा-वाढि पाय-वीढं। पाय-वडण पा वडणाइं। उउम्बरो उम्बरेहिं। "दुर्गादेवी°" [ २७० ] इत्यादिना दस्वान्तर्मध्ये लुग् वा। अन्तरिति किम्। दुर्गादेव्याम् आदौ मा भूत् ॥

७८. यावत् कृतपूजो नृपः तथा आरात्रिकेन[1] सहितं मङ्गलं आरात्रिकमङ्गलम्[2]। आरात्रिकं माङ्गलिक्यं चेत्यर्थः। न यावत् करोति तावद् देवकुले कुमारविहारे मरुवकपूजाम् अनुशोचितुं लग्नः। पूजाविषयं पश्चात्तापं कर्तुं प्रवृत्तः ॥

७९. अनुशोचनमेवाह। मया तावद् देवकुलम् इदं निर्मापितम्। अनेन च सफलं जीवितं निर्मापितम्। मम चेत्यर्थात्। परं सर्वर्तुकुसुमपूजा नो यदि चेन्न तदा जीवितं न मे सफलम् ॥ देवगृहविधानाज्जीवितं सफलमपि तथाविधपूजाया अभावाद् नातिशयेन सफलम् इति यावत् ॥

---

१ D आरात्रिकेन. २ D आरात्रिक°.

अह भणिअं खे सासण-देवीए एवमेव मा जूर ।
आवत्तमाण-जस तुममेमेअ किमेत्तमाण-मणो ॥ ८० ॥
गुणि-पावारय पारय दुह अड चिन्तावडेसु मा पडसु ।
होही तुह उज्जाणं मई सच्च-रिऊहि कय-कुसुमं ॥ ८१ ॥

८०. अथ इत्थं चिन्तानन्तरं खे गगनाङ्गणे शासनदेव्या भणितम् । आवर्तमानं त्रिलोक्यां बम्भ्रम्यमाणं यशो यस्य । तस्य आमन्त्रणम् । हे आवर्तमानयश त्वम् एवमेव मा खिद्यस्व निरर्थकं मा दैन्ययुक्तो भव । तथा एवमेव किम् आवर्तमानमना सर्वर्तुकुसुमपूजा भविष्यति वा न वेति किं चिन्तापरचित्त ॥

८१. खेदचिन्तयोर्निरर्थकत्वमेवाह । गुणिन एव प्रावारका. पटास्तेषां प्रावारक अनुपमागणितगुणयुक्तत्वेन आच्छादक । दु.खं खेद' तदेव अवटश्च कूप' । चिन्ता अभीप्सितार्थं प्रति सदेह सैव अवटश्च । तयोस्त्वं मा पत मा निमज्ज ॥ ननु किमिति भगवत्या एवं निषिध्यते तत्राह । तव उद्यानं भवन आरामवनं सदा सर्वकालं सर्वर्तुभि कृतकुसुमं जनितप्रसूनं भविष्यति । मम प्रमादाद् इति शेष. ॥

जाव जा ता । ताव । देव-उले देउल । जीविअ जाअ । एवमेव एमेअ । आवत्तमाण अत्तमाण । पावारय पारय । अड चिन्तावडेसु । "यावत्ताव" [ २७१ ] इत्यादिना यावदादिषु वकारस्य अन्तर्वर्तमानस्य लुग् वा ॥ अन्तरियेव । एवमेवेति अन्यस्य च ॥

इति प्राकृतद्व्याश्रये महाकाव्ये अष्टमस्याध्यायस्य उदाहरण
प्रतिपादकाध्याणः प्रथम पाद' सपूर्ण. ॥

आरत्तियमह काउं मुक्क-मलो अपरिमुत्त-माउक्को ।
तव-सत्तं गुण-सक्कं माउत्त-निहिं गुरुं पणओ ॥ ८२ ॥
विञ्चुअ-डक्कोरग-दट्ठ-जीव-जीवाउ-चरण रेणु-कणं ।
लुक्क-कलि लुग्ग-भवं तं समुपासिअ गओ राया ॥८३॥
लक्खण-पुण्णमखीणं अछीण-गमणं अझीण-तणु तेअं ।
खन्धाइ-सत्त-पिहुलं पोक्खर गन्धं धुवावत्तं ॥८४॥

८२. अथ अभीप्सितार्थसाधकशासनदेवीवचनानन्तरम् आरात्रिकं कृत्वा मुक्तमलः गतविकल्पकालुष्य । अपरिमुक्तमृदुत्वः आर्जवयुक्तो राजा श्रीकुमारपालः तपसि "अणसणमूणोअरिआ" इत्यादिसिद्धान्तप्रसिद्धे शक्तं समर्थम् । तन्निष्ठम् इति यावत् । गुणेषु क्षान्त्यादिषु शक्तं मृदुत्वनिधिं गुरुं प्रणतः प्रणमति स्म ॥

८३. वृश्चिकदष्टाश्च उरगदष्टाश्च ये जीवास्तेषां जीवातवो जीवनौपधानि चरणरेणुकणा यस्य । रुग्ण. सावद्यव्यापारप्रध्वंसकत्वेन भग्न. कलि. कलहः कलिकालो वा येन । रुग्णभवं मुक्तपर्वप्रभावयदानादिधर्मानुष्ठानविधापनेन निर्दलितचातुर्गतिकसंसारं तं गुरुं समुपास्य संसेव्य । तदन्तिके देशनाश्रवणादिधर्मानुष्ठानं कृत्वेत्यर्थ. । राजा श्रीकुमारपालो गतः देवगृहान्नि सृतः ॥

"संयुक्तस्य" [१] । अधिकारोयम् "ज्यायाम् ईत्" [२.११५] इति यावत् ॥

मुक्क मुत्त । माउक्को माउत्त । सत्तं सक्क । डक्को दट्ठ । लुक्क लुग्ग । "शक-मुक°" [२] इत्यादिना एषु को वा ॥

*८४. अथ नृपाध्यारोहार्थम् आनीतस्य अश्वरत्नस्य गाथाषट्केन* वर्णनम् आह । षड्भिः कुलकम् । अश्वम् आरूढः । राजा इति प्रक्रमान् । कीदृशम् । लक्षणपूर्णं शालहोत्रशास्त्रोक्तसमस्तप्रशस्यचिह्नभृतम् अक्षीणं परिपूर्णसर्वाङ्गोपाङ्गम् अक्षीणगमनम् ॥

---

१ BC विच्छुअ°. २ BC जीवाय तेषां, D ते जीवास्तेषां.

खन्दपिउ-कन्द-सरिसावणीस-जुग्गं असुक-रोम-छविं ।
अणसुक्ख-मउलि-कुसुमं खेडय-जर खेडअङ्ग-रजं ॥८५॥

सिहि-सीह-वसह-वग्घाण हत्थि-हंसाण चास-नउलाण ।
तह तित्तिरस्स सरिसी सुहा गई होइ तुरयाण ॥

इति शास्त्रोक्तगतिसंपूर्णम् इत्यर्थः । अक्षीणतनुतेजसम् अन्यूनकायकान्तिम् । स्कन्धादिपु सप्तसु सप्तस्थानेपु पृथुलं विस्तृतम् । यदुक्तम् ।

वच्छ-यल-भाल-कक्खन्तराइँ तह कडिअ-खन्ध-गत्ताइं ।
पिहुलाइँ सत्त सुपसत्थ-पाय-पट्ठीय-सहियाइं ॥

पुष्करगन्धं कमलवत् सुरभिम् । यदुक्तम् ।

महु-कमल-कुट्ठ-कुङ्कुम-कयम्ब-कप्पूर-कुञ्जय-सुअन्धा ।
पय-चन्दण विल्लोसीर-जाइ-गन्धा सुहा तुरया ॥

ध्रुवा ध्रुवनामानः आवर्ता दशसंख्या भ्रमरका यस्य स तथा तम् । यदुक्तम् ।

दो सीसि दुन्नि उरे इक्को भालम्मि फुरणए इक्को ।
दो खन्धे दो अवरन्धयम्मि इअ धुअ-दसावत्ता ॥
तुरय मत्थइ बे जि आवत्त ते चन्द-सूरइं ।
पयड विन्नि उरह अग्गिणि-कुमारइं ।
वेयमत्थ भाल थलि वसइ ।
वाउ फुरणम्मि मारइ ।
खन्धह उवरन्धहँ जि ठिअ विण्णि विन्नि आवत्त ।
तिहिँ तिहिँ कमि निवसहिं सयल सोमि विसाह पवित्त ॥
जो हीणो धुआवत्तएहिँ सो हीण लक्खणो तुरओ ।
जो तेहिँ जुओ सो उण कोमल-जस मुक्ख संजणणो ॥

८५. *स्कन्दपितृस्कन्दाभ्यां श्रीकण्ठकार्तिकेयाभ्यां सदृशा ये अवनीशा* स्तेषां योग्यः अर्हः तम् । अशुष्का अरूक्षा । लावण्योपेतेति यावत् । इत्थंभूता रोम्णां छविः कान्तिर्यस्य । अशुष्कमौलिकुसुमं मार्द्रशिरोमाल्यम् । क्ष्वेडक-यशोरजस्कं दैवताधिष्ठितत्वेन विपत्तापविध्वंसकम् अङ्गरजो यस्य स तथा तम् ॥

१ BCD निउ°. २ C वेद°. ३ BC °मि. ४ B उवरंध. ५ D सामि.

थाणु-पिया-जल-पुण्णं अथाणु-वायं जणेहि दीसन्तं ।
पडिखम्भिअट्ट-थम्भय-थम्भिअ-तणु-ठम्भिअच्छेहिं ॥ ८६ ॥
रग्गं पिग-रत्त-सरं रवि-हय-सुक्कं व नील-किच्चि-छविं ।
सुङ्क-करणग्ग-चच्चर-चइत्त-ठिअ-दिट्ठि-दुच्चज्जं ॥ ८७ ॥
पच्चूहा पच्चूसे पि पञ्च-धारासु अकय-णिव्वेअं ।
णच्चा वुज्झा पिच्छीइ वण्णिअं सिक्ख-विज्जं ति ॥ ८८ ॥

८६. स्थाणोः ईश्वरस्य प्रिया गङ्गा तस्या यज्जलं तद्वत् पुण्यम् । आविद्यमानः स्थाणौ पातो यस्य जात्यत्वात् तम् । यद्वा अस्थाणुवातं रोगविशेषरहितम् । प्रतिस्तम्भिता इव तत्क्षणे तदङ्गसङ्गाद् दत्तान्यस्तम्भा इव ये अट्टानां हट्टानां स्तम्भकास्तेपु स्तम्भिता अवष्टब्धास्तनवो यैस्ते च ते स्तम्भिताक्षाश्च निश्चलनेत्रास्तैर्जनैर्दृश्यमानं भ्रूक्षेपम ईक्ष्यमाणम् ॥

८७. रक्तं सादिशिक्षास्वनुरक्तम् । पिकवद् रक्तः कलः । गम्भीर इत्यर्थः । एवंभूतः स्वरो हेपारवो यस्य स यथा तम् । यदुक्तम् ।

अच्छिन्न-गहिर-सद्दा सुपसत्था हयवरा हुन्ति ॥

नीलकृत्तिन्छविं नीलवर्णत्वक्कान्तिम् । यदुक्तम् ।

सेअङ्ग-सामकन्नो अण्णो जो सेअ-चरण-नयणो य ।
सिअ-केसरो अ नीलो ते तिण्णि वि सुप्पसत्थाइं ॥

अत उत्प्रेक्ष्यते । रवेर्ये हया अश्वास्तेषां शुल्कमिव दानमिव । यथा अन्ये वणिग् मण्डपिकायां दानं दत्त्वा चलति तथा रविणापि एतद्देशोपरि विचरता एतद् अनुप्रितमेवेत्यभिप्रायः । शुल्ककरणस्य मण्डपिकाया अग्रे चत्वरे बहुमार्ग्यां चैत्येपु देवकुलेपु [ च ] स्थितानां दृष्टिभिर्दुस्त्यजम् । कौतुकाद् निर्निमेपम ईक्ष्यमाणम् इत्यर्थः ॥

८८. प्रत्यूपात् प्रत्यूपमपि । प्रतिप्रभातम् इत्यर्थः । पञ्चधाराः ।

---

१ C पच्चूमेवि, पच्चूसा पच्चूस पि. २ From °क्ष्यते C wants the Commentary and grammer (not the text), up to लि° in लिन्नृहिं under 91 as also the couplet 91. See note 2 on page 76.
३ B प्रत्यूपेपि.

विञ्चुअ-अहिविञ्छिअ-अच्छीविस-विस-हरण-छेत्त मेअ जलं।
खुर ताडण-अखम-छमं रिक्ख-पवङ्गेस सम-वेगं ॥ ८९ ॥
अवि रिच्छ-सरिच्छेहिं सणिच्छयं सच्छणं च लोएहिं।
अच्छी-पच्छं लिच्छहिं पेच्छिअं आसमारूढो ॥ ९० ॥

आस्कन्दित धौरितक रेचित वल्गित प्लुतम ।

इति गतिविशेषा । तासु अकृतनिर्वेदम् । तत्रासक्तम् इत्यर्थ । तथा शत्वाद् विचक्षणत्वाद् वुद्धा अवगम्य प्रश्च्या प्रश्वारिथजनेन वर्णित श्लाघितम् । कथम । शिक्षया विद्वान् इति सर्वगतिकरणनिपुण इति ॥

८९ वृश्चिकाश्च घुणा । अहिमूत्रोद्भवा वृश्चिका अहिवृश्चिकाश्च *त्रीन्द्रियघुणविशेषा । अक्षिषु विष येषा ते च ते अक्षिविषा* सर्पविशेषा । तेषा यद् विष गरल तस्य हरण ध्वसक क्षेत्रस्य शरीरस्य स्वेदजल घर्माम्बु यस्य । खुराणा ताडने आघाते अक्षमा असमर्था। वेपमानेति यावत् । इत्थभूता क्षमा पृथिवी यस्मात् । ऋक्षाश्च जाम्बवदादय । प्लवङ्गाश्च हनूमदादय । तेषाम् ईश सुग्रीव तेन समवेग तुल्यत्वरितगतिम ॥

९०. ऋक्षमदृशैरपि चापल्याद् अच्छभल्लूकसदृशैरपि सनिश्चयम सावधानचित्तम । यद्वा ऋक्षसदृशैरपि चक्षुराग्रहारादिमनोहरत्वेन सारूप्यवद्भिरपि सक्षण सोत्सव च यथा भवति एवम अक्षिपथ्य लिप्सुभिर्लोकै प्रेक्षितम् ।

एवमग्र भर्वीण । " ध य °"[३]इति सम्य य ॥ क्वचितु छन्दार्थेति । अटीन । अर्थीन ॥

१ C लोएहिं. २ B निर्वेद ३ B °घुणशेषा. ४ B छन्दार्थेति

धवलगेहमइ-निचलाकिदी वच्छलो चुलुग-वंस-दीवओ ।
तच-देवय-वरेण तक्खणोसारिआखिल-दुहो पहुत्तओ ॥ ९१ ॥

खन्धाट । पोक्खर । "ष्कस्कयोर्नाम्नि" [४] इति खः ॥

खन्द कन्द । अमुक्क अणसुक्ख । "शुष्कस्कन्दे वा" [५] इति खो वा॥

खेडय । खेडअ । "क्ष्वेटकादौ" [६] इति खः ॥

अखाणु । "स्थाणावहरे" [७] इति खः । अहर इति किम् । थाणु ॥

पडिखम्भिअं अट्ट-खम्भय । "स्तम्भे स्तो वा" [८] इति स्तस्य खः ॥

थम्भिअ । ठम्भिअ । "थठावस्पन्दे" [९] इति स्तम्भे स्तस्य थठौ ॥

रग्गं रत्त । "रक्ते गो वा" [१०] इति गो वा ॥

सुक्क सुङ्ग । "शुल्के ङ्गो वा" [११] इति ङ्गो वा ॥

किचि । चचर । "कृत्तिचत्वरे चः" [१२] इति चः ॥

दुचज । "त्योऽचैत्ये" [१३] इति त्यस्य चः । अचैत्य इति किम् । चइत्त॥

पच्चूहा पच्चूसे । "प्रत्यूषे षश्च हो वा" [१४] इति त्यस्य चः । तत्संनियोगे षस्य हो वा ॥

णच्चा । बुज्झा । पिच्छीइ । विज्जंति । "त्वथ्वद्वध्वां चछजझाः क्वचित्" [१५] । एषां यथासंख्यम् एते क्वचित् ॥

विञ्चुअ विञ्छिअ । "वृश्चिके श्चेर्ञ्चुर्वा" [१६] इति ञ्चुः ॥

अच्छी । छेत्त । सरिच्छेहिं । अच्छी । "छोऽक्ष्यादौ" [१७] इति क्षस्य प्राकृतः ॥ आर्षे तु इक्खू । खीरं । सारिक्खं । इत्याद्यपि दृश्यते ॥

छम । "क्षमायां कौ" [१८] इति छः । काविति किम् । अखम ॥

रिक्ख रिच्छ । "ऋक्षे वा" [१९] इति छो वा ॥

९१. अतिनिश्चलाकृतिः अतिस्थिरस्वभावः वत्सलः जीवदया-प्रवर्तकत्वात् सर्वजननिः चौलुक्यवंशस्य प्रकाशकत्वाद् दीपक इव तथ्य. सत्यो यो देवतायाः स्वामनदेवताया वरः । होही तुह उज्जाणं

१ B पडिखम्भि. २ D पच्चूहा पच्चूस. ३ B थेञ्चुर्वा. ४ BD सरिक्खं.

सइ सव्व-रिउहिँ कय कुसुममिति [८१] प्रसादस्तेन कर्त्रा तत्क्षणे तस्मिन्नेव काले उत्सारितापिलट्टु स अपगतसमस्तचिन्त धवलगेह प्रासाद प्राप्त । राजेति शेप ॥ वैतालीयापरान्तिका छन्द । वैदनक वा छन्द । "तच्च-देवय वरेण" इति उत्तरसर्गार्थसूचनम् ॥

सच्छण । "क्षण उत्सवे" [२०] इति छ॰। उत्सव इति किम् । तक्खणो॥ सणिच्छय । पच्छ । लिच्छूहिं । वच्छलो । "ह्रस्वात् थ्यश्चत्सप्साम् अनिश्चले" [२१] इति ह्रस्वात् परेपाम् एपा छ । अनिश्चल इति किम् । निच्चला ॥ आर्पे तथ्ये चोपि । तच्च ॥

इत्याचार्यश्रीहेमचन्द्रविरचितश्रीकुमारपालचरितप्राकृताद्व्याश्रयमहाकाव्यवृत्तौ द्वितीय सर्ग समाप्त ॥

---

१ BD have पयचारो मदनकमिति before मदनर्द २ See note 2 on page 73.

कय-वम्मह-सामच्छं वर-सामत्था कओसवमुऊहि ।
नयणोच्छवमुज्जाणं गओ निवो उच्छुओ दट्ठुं ॥ १ ॥
जय-छिह-ऊसुअ-मयणो अवज्ज-निप्पिह-सभज्ज-जुव-लोओ ।
अलि-सेज्ज-चूअ-कलिओ तओ पयट्टो वसन्त-उऊ ॥ २ ॥

१. कृतमन्मथसामर्थ्यम् उद्दीपनविभावत्वाज्जनितकन्दर्पप्रकर्षम् वर-सामर्थ्यात् देवताप्रसादोत्कर्षाद् ऋतुभिर्वसन्ताद्यैः कृतोत्सवं युगपत् तत्तत्पुष्पफलप्रवालपटलैः प्रारब्धमहामहिम । नयनानां रम्यत्वाद् उत्सवम् उद्यानं क्रीडाकाननम् उत्सुकः सोत्कण्ठो नृपो द्रष्टुम् ईक्षितुं गतः ॥

२. तत्र युगपत् सर्वर्तुप्रादुर्भावेपि वाचः क्रमवृत्तित्वाद् ऋतुषु च वसन्तस्य सम्राट्कल्पत्वाद् अष्टादशात्या गाथाभिरादौ तमेव वर्णयति ॥ जयस्पृहायां धर्मार्थादिपराभवेच्छायाम् उत्सुको मदनो यत्र । अवद्ये कुव्यापारे निःस्पृहाः विमुखाः सभार्या युवलोकास्तरुणपुरुषा यत्र । अलिशय्या भ्रमरवसतयो ये चूता आम्रवृक्षास्तैः फलितः । ततः देवतावरानन्तरं वसन्तऋतुः प्रवृत्तः ॥

सामच्छं सामत्था । कओसव नयणोच्छव । उच्छुओ ऊसुअ । "सामर्थ्यो-त्सुकोत्सवे वा" [ २२ ] इति छो वा ॥

छिह । "स्पृहायाम्" [ २१ ] इति पस्य अपवादश्छः ॥ बाहुलकात् क्वचिद् अन्यदपि । निप्पिह ॥

अवज्ज । सभज्ज । सेज्ज । "द्यय्यर्यां जः" [ २४ ] इति एषां जः ॥

अहिमज्जु-जणय-अहिमञ्जु-माउ-भायाहिमन्नु-पमुहाण ।
अहिउचिआसि मयणो वणवज्झासज्झ-कुसुम-सरो ॥ ३ ॥
गय-सज्झसस्स मयरद्धयस्स कुसुमज्झओउ-दुइअस्स ।
कङ्केल्लि-पल्लव-मिसा आसि पयावो समिज्झन्तो ॥ ४ ॥
पट्टण-वहु-वलयाइअ-वट्ट-पयट्टालि-मण्डलो चूओ ।
पवण-कवट्टिअ-कुसुम-रज-सुरहि-महि-मट्टिओ जाओ ॥ ५ ॥

३. अभिमन्युजनकश्च अर्जुनः अभिमन्युमातृभ्राता बलदेवः अभिमन्युश्च ते प्रमुखा धुर्या येषां वीराणां ते तथा तेभ्यः अवन्ध्याः कार्यसाधकत्वेन सफलाः असह्याः क्षन्तुम् अशक्याः कुसुमान्येव शरा यस्य स तथाभूतो मदनः अधिक एव त्रैलोक्यवशवर्तिकारित्वेन अभ्यर्हित एवासीत् ॥ अधिकापेक्षया अनुपात्तक्रियेपादाने पमुहाणेति पञ्चमीप्राप्तौ " क्वचिद् द्वितीयादेः " [ ३. १३४ ] इति षष्ठी ॥

अहिमज्जु अहिमञ्जु । " अभिमन्यौ जञ्जौ वा " [२५] इति जो ञ्जश्च वा। पक्षे । अहिमन्नु ॥

४. गतसाध्वसस्य स्वरिपोरीश्वरस्यापि तदाज्ञाविधायित्वेन निर्भयस्य मकरध्वजस्य कुसुमान्येव ध्वजचिह्नं यस्य स चासौ ऋतुश्च स द्वितीयो यस्य । वसन्तर्तुयुक्तस्येत्यर्थः । कङ्केल्लिपल्लवमिषात् प्रतापः समिन्धान समन्ताद् दीप्यमान आसीत् ॥ प्रतापो हि आरक्तो वर्ण्यते । अशोककिशलयानि च तथा । इतीत्थम् उत्प्रेक्ष्यन्ते ॥

अणवज्झ । अवज्झ । सज्झसस्स । "साध्वसध्यह्यां ज्झः"[२६] इति ज्झः॥
द्धयस्स °ज्झओ । " ध्वजे वा " [ २७ ] इति ज्झो वा ॥
समिज्झन्तो । " इन्धौ ज्झा " [ २८ ] इति इन्धौ धातौ ज्झा ॥

५. पत्तनमेव वधूः कान्ता तस्या वलयायितं कङ्कणवद् आचरितम् यतः वृत्तं यथा भवति एवं प्रवृत्तं गन्तुम् उद्यतम् अलिमण्डलं

कामिणि-धुत्तिम-वत्ता-निवत्तणो वल्लि-नट्टईण नडो ।
पयडिअ-वम्मह-वट्टो सिढिलिअ-वासन्तिआ-वेण्टो ॥ ६ ॥
विरहिणि-विसण्ठुलट्ठी-करणो रइणाह-रइ-महु-चउट्ठो ।
कामट्ठत्थो सुहओ चउत्थ-पुरिसत्थगाणं पि ॥ ७ ॥
ठीणम्बु-सीअलो थीण-चुय-लट्ठि-महु-विन्दु-चुम्बणओ ।
वम्मह-संदट्ठेसुं इट्टाघाओ महुट्ठिअओ ॥ ८ ॥

यस्मिन् । पवनेन कदर्थितानि प्रेङ्खोलितानि यानि कुसुमानि तेषां यद् रज. परागस्तेन सुरभिः सुगन्धिर्महीमृत्तिका यस्मात् स तथाभूतश्चूतो जात. ॥

पट्टण । वट्ट । पयट्ट । कवट्टिअ । मट्टिओ । "वृत्तप्रवृत्त°" [ २९ ] इत्यादिना टः ॥

६. गाथादशकेन वसन्तर्तुसर्वस्वभूता. सुरभिशीतमृदुगुणयुक्ता मलयानिला वर्ण्यन्ते ॥ दशभि. कुलकम् । पर्यस्तलतम् इतस्तत. प्रेङ्खोलितशाखं यथा भवति एवं मलयानिलो वातो वाति स्म । कीदृशः । कामिनीना धूर्तत्ववार्ताया मानहेतुप्रावीण्यवृत्तान्तस्य निषेधकः । मलयानिले हि वाति निर्विचारं तासां प्रियाभिसरणान् । वल्ल्य एव नर्तक्यस्तासु नटः पल्लवकरप्रेङ्खत्त्वेन नृत्योपाध्याय. । प्रकटितमन्मथवार्त. प्रत्यापितकन्दर्पोदन्तः शिथिलितानि कम्पनाद् अदृढीकृतानि वासन्तिकावृन्तानि माधवीलताप्रसवबन्धनानि येन स तथा ॥

७. विरहिणीनाम् अचेतन्याङ्गसादादिकृत्त्वेन विसंस्थुलास्थिकरणः । रतिनाथरतिमधूनां कन्दर्पतत्प्रियावसन्तानां पृष्ठानुचरत्वेन चतुर्थः । कामस्य अर्थः प्रयोजनम् अर्थो धनं यस्य । चतुर्थपुरुषार्थगानामपि मोक्षमार्गप्रवृत्तानामपि शरीरसंतापनिर्वापणात् सुखदः ॥

८. स्त्यानाम्बु हिमं तद्वच्छीतलः । स्त्याना घना ये चूतयष्टिमधुबिन्दव आम्रलतामकरन्दविप्रुषः तेषां चुम्बनः अन्तर्वहनात् स्पर्शकः ।

१ BC °सर्वर्तु° २ BC मानहेतु°. ३ C °प्रावीण्य. ४ C °प्रसूनप्रसव°.

मुह-गड्ड-निवुड्डेहिँ व उच्च-विअड्डि-ट्ठिएहिँ पिज्जन्तो ।
छड्डिअ-मलउज्जाणो मड्डिअ-वेइल्ल-विच्छड्डो ॥९॥
रय-संमड्ड-सम-हरो कवड्डि-सिर-सरिअ-सलिल-सीअलओ ।
लंघिय-गड्डहवाहण-पुरो मयण-गद्दहिअ-लोओ ॥१०॥
मलयाचल-कण्डलिआ-आउह-सालाउ भिण्डिवालो व्व ।
ठड्ढेण वुड्ढ-जग-जय-छिहाइ गहिओ महु-भडेण ॥११॥

मन्मथसंदष्टेषु इष्टाघात कामार्तप्राणिपीडाप्रद इत्यर्थ । मधोर्वासन्तस्य कार्यकरणाद् औष्ट्रिक । भृत्य इत्यर्थ ॥

९. मुखस्य गर्तोपचाराद् गाहुल्यम् । तत्र निमग्नैरिव । अनवरत-सुरतव्यासक्तैरित्यर्थ. । उच्चा चासौ वितर्दिश्च वेदिस्तत्र स्थितैर्मत्तवारण-भूमिगतै. पीयमानो रतक्लमापनोदार्थं सेव्यमान । छर्दितं तदानीं दक्षिणस्या उत्तरस्या गमनाद् वान्तम् । त्यक्तम् इत्यर्थ । मलयोद्यानं येन । मर्दित अन्तर्भ्रमणेन कदर्थित विचकिलाना विच्छर्दो विस्तारो येन स तथा ॥

१०. रतसंमर्दात् सुरतासक्ते. श्रम. खेदस्तस्य हरो विध्वंसकः । यतः किंभूतः । कपर्दी ईश्वर. तस्य यच्छिरस्तत्र या सरिद् गङ्गा तस्या यत् सलिल तद्वत् शीतल । लङ्घित गर्दभवाहनस्य रावणस्य पुरं लङ्काख्या नगरी येन । मदनेन गर्दभितो गर्दभवद् आचरति स्म लोको यत्र स तथा ॥

११. मलयाचलकन्दरिकैव आयुधशाला तस्या भिन्दपाल' शस्त्र-विशेषः स इव स्तब्धेन मार्गपारेण वृद्धा महती या जगज्जयस्पृहा तया मधुभटेन वसन्तवीरेण गृहीत. ॥

दड्ढोज्जीविअ-मयणो विरहिणि-नीसास-वुड्ढि-परिवड्ढो ।
अविअड्ढ-असड्ढ-अणिड्ढीणं पि विइण्ण-रइ-सड्ढो ॥ १२ ॥
रिद्धिं पत्तो कम्पिअ-लवली-मुड्ढो वसन्त-मुद्धन्नो ।
अड्ढीकय-माणिणि-माणो पज्जुण्ण-दिण्णाणो ॥ १३ ॥
पण्णास-गुणं मयणं पण्णरह-गुणं महुं च पयडन्तो ।
मन्तुमइ-मन्नु-दलणो समत्त-लय-तम्ब-वित्थरणो ॥ १४ ॥
अविरहि-विरहि-थवातव-पत्तं पच्छत्थ-लयमपच्छट्टो ।
उच्छाहकरोणुत्थारयाण मलयाणिलो वाऊ ॥ १५ ॥

१२. दग्धोपि ईश्वरतृतीयनेत्रार्चिषा भस्मसात्कृतोपि उज्जीवित. शरीरीकृतो मदनो येन विरहिणीनि.श्वासवृद्धया परिवृद्धः विस्तृत । अविदग्धाश्च कामप्रवृत्तौ अनिपुणाः अश्रद्धाश्च तदनिच्छव अनृद्धयो दरिद्रास्तेषामपि वितीर्णरतिश्रद्ध. उत्पादितसुरताभिलाप ॥

१३. ऋद्धिं सौरभ्यादिसंपदं प्राप्त[1] कम्पिता अन्दोलिता लवली-लतानां मूर्धान. शिरांसि येन । वसन्ते मूर्धन्यः प्रधान । अर्धार्धीकृतः रतोत्कण्ठाकरणात् खण्डशो विहितो मानिनीनां मानो येन । प्रद्युम्नस्य कन्दर्पस्य दत्ता आज्ञा येन । जनानाम् इति शेष. । कन्दर्पराज्यम् अधुना जनेषु उदघोषयद् इत्यर्थः ॥

१४. पञ्चाशद्गुणं मदनं पञ्चदशगुणं मधुं च प्रकटयन् । तयोराधिक्यं जनयन्नित्यर्थः । मन्युमतीनां प्रियविप्रियेण मनोधानां प्रेयसीनां मन्यु-दलन. । सत्यादिचाटुकारम् अन्तरेणापि प्रसादनकारक इत्यर्थ. । समस्तलतास्तम्बानां विस्तरणः अनुकूलत्वेन वृद्धिजनक ॥

१५. अविरहिणश्च युवतियुक्ताः विरहिणश्च तद्विपरीता. । तेषां

---

[1] B omits 'वसन्ते ..आज्ञा येन. [2] C सगसो, B wanting.

स्तवास्तवयो शीतसंतापोद्दीपकत्वेन प्रशंसाप्रशंसयो पात्रम्। पर्यस्ता लता यस्मिन् कर्मणि तथा अपर्यस्त । इतरवायुभिरसमिश्र इति भाव । अनुत्साहाना कामार्थे अनुद्यमानाम उत्साहकर आसक्तिजनक ॥

नट्टेण । "र्तस्याधूर्तादौ" [ ३० ] इति र्तस्य ट । अधूर्तादाविति किम । वुत्तिम । वत्ता । निवत्तणो ॥ बाहुलकात् वट्टो ॥

वेण्टो । "वृन्ते ण्ट" [ ३१ ] इति ण्ट ॥

निसण्ठुल्ट्ठी । "ठोऽस्थिविसंस्थुले" [ ३२ ] इति ठ ॥

चउट्ठो चउत्थ । अट्ठत्थो । परिमत्थ । ठीण थीण । "स्त्यानचतुर्थार्थे वा" [ ३३ ] इति ठो वा। परम् अर्थशब्दे व्यवस्थितविभाषया ठत्वम्। धनार्थे न भवति॥

लट्ठि । "इष्टायाम्" [ ३४ ] इत्यादिना ष्टस्य ठ । अनुष्ट्रेष्टासंदष्ट इति किम् । संदट्ठेसु । दट्ठा । मट्ठिअओ ॥

गड्ड । "गर्ते ड" [ ३५ ] इति र्तस्य ड । अपवाद ॥

विअड्डि । छड्डिअ। मड्डिअ। विअड्डो। समड्ढ।। कवड्डि । सम‍र्द°"[३६] इत्यादिना र्दस्य डत्वम ॥

गड्डह गद्दहिअ । "गर्दभे वा" [ ३७ ] इति र्दस्य डो वा ॥

कण्डलिआ । भिण्डिवालो । 'कन्दरिकाभिन्दिपाले ण्ड' [ ३८ ] इति ण्ड ॥

ठड्ढेण । "स्तब्धे ठढौ" [३९] इति यथाक्रम ठढौ ॥

वुड्ढ । दड्ढो । वुड्ढि । अविअड्ढ । "दग्ध" [ ४० ] इत्यादिना ढ ॥ धनिद्ध । परिविद्धो ॥

अड्ढ अद्धो । अणिड्ढीण सिद्धि । मुड्ढो मुद्धो । अड्ढो । "श्रद्धर्द्धि" [ ४१ ] इत्यादिना ढो वा ॥

पज्जुण्ण । आणा । "म्नज्ञोर्ण" [ ४२ ] इति ण ॥

दिण्णा । पण्णास । पण्णरह । "पञ्चाशत्पञ्चदशदत्ते" [ ४३ ] इति ण ॥

मण्णु मन्नु । "मन्यौ न्तो वा" [ ४४ ] इति न्तो वा ॥

१ BC मन्न°. २ BC omit 'पर्यस्ता ... भाव'. ३ BC omit मुड्ढो.

भमरालिद्धे झसचिन्धय-चिण्हे आमि सिन्दुवारम्मि ।
भस्सिय-झसिन्ध-जीवाउ-भप्प-चुण्णं किर पराओ ॥ १६ ॥
अप्पाणत्ता मुक्को मरियप्प-पिएहि पहिअ-मत्थेहिं ।
कङ्किल्लि-कुम्पलं रुप्पिणि-सुअ-त्ताणं व दट्ठूण ॥ १७ ॥
रुच्मि-निव-सरिस-जोव्वण-गुणेहि तस्मि कया जुआणेहि ।
पुप्फिअ-असोअ-विपिणे परोप्पर-प्फद्धमन्दोला ॥ १८ ॥

वित्थरणो । "स्तस्य" [४५] इत्यादिना स्तस्य थ. । असमस्तस्तम्ब इति किम् । समत्त । तम्ब ॥

थवातव । "स्तवे वा" [४६] इति स्तस्य थो वा ।

पल्हत्थ पल्लट्टो । "पर्यस्ते थटौ" [४७] इति पर्यस्तेण थटौ ॥

उच्छाह अणुत्थारयाण । "वोत्साहे थो ह्श्च रः" [४८] इति थो वा । तत्संनियोगे च ह्रस्व रः ॥

१६. भ्रमरैराश्लिष्टे सौरभ्यलोभाद् आलिङ्गिते झपचिह्नकस्य कामस्य चिह्वे उत्कण्ठादायकत्वेन व्यञ्जके सिन्दुवारे निर्गुण्डे भस्मितः समाधिभङ्ग-प्रकुपितत्र्यम्बकतृतीयनेत्रजाज्वल्यमानज्वलनज्वालया भस्मसात्कृतो यो झपचिह्नस्तस्य जीवातोर्जीवनौषधस्य भस्मसदृशचूर्णमिव संभाव्यते परागः॥

आलिद्धे । "आश्लिष्टे लधौ" [४९] इति यथासंख्य लधौ ॥

चिन्ध झसिन्ध । "चिह्ने न्धो वा" [५०] इति न्धः । ण्हापवादः । पक्षे योपि । चिण्हे ॥

१७. रुक्मिणीसुतत्राणमिव जगन्मोहनात् पञ्चशरशरमिव कङ्केल्लि-कुड्मलम् अशोकाविकासितकुसुमं तत्प्रवालं वा दृष्ट्वा स्मृता सौख्याय अनुध्याता आत्मप्रिया यैस्ते तथा तैः पथिकसार्थैः आत्मनः आत्मा स्वजीवो मुक्तः । ते तदा तद्दर्शनात् क्षोभेण मृता इत्यर्थः ॥

भस्सिय भप्प । अप्पाणत्ता अप्प । "भस्मात्मनोः पो वा" [५१] इति इति पो वा ॥

१८. पुष्पिताशोकविपिने तस्मिन् उद्याने रुक्मी रुक्मिणीभ्राता

१ D जाज्वलज्ज्वलन°.

मो वि बुहप्फइ-सीसो बुहप्पई सो वि तत्थ ओच्छरिओ ।
निप्पहिअ-तिअस-लीलं दोला-लीलोसवं दट्ठुं ॥ १९ ॥
विरहिअ-भिप्फं असिलिम्ह-कण्ठयं विगय-सेफ-कण्ठेहिं ।
तम्बम्ब-दलोत्तंसं दोलिर-तरुणीहि अह गीअं ॥ २० ॥

स चासौ नृपश्च तेन सदृश यौवन गुणाश्च येषा तैर्युवभि परस्परम् अन्योन्य स्पर्धा अभिभवेच्छा यत्र तद् यथा भवति एवम् अन्दोल्यते अस्याम इत्यन्दोला प्रेङ्खा कृता ॥

कुम्पल । रुप्पिणि । "ड्मक्मो "[-२] [इति]प ॥ क्वचित् च्मोपि । रुच्मि॥

१९ अथ वसन्तक्रीडापीड दोलाविलास गाथाष्टकेन वर्णयति । सोपि भूमण्डलाखण्डलत्वेन प्रसिद्धोपि बृहस्पते बृहस्पतिनामोपाध्यायस्य शिष्य श्रीकुमारपालनृप सोपि तदुपाध्यायत्वेन विशदप्रज्ञार्द्धियुक्तत्वेन च उत्कृष्टोपि बृहस्पति तत्र उद्याने निष्प्रभिता स्वातिशयात् पराभूतात्रिदशाना लीला क्रीडा येन तत् तथाभूतं दोलालीलोत्सव द्रष्टुम अवस्तृत आगत । अपिशब्द समुच्चये ॥

पुप्फिअ । °प्फद । ' प्पस्पयो प " [५३] इति प ॥ बाहुलकात् क्वचिद् स । उप्फर । बुहप्पई ॥ वणिप्र । परोप्पर । निप्पहिअ ॥

२०. विरहितं त्यक्तं भीष्म श्रुतिकटुकत्व येन तत् । सुकुमारम् इत्यर्थ । अथवा विरहिताना वियुक्ताना भीष्म भयावह विरहोद्दीपकत्वात् । अविद्यमान श्लेष्मा कफो यत्र स तथा एवंभूत कण्ठो यत्र । ताम्राणि यान्याम्रदलानि तेषाम् उत्तंस आपीडो यत्र तद् यथा भवति एवम् । विगतश्लेष्मकण्ठै । तरुणै सहृदयर्थात् । दोलयन्तीत्येवं शीला दोलायिन्य । ताभि ता तरुण्यस्ताभि अथ दोलाध्यारोहानन्तर गीतं गायित स्म ॥ पान्थै सह दोलाध्यारूढाभिस्तरुणीभिर्गीतं प्रसन्न इत्यर्थ ॥

१ BC सर्वं यत्र स दोलने सह

अखलिअ-जिब्भं पइ-नाम पुच्छिआ तत्थ खलिअ-जीहाओ ।
मय-विहलाहिं मय-भिब्भलाओं लट्ठीहि विब्भलिआ॥२१॥
उब्भमणुद्धं च ठिआ दोलासुं विज्ज-विजिय-कम्हारा ।
कम्भारजम्म-पीवल-कर-जुग्गय-चरण-जुम्माओ ॥ २२ ॥
कय-बम्भचेर-भङ्गा सुन्देरेणं स-ब्रम्हचरिआण ।
चल-नेउर-जय-तूराहिअ-सर-सोडीर-धीराओ ॥ २३ ॥

भिप्फं । " भीष्मे ष्मः " [ ५४ ] इति ष्मस्य फः ॥
असिलिम्ह सेफ । " श्लेष्मणि वा " [ ५५ ] इति ष्मस्य फो वा ॥
तम्बम्ब । " ताम्राम्रे म्बः " [ ५६ ] इति मयुक्तो बः ॥

२१. षड्भिः कुलकम । धरणिबृहस्पतिशिष्येण पृथ्वीपुरंदरेण । राज्ञेत्यर्थः । सकलकलाकौशले बृहस्पतिना सुराचार्यसदृशेन उपनतानि आरामिकैर्ढौकितानि वनस्पतीनि वनस्पतिफलानि यस्य स तथा । तेन वनस्पतिवने वृक्षवने । वनं जलाद्यपीति तद्व्यवच्छेदार्थं वनस्पतिग्रहणम् । वनिता अङ्गना दृष्टाः ॥ कीदृश्य' । स्खलिता. पतिपुरतः पतिनामप्रच्छनोद्भूतलज्जया अविस्पष्टा जिह्वा रसना यासां तास्तथा । यतो मदेन क्षीबतया विह्वला विसंस्थुला यष्टिभिर्यष्टिघातैः कृत्वा विह्वला व्याकुलीकृता अस्खलितजिह्वम् । व्यक्तम् इत्यर्थ. । एवं तत्र उद्याने मदविह्वलाभिः । वयस्याभिरिति गम्यते । पतिनाम पृष्टाः ॥

२२. विद्यया जितकाश्मीराः कलाकौशल्येन विजितसरस्वतीदेश-कश्मीरपण्डिताः । कश्मीरजन्मना कुङ्कुमेन पीतं पीतवर्णं करयुग्मं चरणयुग्मं च यासां ता' । तथा दोलासु प्रेङ्खासु उर्ध्वम् अनूर्ध्वं च स्थिताः ॥ काश्चिद् उपविष्टा अन्दोलयन्ति काश्चिद् ऊर्ध्वा एवेति भाव' ॥

२३. सब्रह्मचर्याणां नियमितमैथुनसेवानां सौन्दर्येण अङ्गोपाङ्गा-

१ D °कश्मीराः.

धिज्ज गुरु घुम्मण समुन्नय पय पेरन्त-हणिअ पञ्जन्ते ।
खण-पुप्फिए असोए अच्छेरस्स वि कयच्छरिआ ॥ ७४ ॥
अच्छअर सोअमल्ला कयच्छरीआ पिअच्छरिज्जाण ।
पल्लत्थ दीहगोरम्अमभिपल्लाणिअ पिअ कडीओ ॥ ७५ ॥

कूतरम्यत्वन कृत्वा कृतब्रह्मचर्यभङ्गा जनितब्रह्मव्रतलोपा । चला नूपुरा एव जयतूर्याणि त आहिते स्मरस्य शौण्डीर्य च पराक्रमो धैर्य च अकातरत्व यकाभि ॥ वीराणा हि जयतूर्यश्रवणात् समराय उत्साह धैर्ये प्रादुर्भवत तथा मञ्जीरझङ्कारे च स्मरस्य अत्यन्तोल्लासाद् इत्यम उक्ति ॥

७४ धर्येण गुरुघूर्णन बहुभ्रमण यस्य स चासा समुन्नतपादश्च तस्य पर्यन्तेन प्रान्तेन हत पर्यन्तो यस्य । अत एव क्षणपुष्पिते तत्काल मेव सञ्जातकुसुमे अशोके सति । आश्चर्ययोगात् पुमानप्याश्चर्य । तस्यापि तादृक्कान्तादर्शनेन सकौतुकस्यापि कृताश्चर्या । तत्काल एव पादप्रहारमात्रेण अशोकपुष्पोत्पादनेन जनितकौतुकान्तरा इत्यर्थ ॥

७५ आश्चर्यम अत्यद्भुत सौकुमार्य मृदुत्व यासाम् । प्रियाश्चर्या णा कृताश्चर्या उत्पादितकुतूहला । पर्यस्तौ पार्श्वत क्षिप्तौ दीर्घा ऊरू सक्थिनी यत्र इत्येवम अभिपर्याणिता पल्ययनीकृता प्रियाणा कट्यो यकाभिस्तास्तथा ॥

निम्म जीहाओ । "ह्रो भा वा" [ ५७ ] इति ह्रस्य भो वा ॥
विम्हाहिँ विम्हआओ विम्हलिआ । "वा विह्वले वौ वश्च" [ ५८ ] इति ह्रस्य भो वा तत्संनियोगे च वेर्वस्य वा भ ॥
उब्भ आणद । "अत्र [ ५९ ] इति भो वा ॥
कम्हारा कम्भार । "कश्मीरे म्भो वा" [ ६० ] इति म्भो वा ॥
अम्ह । "म्मा म [ ६१ ] इति मस्य म । अधालोपापवाद ॥

---

१ BC °सोउमल्ला°

घरणि-बहस्सइ मीसेण सयल कल-कोमले बहप्फइणा ।
विलया वणस्सइ-वणे दिट्ठा उववणय-वणप्फइणा ॥२६॥
बप्फुल्ल-नयण-बाहुल्ल-लोयणीस्य पउत्थमुल्लसिअं ।
दस-काहावण-वीस-कहावण-मुल्लं तिलय फुल्लं ॥२७॥

जुग्गय जुम्माओ । "ग्मो वा" [६२] इति ग्मस्य मो वा ॥

बम्भचेर । सुन्देरेण । सोंडीर । तूर । 'ब्रह्मचर्य' [६३] इत्यादिना र्यस्य र । जापवाद । चौर्यसमत्वात् बम्हचरिआण ॥

धीराओ धिज्ज । 'धैर्ये वा' [६४] इति र्यस्य रो वा ॥

पेरन्त । 'एतः पर्यन्ते" [६५] इति एकारात् र्यस्य र । एत इति किम् । पज्जन्त ॥

अच्छेरस्स । 'आश्चर्ये" [६६] इति एकारात् र्यस्य र । एत इत्येव । अच्छरिआ । अच्छअर । अच्छरीआ । पिअच्छरिआण । 'अतो रिअ" [६७] इत्यादिना अकारात् र्यस्य रिअ अर रिज्ज रीअ इत्यादेशा । अत इति किम् । अच्छेरस्स ॥

सोअमल्ल[1] । पल्लत्थ । अभिपल्लाणिअ । "पर्यस्त [६८] इत्यादिना र्यस्य ल्ल ॥

बहस्सइ बहप्फइणा । वणस्सइ वणप्फइणा । "बृहस्पतिवनस्पत्योः सो वा' [६९] इति सो वा ॥

२७ बाष्पेण उष्मणा । प्रियाविरहसंतापोत्थस्वेदेनेति यावत् । आर्द्राणि क्लिन्नानि वस्त्राणि येषां ते च बाष्पैः कान्तावियोगोत्थाश्रुभिः आर्द्राणि लोचनानि च येषां ते च । ततश्चिद्वन्द्वे बाष्पार्द्रवस्त्रबाष्पार्द्रलोचनीकृता प्रोषिता येन । दश कार्षापणा विंशति कार्षापणाश्च मूल्यं यस्य तत् तथाभूतं तिलकपुष्पं वृक्षविशेषपुष्पम् उल्लसितं विकसितम् ॥

बाहुल्ल । "बाष्पे होऽश्रुणि' [७०] इति ह । अश्रुणीति किम् । बप्फुल्ल ॥

काहावण । "कार्षापणे ' [७१] इति ह ॥ कथं कहावणेति । "ह्रस्वः संयोगे" [१ ८४] इति प्राग्गेन ह्रस्वत्वे पश्चात् हादेशे कहावणेति भविष्यति ॥

1 BC सोमल्ल

दुहिआण दुक्ख-हरणम्मि दक्खिणो काम-दाहिण-करो व्व।
उम-तित्थिआण तुहं फुड-फुल्लो आसि महुअ-तरू ॥२८॥
पायाहओ असोओ कोहलि-सामाहिँ पम्हलच्छीहिँ।
कोहण्डी-कुसुमो कम्हारुज-किसलो अ हवइ म्ह ॥२९॥
नव-रवि-रम्मि-पसरणो सर-उम्ह-करो अलक्खिव चम्ह-तरू।
रोलम्ब-मण्ह-रव-कय-मागय-पण्हो महु-सिरीए ॥३०॥

२८. दुःखितानाम् अननुकूलकलत्रत्वेन पीडितानां दुःखहरणे दक्षिणः तदभीप्सितार्थसाधकत्वेन हितः। अत उत्प्रेक्ष्यते कामस्य दक्षिणकर इव। तत्करसाध्यकार्यस्य तेनापि निष्पादनात्। उमातीर्थिकानां गौरीभक्तानां तीर्थम्। तत्र गौरी वसतीति श्रुतेः। तेषां भक्तिस्थानम् स्फुटफुल्लो विकसितकुसुमः मधूकतरुरासीत्॥ उमेति "दीर्घह्रस्वौ मिथो वृत्तौ" [१.४] इति ह्रस्वः॥

दुहिआण दुक्ख। दक्खिणो दाहिण। तित्थिआण तुह। "दुःखदक्षिणतीर्थे वा" [७२] इति रो वा॥

२९. कूष्माण्डीवत् श्यामाः श्यामवर्णास्ताभिः पक्ष्मलाक्षीभिः अशोकः पादेन आहतः। ततः कूष्माण्डीकुसुमवत् कुसुमानि यस्य स तथा। कश्मीरजं कुङ्कुमं तद्वत् किसलयानि च यस्य स तथाभूतश्च भवति स्म। स्वदोहदसंप्रापितः शाद्वलः संवृत्त इति भावः॥

कोहण्डि कोहण्डी। "कूष्माण्ड्यां ष्मो लस्तु ण्डो वा" [७३] इति ष्मा इत्यस्य हः। ण्ड इत्यस्य तु वा लोऽटि॥

३०. नवरविरश्मिवद् रक्तानि प्रसृतानि यस्य। स्मरस्य उत्सवकरः दर्शनमात्रेणैवस्य स्मरोत्सवजनकः। मधुश्रियाः वसन्तलक्ष्म्या रोलम्बा भ्रमरास्तेषां मुखरा या ये वा गुञ्जितानि तैः कृतस्वागतप्रश्न इव प्रसन्नः पलाशः ऊर्जस्वि मन्यते स्म॥

१ BCD रे for रु.

जण्हवि-जल-ससि-जुण्हा-सीयलमलि-पडल-कसण-कसिण-दलं
अवरण्ह-विअसिअं आसि पाडलं रइअ-पल्हायं ॥ ३१ ॥
अक्खलिअ सुत्त-निच्चल-अणिट्ठुरोग्गीव-छच्चरण-भुत्तं ।
विरहिणि-दुक्खोप्पायन्तप्पायं कुरंवयं फुडिअं ॥ ३२ ॥
खग्गि-पिअ-सेर-मुद्धय-सिरीस-लग्गा अलक्खि भमरोली ।
नासीकय व्व भल्ली विकमि-कन्दप्प-वीरेण ॥ ३३ ॥

पम्हल । कम्हार । म्ह । उम्ह । बम्ह । "पक्ष्मश्म°" [७४] इत्यादिना पक्ष्मस्थस्य क्ष्मस्य श्मष्मह्मा च म्हः ॥ कचिन्न । रस्सि । सर ॥

३१. जाह्नवीजलशशिज्योत्स्नावत् शीतलम् अलिपटलैः कृत्वा कृष्णानि नीलानि कृत्स्नानि समस्तानि दलानि यस्य तत् तथा अपराह्णकाले विकसितं रचितप्रह्लादं सौरभ्यादिना कृतप्रमोदं पाटलं पाटलिपुष्पम् आसीत् ॥

सण्ह । पण्हो । जण्हवि । जुण्हा । अवरण्ह । "सूक्ष्म°" [७५] इत्यादिना सूक्ष्मस्थस्य क्ष्मस्य श्नष्णस्नह्नह्णक्ष्णां च ण्ह ॥ विश्लेषे तु कृष्णकृत्स्नयोः कसण कसिण ॥

पल्हाय ॥ "ह्लो ल्ह" [ ७६ ] इति ह्लस्य ल्हः ॥

३२ अस्खलितं निरुपद्रवं यथा भवति एवं सुप्ता अत एव निश्चला अप्रकम्पा अनिष्ठुरोद्ग्रीवा कोमलोर्ध्वकन्धरा ये षट्चरणास्तैर्भुक्तम् आस्वादितमधु । विरहिणीनां दुःखोत्पादे कष्टविधाने अन्तप्रायं मृत्युप्रायं कुरबकं स्फुटितं विकसितम् ॥

३३. खड्गिनां गण्डकानां प्रियाणि स्मेराणि विकचानि मुग्धकानि मनोज्ञानि यानि शिरीषाणि शिरीषपुष्पाणि तेषु लग्ना मकरन्द-

१ BCD कुरुवय. २ D सूक्ष्मस्यक्ष्मस्य. ३ B दु खोत्पादेकविधानोऽन्तप्राय.

भव्व-सरा वण-दारे सदिअ-विकव-पउत्थ-वहु-वन्द्रा ।
भद्दं व भद्द-सिरिणो पढिउं लग्गा पिगी महुणो ॥ ३४ ॥
वक्कलि-दिआण मव्वाणोव्वेय-करी अकम्मसाणं पि ।
आबल्ल-विरत्ताणं वि दारन्ती हियय-दाराइं ॥ ३५ ॥

लोभाद् आसक्ता भ्रमरालिः अलक्षि उत्प्रेक्षिता । यदुत विक्रमि-कन्दर्पवीरेण पराक्रमकलितमरसुभटेन भल्लिर्बाणविशेषः सैव न्यासी-कृता प्रस्तावे ग्रहीष्ये [ इति ] स्वमित्रवसन्ततुप्रधाने शिरीषवृक्षे स्थापिता ॥

अक्खलिअ । मुत्त । निच्चल । अणिट्ठुरीगेवि । छच्चरण । भुत्तं दुक्खोप्पाय । अन्तप्पायं । खग्गि । मुद्धय । "कगट०" [७७] इत्यादिना एषाम् ऊर्ध्वस्थितानां लुक् ॥

मेर । लग्गा । नासी । "अधो मनयाम" [७८] इति मनयाम् अधःस्थानां लुक् ॥

३४. युग्मम । वनद्वारे काननमुखे शब्दितानि कूजितव्याजेन नूनम अधुना युष्मत्प्रेयानागमिष्यतीति वार्तितानि विक्लवानि स्मर-विह्वलानि प्रोषितवधूनां वन्द्राणि [ वृन्दानि ] यया सा तथा । भव्यस्वरा मती । उत्प्रेक्ष्यते । भद्रश्रियः सर्वर्तुरम्यत्वेन मनोज्ञलक्ष्मी-कस्य मधोर्वसन्तस्य भद्रमिव मङ्गलवाक्यमिव पठितुं लग्ना पिकी कोकिला । अन्यापि गायिकी ईश्वरगृहद्वारे मङ्गलं गायतीति ॥

३५. भूयः किंभूता । सर्वेषां वल्कलिद्विजानां तरुत्वक्परिधान-तापसानाम उद्वेगकरी संतापजननी । स्मरज्वरोत्पादनात । अकल्मषाः शुभध्यानक्षिप्तपापाः तेषामपि आबाल्यं शैशवाद् आरभ्य विरक्ता भवभोगेभ्यस्तेषामपि हृदयद्वाराणि चित्तमध्यानि दारयन्ती पीडयन्ती ॥

विक्कमि । कन्दप्प । सदिअ । विकव । वक्कलि । "सर्वत्र लवराम् अवन्द्रे" [७९] इत्यूर्ध्वाधःस्थितानाम् एषां लुक् ॥ संयुक्तानाम उभयप्राप्तौ यथादर्शनं लोपः ।

१ BC °विरत्तानं. २ BC युष्मत्प्रिया नागमिष्यन्तीति.

अगणिअ धाइं धारी-सुआणुसरिआओं कोउहल्लेण ।
फुल्लन्धुअ-धत्ति धाविआओं बाला नवं लवलिं ॥३६॥
मायन्द-निउञ्जे कूजिएहिँ अन्नाण-जाणि-मण-हरणा ।
मत्ता अतिण्ह-सर-सर-तिक्खण-विण्णाणिणि व्व पिगी ॥३७

क्वचिद् ऊर्ध्वम् । सव्वाणो । अकम्मसाणं ॥ क्वचित्त्वधः । दिआण । आवल्ल ॥ क्वचित् पर्यायेण । धारे दाराई । अवन्द इति किम । वन्द्र । संस्कृतसमोयं प्राकृतशब्दः । अत उत्तरेण विकल्पोपि न निषेधसामर्थ्यात् ॥

मद्दं भद्द । "द्रे रो न वा" [८०] इति द्रे रस्य वा लुक् ॥

३६. धात्रीम आमलकीं बालधारिकां वा अगणयित्वा अनादृत्य धात्रीसुताभिः अनुसृताः पृष्ठतोनुगता बालाः कुमारिकाः । फुल्लन्धुअ इति देश्यो भ्रमरार्थः । तेषां मकरन्ददुग्धदायित्वेन धात्रीमिव नवां तत्क्षणप्रादुर्भूतकोरकत्वेन प्रत्यग्रां लवलीं धाविताः कुतूहलेन । पुष्पादिरामणीयकातिशयकौतुकेन तां प्रति गताः ॥

धाइं धत्ति । "धात्र्याम्" [८१] इति रस्य लुक् । पक्षे धारी ॥

३७. चूतनिकुञ्जे आम्रगहने कूजितैः कृत्वा अज्ञाना मूर्खाः ज्ञानिनो विद्वांसः । तेषां मनसां हरणी । रणरणकहेतुत्वेन वैक्लव्यकारिकेत्यर्थः । अतस्तर्क्यते । अतीक्ष्णाः स्वकार्यकरणासमर्थत्वेन कुण्ठा ये स्मरशरा स्तेषां तीक्ष्णने उत्तेजने विज्ञानिनीव विचक्षणेव । मत्ता आम्रमञ्जरीस्वादनेन पुष्टा पिकी अस्ति ॥ चूतस्य माकन्दादेशो "गोणादयः" [२.१७४] इत्यनेन । संस्कृतेपीत्यन्ये ॥ तीक्ष्णं करोति "णिज् बहुलम्" [है० ३.४] इति णिजि अन्त्यस्वरलोपे तीक्ष्ण्यते इति भुटि तीक्ष्णनम् ॥

अतिण्ह तिक्खण । "तीक्ष्णे णः" [८२] इति णस्य लुग् वा ॥

अन्नाण जाणि । "ज्ञो ञः" [८३] इति ञस्य लुग् वा ॥ क्वचिन्न । विण्णाणिणि ॥

मज्झण्हतरू मज्झण्ण-पुप्फ जीविअ-दसार-वड-पुत्तो ।
महु-जुव-मंसु-मरिच्छालि-गुच्छओ आसि मण-हरणो॥३८॥
हरिअन्द-रुप्पि-सरिसाण नि पहिआणं वणं ममाणं व ।
रत्तीसु अराईसु नि कमिण-पलासेहि खोहयरं ॥ ३९ ॥

३८. मध्याह्नपुष्पैर्मध्याह्नकालविकासिभि प्रसूनैर्जीवित समाधि भङ्गप्रकुपितत्रिनेत्रतृतीयनेत्रज्वालया भस्मितोपि प्राणित दशार्हपते र्विष्णो• पुत्र अनङ्गो येन स तथा । मधुयूनो वसन्ततरुणस्य श्मश्रु-सदृशो दम्रिकाकल्प अलिगुच्छो भ्रमरस्तबको यत्र स तथा मध्याह्नतरु अत्यन्तरक्तमध्याह्नविकाशिपुष्पो वृक्षभेदो मनोहरण अतिरम्यत्वात् सकललोकचित्तावर्जक आसीत् ॥

मज्झण्ह मज्झण्ण । " मध्याह्ने ह " [ ८४ ] इति हस्य लुक् वा ॥
दसार । " दशार्हे " [ ८५ ] इति हस्य लुक् ॥

३९ हरिश्चन्द्रो राजर्षि रुक्मी च रुक्मिणीभ्राता । तयो सदृ क्षाणामपि । नि प्रकम्पानामर्पीत्यर्थ । पथिकाना वन कानन श्मशान वत् पितृवनवत् । रात्रिषु अरात्रिष्वपि । अहर्निशम इत्यर्थ । कृत्स्न-पलाशै समस्ततरुजातिपर्ण समस्तकिंशुकैर्वा कृत्वा क्षोभकरं प्रिया-वियोगवेदनाजनकम् आसीत् । श्मशानमपि पलाशैर्मांसास्वादिभि र्भूतशाकिनीप्रभृतिभिर्धीराणामपि भीतिम् आवहति ॥

मसु । मसाण । " आदे श्मश्रुश्मशाने " [ ८६ ] इति आदेर्लुक् ॥ आर्षे श्मशानस्य सीआण सुसाण इत्यपि ॥
हरिअन्द । " श्चो हरिश्चन्द्रे " [ ८७ ] इति श्च इत्यस्य लुक् ॥
रत्तीसु अराईसु । " रात्रौ वा " [ ८८ ] इति टग् वा ॥
रुप्पि । रत्तीसु । "अनादौ शेषादेशयोर्द्वित्वम् "[८९] इति द्वित्वम्॥ क्वचिन्न। कसिण । अनादाविति किम् । खोह ॥

---

१ BC मज्झण्णतरू, २ D पथिकाना पान्थाना वन.

मुच्छिर-सरा कय-गुणक्खाण व्व अविग्घ-कट्ठमहु-पाणे ।
नीसास-निज्झरा इव चउ-कट्ठं मिसिर-सिरि-मुक्का ॥ ४० ॥
निब्भर-महद्धि-गन्धे वण-सिरि-गुप्फत्थ-नील-मणि-निउरा ।
अच्छि-पडिक्खण-मज्झे अबुड्ड-चउले गया आलिणो ॥ ४१ ॥
भसलालिद्ध-पसत्थोग्गय-पुप्फो आसि कामि-भिब्भलणो ।
दिग्घामोओ दीहं ऊससिअ-रईसरो सिग्गिमो ॥ ४२ ॥

४०. युग्मम् । अवृद्धवकुले नवकेसरे अलयो गताः । मूर्च्छितो वर्धनशीलः स्वरो गुञ्जितं येषां ते तथा सन्तः । उत्प्रेक्ष्यन्ते[1] । कृत गुणाख्याना[2] इव विहितमाधुर्यादिप्रशंसा इव । क । अविघ्नं निरुपद्रवं यत् काष्ठमधुन. कुसुममकरन्दस्य पानं स्वादनं तत्र । तथा नि.श्वास-निर्झरा इव । वसन्तश्रीपराभूतत्वेन सकष्टत्वाद्दीनः श्वसनप्रवाहा इव चतु.काष्ठं चतसृषु दिक्षु शिशिरश्रिया शीतकाललक्ष्म्या मुक्ताः ॥

४१. वनश्रियो गुल्फस्थाश्चरणग्रन्थिस्था गुञ्जितश्यामलत्वयुक्तत्वेन नीलमणीनां नूपुरा इव निर्भरः मसृणदिक्चक्रव्यापी महर्द्धिगन्धो यस्य तस्मिन् अक्षिप्रतीक्षणमध्ये । चक्षुर्निमेषमात्र इत्यर्थ. ॥

४२. भसलैः आश्लिष्टानि मकरन्दपानाय आश्रितानि प्रशस्तानि मनोहराणि प्रादुर्भूतानि उद्गतानि पुष्पाणि यस्मिन् स तथा कामिनां विह्वलनः । प्रियां प्रति उत्कण्ठाजननाद् अभिमानहारक इत्यर्थः । दीर्घामोदः सर्वत्र प्रसृमरपरिमलः । दीर्घम् अत्यर्थं यथा भवति एवम् उच्छ्वसितरतीश्वर. उज्जीवितकन्दर्पः शिशिर आसीत् ॥

मुच्छिर । गुणक्खाण । अविग्घ । कट्ठ । निज्झरा । कट्ठ । निब्भर । महद्धि ।
*गुप्फत्थ । अच्छि । पडिक्खण । मज्झे । अबुड्ड । आलिद्ध । पसत्थो । पुप्फो ।*

---

1 C उत्प्रेक्ष्यते. 2 BD गुणख्या° 3 C उच्छ्वासित°.

वम्मह-तंस-सरोवम-संझा-सुन्देर-हारि-कुंपलओ ।
विहलिअ-पहिओ धट्ठज्जुण-भाउ-समे वि कामकरो ॥ ४३ ॥
कणिआर-तरू नव-कण्णिआर-सुन्देर-दरिअ-सब्भावो ।
हर-खन्द-जुग्ग कुसुमो जाओ रञ्जिअ-हर-क्खन्दो ॥ ४४ ॥

भिब्भलणो । "द्वितीयतुर्ययोरुपरि पूर्वः" [९०] इति द्वित्वप्रसङ्गे उपरि पूर्वः ।
दिग्घा दीह । "दीर्घे वा" [९१] इति घस्योपरि पूर्वो वा ॥

४३. युग्मम् । हरस्कन्दयोर्योग्यानि पूजार्हाणि कुसुमानि यस्य अत एव रञ्जितहरस्कन्द प्रमोदितशंकरकार्तिकेय. कर्णिकारतरु: जातः । कीदृश' । मन्मथस्य त्र्यस्रास्त्रिकोणा ये शरास्तैरुपमा येषां तानि तथा । ताम्रत्वेन संध्यासौन्दर्यस्य हारीणि [ अपहर्तृणि ] कुड्म-लानि उद्भिद्यमानपत्राणि यस्मिन स तथा । विह्वलिता प्रियास्मरणाद् उद्वेजिता पथिका येन स तथा । आस्ताम अन्यस्मिन् । धृष्टद्युम्नभ्राता शिखण्डी नपुंसको द्रुपदपुत्रस्तेन समस्तुल्य. तस्मिन्नपि कामकर सुरतेच्छोत्पादक' ॥

४४. नवानि यानि कर्णिकाराणि स्वपुष्पाणि तेषां यत् सौन्दर्यं चारुता तेन दृप्तसद्भाव अन्यवृक्षपुष्पसमृद्ध्याधिक्यात् साहंकार· प्रकृति. ॥

ऊससिअ । रहंसरो । तस । सझा । कुंपलओ । "न दीर्घानुस्वारात्" [९२] इति न द्वित्वम् ॥

सुन्देर । विहलिअ । "रहोः" [९३] इति न द्वित्वम् ॥

धट्ठज्जुण । "धृष्टद्युम्ने णः" [९४] इति न द्वित्वम् ॥

कणिआर कण्णिआर । "कर्णिकारे वा" [९५] इति वा न द्वित्वम् ॥

दरिअ । "दृप्ते" [९६] इति न द्वित्वम् ॥

पिअ-कुसुम-पयर-पुरिअ कुसुम-प्पयरो पमुक्क-मेर-सिरी ।
तेल्ल-मणिद्धालि-कुलापम्मुक्को आसि वेइल्लो ॥ ४५ ॥
कोल्ला-मोत्त-पडिच्छन्दीकय-रय-सेव्व-घम्म-सलिलाण ।
पुप्फिअ-लवली जाया सेवा-जुग्गा मयच्छीणं ॥ ४६ ॥
महु-नक्ख-आउह-नह व्व आसि माराङ्गि-वत्थ-कन्तीइं ।
छमरुह-रयण-पलासे कुसुमाइँ मलाह-पत्ताइं ॥ ४७ ॥

४५. प्रियः केशकलापादिसौरभ्याय अभिप्रेतः कुसुमप्रकरो येषां ते तथा तेषां पूरितः संपादितः कुसुमप्रकरो येन। प्रमुक्तमेरश्रीः निरवधिसमृद्धि । तैलवत् स्निग्धम् अच्छकान्ति यद् अलिकुलं तेन मधुपानलोभाद् अप्रमुक्तः विचकिल आसीत ॥

[इर सन्द इर-वत्सन्दो] । कुसुम पयर कुसुम-प्पयर । "समासे वा"[९७] इति द्वित्वम् ॥ बाहुलकाद् अशेषादेशयोरपि । पमुक्क । पम्मुक्क इत्यादि ॥

४६ कुल्या कृत्रिमा सरित् तद्रूपं यत् स्रोतः प्रवाहस्तस्य प्रतिच्छन्दीकृतं सदृशं रतसेवया घर्मसलिलं यासां तासां मृगाक्षीणां पुष्पितलवली सेवायोग्या रतिश्रमापनोदाय सेवनीया जाता ॥

तेल्ल । वेइल्लो । सोत्त । " तैलादौ [९८] इति द्वित्वम् । आर्षे । पडिसोओ। विस्सोअसिआ ।

४७. मधुर्वसन्तः स एव पान्थभीपकत्वाद् नखायुधः सिंहः तस्य आरक्तकुटिलत्वेन मन्यन्ते नखा इव । शार्ङ्गी पीताम्बरस्तस्य वस्त्राणामिव कान्तिः । पीतरक्तयोः कथिमसये ऐक्यात । प्रभा येषाम क्षमारुहा वृक्षास्तेषु सश्रीकत्वाद् रत्नम । प्रधान इत्यर्थः । यः पलाशस्तस्मिन् कुसुमानि श्लाघापात्राणि रम्यत्वादिविषयलोकप्रशंसास्थानानि आसन् ॥

सेव्व । सेवा । नक्ख । नह । "सेवादौ वा " [९९] इति वा द्वित्वम ॥

---

१ BC शेषा पूरितः.

जुव-जण-जणिअ-संणेहा पउत्थ-विरहागणिम्मि णेह-समा।
मयण-पयावग्गि-णिहा पलक्ख-तरु-पल्लवा जाया ॥ ४८ ॥
सिरि-नन्दण-किरिआरिह-तरुणीहिं चइअ-कसिण-हिरिआहिं ।
अह कुसुमावचय-कलाओं दंसिआ दिट्ठिआ भणिउं ॥ ४९ ॥

सारङ्गि । "शार्ङ्गे ङात् पूर्वोऽत्" [ १०० ] इति ङात् पूर्वः अत् ।

छम । रयण । सलाह । "क्ष्माश्लाघा०" [१०१] इत्यादिना अन्त्यव्यञ्जनात् पूर्वः अत् ॥

४८. युवजनानां जनितस्नेहाः प्रियायाम् उत्पादिताभिलापाः प्रोषितानां विरह एव प्रियावियोग एव संतापकत्वाद् अग्निस्तस्मिन् स्नेहसमाः तद्वृद्धिजननाद् घृतादिसदृशाः । मदनप्रताप एव सोढुम् अशक्यत्वेन अग्निः तेन निभास्तुल्याः प्लक्षतरोः पल्लवाः किशलयानि जाताः ॥

सणेहा णेह । अगणिम्मि अग्गि । "स्नेहाग्न्योर्वा" [१०२] इति संयुक्तान्त्यात् पूर्वः अत् ॥

पलक्ख । "प्लक्षे लात्" [ १०३ ] इति लात् पूर्वः अत् ॥

४९. त्यक्तकृष्णह्रीकाभिः मुक्तसख्यादिसक्तसमस्तलज्जाभिः । श्रीनन्दनः स्मरः तस्य याः क्रियाः कटाक्षविक्षेपसहास्यकथाद्यास्तासाम् अर्हा योग्या यास्तरुण्यस्ताभिः अथ सर्वेवनराजिपुष्पोद्गमान्तरं कुसुमावचयफलाभणित्या एवमेवं क्रियन्ते इति परस्परम् उक्त्वा दृष्टया आनन्देन दर्शिताः प्रकटिताः ॥

सिरि । किरिआरिह । कसिण । हिरिआहिं । दिट्ठिआ । "ह्रीश्री०"[१०४] इत्यादिना एषु संयुक्तान्त्यात् पूर्व इः ।

---

१ DC °गिणेहा°.

वासेणं वरिसेहि वि नामरिसो किर-पियाइ जो गमिही ।
सो दरिसिअ-नव-चूए पिए गओ झत्ति हरिस-वसा ॥ ५० ॥
मयण-वइरग्गि-तत्तेण तोसिआ सुदढ-माण-तविअ-पिआ ।
क वि वज्ज-कढिणं-हिअया केण वि दाउं वउल-दामं ॥ ५१ ॥
कीइ वि किलन्त-कम-विप्पव-हरणा मल्लिआण मालाओ ।
महु-सुक्क-पक्ख-जुण्हा-पव व्व उप्पाविआ गयणे ॥ ५२ ॥

५. वसन्तकुसुमोच्चयमेव गाथात्रयोविंशत्या प्राह ॥ वर्षेण एकेन वर्षैरपि बहुभिः । किलेति संभावने । प्रियाया योऽमर्षः मानो नागमत स दर्शितनवचूते इतः पश्येत्यङ्गुल्या प्रकटितमाकन्दे प्रिये झटिति तत्क्षणादेव हर्षवशान् चूतदर्शनोद्भूतरणरणकोपशमप्रियदर्शनोत्थप्रमोदाद् गतः ॥

५१. मदन एव वज्राग्निः अनुपशमकवह्निस्तेन तप्तेन दग्धेन केनापि [सुदढमानतप्तप्रिया] सुदृढमानेन अनिवर्तकाहंकारेण तप्ता अत्यन्तम् असहना वज्रकठिनहृदया प्रिया कापि बकुलदाम दत्त्वा तोषिता ॥

दंसिआ दरिसिअ । वासेण वरिसेहि । वइर वज्ज । तत्तेण तविअ । "र्शर्ष°" [१०५] इत्यादिना संयुक्तान्त्यात् पूर्व इर्वा ॥ व्यवस्थितविभाषया क्वचिन्नित्यम् । नामरिसो । हरिस ॥

५२. [कयापि] क्लान्तानां खिन्नानां क्लमः खेदः तेन विप्लवः अङ्गविसंष्ठुलता तस्य हरणीः शैत्याद् अपहारिका मल्लिकानां विचकिलकुसुमानां मालाः स्रजो गगने उत्प्लाविता उत्क्षिप्ताः सत्यः उत्प्रेक्ष्यन्ते मधुरेव सर्वत्र पुष्पोद्गमैः शौक्ल्यकरणात् शुक्लपक्षः । तस्य ज्योत्स्नाप्लवा इव चन्द्रिकापूरा इव ॥

किलन्त । "लात्" [१०६] इति संयुक्तान्त्यलात् पूर्व इः । क्वचिन्न । कम । विप्पव । सुक्क-पक्ख । पव । उप्पाविआ ॥

१ BD°कढण°. २ B °संष्ठुलता. ३ B हरणी शै°.

गुम्फन्ती जव-दामं भविअ-सिआवाइ-चेइअ-निमित्तं ।
का वि जुवई जुवाणय-मण-थेरिअ-चोरिअमकासि ॥ ५३ ॥
सिविणम्मि वि अइदुलहा सिणिद्ध-कुसुमा सणिद्ध-मयरन्दा।
परिमल णिद्धा कीइ वि रइआ वासन्तिआ-माला ॥ ५४ ॥
कण्ह-कसिणालि कसणा लवली गन्धारिहा वि नोचिणिआ।
जेण वि कज्जल-कण्हं सुमरिअ कबरिं पिअयमाए ॥ ५५ ॥

५३ भव्य यत् स्याद्वादिनो जिनस्य चैत्य तन्निमित्त जपादाम गुम्फन्ती प्रथ्नती कापि युवती युवमनसा यत् स्थैर्य निर्विकारतादार्ढ्यं तस्य सलीलपुष्पग्रहणगुम्फादिना हरणम् अकार्षीत् ॥

भविअ । सिआवाइ । चेइअ । थेरिअ । चोरिअ। "स्याद्भव्य°"[१०७] इत्यादिना स्यादादिषु चौर्यसमषु च यात् पूर्व इ ॥

५४ स्वप्नेप्यतिदुर्लभा तथाविधाया आजन्माप्यदर्शनात् । स्निग्धानि अरूक्षाणि । सरसानीत्यर्थ । एवभूतानि कुसुमानि यस्या सा तथा स्निग्धमकरन्दा सार्द्रपरागा अतएव परिमलेन स्निग्धा भ्रमराणा प्रिया वासन्तिकामाला माधवीलतास्रक् कयापि रचिता ग्रथिता ॥

सिविणम्मि "स्वप्ने नात्" [१०८] इति नात् पूर्व इ ॥
सिणिद्ध सणिद्ध । "स्निग्धे वादितौ" [१०९] इति नात् पूर्वौ अदितौ वा। पक्षे णिद्धा ॥

५५. कृष्णवत्कृष्णा ये अलयस्तै कृष्णा । मकरन्दपानाय पदे पदाच्छादितेत्यर्थ । गन्धेन सौरभ्येण अर्हा पुष्पोपचययोग्यापि कज्जलकृष्णा प्रियतमाया कबरीं वेणिं स्मृत्वा सादृश्यात् येनापि लवली नोच्चिता । प्रियाध्यानविह्वलत्वेन न तत्कुसुमापचय कृत इत्यर्थ ॥

अणरह अणरुह-दामं रे मुक्ख-मुरुक्ख करासि इअ भणिउं ।
पोम्मच्छीए हणिओ को वि पिओ पाय पउमेण ॥ ५६ ॥
छउमेण अछम्मेण य साम-दुवारेण दण्ड-वारेण ।
केण वि का वि अगेज्झा वउलेहि पसाइआ तणुवी ॥ ५७ ॥
गरुवीओ लवलीओ सुहुमे वत्थे सुरुग्घजे खित्ता ।
कीए वि हु मुद्धाए सुवे विहसिरा वि कलिआओ ॥ ५८ ॥

कसिण । कसणा कण्हं । "कृष्णे वर्णे वा" [११०] इति संयुक्तान्त्यात् पूर्वो अदितौ वा । वर्णे इति किम् । विण्णौ कण्ह ॥

५६. अनर्ह विप्रियकरणाद् अयोग्य रे मूर्खमूर्ख वठरवठर अनर्हदाम अमनोज्ञत्वाद् मम अयोग्यां मालां करोपीति भणित्वा पद्माक्ष्या कोपि प्रियः पादपद्मेन हतः ॥ मुक्ख मुरुक्ख इत्यत्र कोपे "समत्यसूया°" [ हे० ७.४ ] इत्यादिना द्विरुक्तिः ॥

अरिहा अणरह अणरुह । "उच्चार्हति" [१११] इति संयुक्तान्त्यात् पूर्वं उत् अदितौ च ॥

५७. छद्मना शाठ्येन अच्छद्मना आर्जवेन सामद्वारेण प्रियवाक्यमुखेन दण्डः यदि त्वं मदुक्तं न करिष्यसि तदा न त्वं मम प्रिया नाहं तव प्रियः इत्यादिरूक्षवाक्यद्वारेण च कापि तन्वी मृद्वङ्गी अगृह्या अनावर्जनीया केनापि वकुलैः केसरकुसुमैः प्रसादिता प्रसन्नीकृता ॥

मुक्ख मुरुक्ख । पोम्म पउमेण । छउमेण अछम्मेण । [ दुवारेण वारेण ] "पद्मछद्ममूर्खद्वारे वा" [११२] इति संयुक्तान्त्यात् पूर्वं उत् वा ॥

५८. सूक्ष्मे स्रुघ्नजे देशविशेषोत्पन्ने वस्त्रे । हु इति निश्चितम् । कयापि मुग्धया अविचक्षणया गुर्वीतो महत्या लवलीतः श्वः आगामिदिने विहसित्र्योपि विकसनशीला अपि कलिकाः कोरकाः क्षिप्ताः

1 B सुहमे; C सुहुमे. २ BD प्रेयान्

कुसुमाकर रिउ-स-जणा सुवे जणा पारिजाय-तरुणो व्व ।
सर-जीआभालि-कुला सर-ठग-वाणारसि-पएसा ॥ ५९ ॥
आणाल व्व कणेरूहि कुरवेया दढयरं समालिद्धा ।
नर-निलयाहि अहरिआलचपुर-मरहट्ठ-जुवईहिं ॥ ६० ॥

न्यस्ता । विचक्षणा हि प्रतीक्ष्य स्वय विकसिता एव ता गृह्णाति तया तु अन्यथा कृतम् इति मुग्धत्वम् ॥

तणुवी । गरुवी । उकारान्ता ङीप्रत्ययान्तास्तन्वीतुल्यास्तेषु "तन्वीतुल्येषु" [११३] इति संयुक्तान्त्यात् पूर्वं उ ॥ क्वचिद् अन्यत्रापि । सुरुग्घ ॥ आर्षे । सुहुमं ।

५९ युग्मम् । कुसुमानाम् आकर उत्पत्तिस्थान य ऋतु । वसन्त इत्यर्थ । तस्य स्वजना इव तदुदये तेषा समृद्धिभावाद् बन्धव इव । तथा पुष्पपत्रादिसादृश्याद् मन्यन्ते स्वजना इव सहोदररूपा बान्धवा इव पारिजाततरोर्देववृक्षस्य । स्मरस्य ज्या प्रत्यञ्चा तदाभम् अलिकुल येषु ते तथा । स्मर एव ठको विप्रतारकस्तस्य वाराणसीप्रदेशा इव । यथा वाराणसी ठकाना स्थान तथा एते दंपत्योरुत्कण्ठादिजननात् स्मरस्येति भाव ॥

६०. एववर्णितस्वरूपा कुरवका अधरिता लावण्यप्रशस्यसंस्थानादिना पराभूता अचलपुर च नगरविशेष । महाराष्ट्र च सुराष्ट्रम् । तयोर्युवत्यो यकाभिस्ताभिर्नरवनिताभि दृढतरम् अत्यर्थं पुष्पोच्चयाय समाश्लिष्टा । यथा आलानानि आलानस्तम्भा करेणुभि ॥ "वाह्यर्थवचनाद्या " [१.३३] इति आलानस्य पुस्त्वम् ॥

सुवे । सुवे । "एकस्वरे श्व स्वे" [११४] इति श्व स्वयोरन्त्यव्यञ्जनात् पूर्वं उत् । एकस्वर इति किम् । सजणा ॥

जीआ । "ज्यायाम् ईत्" [११५] इति अन्त्यव्यञ्जनात् पूर्वं ईत् ॥

वाणारसि । कणेरूहि । "करेणू°" [११६] इत्यादिना रणयोर्व्यत्यय । करेणू इति स्त्रीलिङ्गनिर्देशात् पुंसि न ॥

१ D आलाना २ BD कुर° ३ BD दृढतर. ४ D °लावण्यभिर्°
५ D सुराष्ट्रा तयोर्युवत्यो. ६ BD वयणा

लवणिम-जल-द्दह निह-नाहि-मण्डले उचिणेसु लहुअमिमं ।
हलिआर-गोरि हरिआल-वन्नयं हलुअममिलायं ॥ ६१ ॥
वण-सिरि-णडाल-तिलयं तिलयं गेण्हं तए वर-णलाडे ।
गेज्झाथोव-परिमलं अथोक्क-जहणे अथेव-सिरि ॥ ६२ ॥
दाही अथोअ-कुसुमेहि सेहरं दिट्ठिएहं विम्बोट्ठि ।
धूआ-वहिणी-भइणी-दुहिअ व्व तुह प्पिआ लवली ॥ ६३ ॥

आणाल । "आलाने लनोः" [ ११७ ] इति लनोर्व्यत्ययः ॥
अलचपुर । "अचलपुरे चलोः" [ ११८ ] इति चलयोर्व्यत्ययः ॥
मरहट्ठ । "महाराष्ट्रे हरोः" [ ११९ ] इति हरयोर्व्यत्ययः ॥

६१. [७२] द्वादशभिः कुलकम् । बहिः अन्तः स्फुटप्रेमभिः मनोवाक्कायेषु व्यक्तानुरागैः कैरपि तरोरधः रतेर्मातृष्वसृदुहितर इव निरतिशयसौन्दर्याद् उत्प्रेक्ष्यन्ते स्मरप्रियाया जननीभगिनीपुत्रिका इव प्रेयस्यो वल्लभाः इति पूर्वोक्तरीत्या आलपिता· मन्त्रेहं भणिताः ॥ [६१] । आलपनप्रकारमेवाह । लवणिमा लावण्यं स एव दृष्टयाप्यायकत्वेन जलं तस्य ह्रदनिभं नदकल्पं नाभिमण्डलं यस्यास्तस्या आमन्त्रणम् । तथा हरितालवद् गौरि गौरवर्णे हरितालवद् वर्णो यस्य तत् लघुकं सूक्ष्मम् इदं पुरोवर्ति अमिलातकं वर्णपुष्पं लघुकं शीघ्रं यथा भवति एवम् उच्चिनु त्रोटय ॥

६२. हे वरललाटे रम्यभालस्थले अस्तोकजघने विसंकटकटीतटाप्रभागे त्वया वनश्रीललाटस्य तिलकमिव शोभाकृत्त्वात् पुण्ड्रकमिव । ग्राह्यो नासिकापेयः अस्तोकः परिमलो यस्य तत्, तथा अस्तोकश्रिप्रभूतशोभं तिलकैकुसुमं ग्राह्यम् ॥

६३. दुहिता च पुत्रिका भगिनी च स्वसा भगिनीदुहिता च ता इव प्रिया लवली । बिम्ववद् ओष्ठौ यस्यास्तस्या आमन्त्रणम् । हे

१ BC हि. २ D तिलक कुसुम.

छुढासव-गण्डूसे खित्त पउत्ताडणे समुच्चिणसु ।
पुप्फाइँ वउल वच्छे असोअ रुक्खे अ विलय-वरे ॥ ६४ ॥
सुर-वणिआ-नाग त्थी-अक्रूर-कय हरिसमीसि-उंल्लसिअं ।
पिच्छेरथी धिइ-जणइं दिहि मइ हिन्ताल मञ्जरिअं ॥ ६५ ॥
सिसु मञ्जर-जुव-मञ्जर जर-मञ्जारेहिँ पल-भमा दिट्ठं ।
वेरुलिअ-केसि वेड्डुज्ज-भूसणे किंसुअं लेसु ॥ ६६ ॥
एण्हिं पिच्छेत्ताहे गिण्हसु रम्भं कुणेसु अ इमाए ।
पुरिमाणं पि अपुव्वं आमेलं हित्थ हरिणच्छि ॥ ६७ ॥

बिम्बोष्ठि तव इह अत्र उद्याने अस्तोककुसुमैः शेखरं दिष्ट्या प्रीत्या दास्यति । लवल्या कुसुमभरनम्रत्वाद् इत्थम् उक्तिः । बन्धुश्च बन्धवे पुष्पशेखरादि ददाति ॥

६४. क्षिप्तासवगण्डूषे बकुलवृक्षे । क्षिप्तं कृतं पदोत्ताडनं यत्र तत्र अशोकवृक्षे च हे वनितावरे अङ्गनाश्रेष्ठे पुष्पाणि समुच्चिनु । त्वद्गण्डूषक्षेपपदाघाताभ्यां पूर्णदोहदत्वेन बकुलाशोकयोः साम्प्रतं पुष्पावचयसमयः संवृत्त इति भावः ॥

६५. सुरवनितानागस्त्रीणाम् अनीषत् अत्यर्थं सौरभ्यादिना कृत हर्षाम् ईषत् मनाग् उल्लसिताम् उद्भिन्नरोरका स्त्रीणां धृते सौरध्यस्य हेतुत्वात् जनिकाम् । धृतिः सन्तोषो विद्यते यस्या यद्वा धृतौ मतिर्यस्यास्तस्याः संबोधनम् । हे धृतिमति धृतिमते वा पश्य हिन्तालस्य मञ्जरिकां पुष्पितलताम् ॥

६६. शिशुमार्जारयुवमार्जारजरन्मार्जारैः बालतरुणवृद्धबिडालैः पलभ्रमात् आरक्तत्वेन मांसभ्रान्त्या दृष्टं किंशुकं पलाशकुसुमम् हे वैडूर्यकेशि नीलमणितुल्यचिकुरे हे वैडूर्यभूषणे मरकतखचितालंकारे लाहि गृहाण ॥

६७. इदानीं साम्प्रतं पश्य रम्भाम् इदानीं गृहाण रम्भाम् कुरुष्व

१ C उल्लसिअं. २ BD रम्भं, C रम्भ. ३ D अङ्गनाश्रेष्ठे.

तह्मातत्थालि-कुलो भयस्सई अट्ठमो व्व पहिआण ।
तुह जुग्गो पुन्नामो रूवेण वहस्सइ घरिल्ले ॥६८ ॥
अमइल-तणु परिगुम्फिअ-पोप्फलि-मउरेण भसल-मलिणेण ।
अवह-कुचोवह-हत्थोभय-चलणे तुज्झ भूसेमि ॥ ६९ ॥
सिप्पि-पिहु-नयण-छुत्तोत्तंसे आढत्त-संझ-रायमिमं ।
उच्चिणसु भमर-छिक्कं महु-पाइक्कं जवा-कुसुमं ॥ ७० ॥

च अस्या अनया वा रम्भाया रम्भया वा पूर्वासामपि पूर्वं कृता-पीडानामपि नायिकानाम् अपूर्वम् असंजातपूर्वम् । आश्चर्यकारीति भावः । आपीडम् अवतंसम् हे त्रस्तहरिणाक्षि चकितकुरङ्गनेत्रे ॥

६८. त्रस्तात्रस्तमिव चञ्चलत्वान्मन्यते चकिताचकितमिव अलि-कुलं यत्र स तथा बृहस्पतिरिव अष्टमः पीडाकारित्वात् पथिकानाम् । यदुक्तम्

द्वादशदशमचतुर्थे जन्मनि पष्ठाष्टमे तृतीये च ।
व्याधिं विदेशगमनं मित्रविरोधं च सुरगुरुः कुरुते ॥ १ ॥

पुन्नागस्तव योग्यः । विकस्वरपुष्पभास्वरत्वात् कुसुमावचयोचित इत्यर्थः । हे रूपेण कृत्वा बृहस्पतिगृहिणि ॥

६९. भसलैर्मलिनेन मकरन्दपानासक्तैः पट्पदैः श्यामलेन । परि-गुम्फितो यः पूगफल्या मुकुरो बालपुष्पं तेन कृत्वा हे अमलिनतनु विशदमूर्ते तव उभयकुचोभयहस्तोभयचरणान् भूपयामि अलंकरोमि ॥

७०. शुक्तिवत् पृथुनी विस्तीर्णे ये नयने ताभ्यां छुप्तौ स्पृष्टौ उत्तंसौ कर्णपूरौ यया तस्याः संबोधनम् । हे शुक्तिपृथुनयनच्छुप्तोत्तंसे आरब्धः अरुणत्वात् प्रकृतः संध्याराग इव येन तत् तथा भ्रमरैः सौरभ्यात् छुप्तं मधोर्वसन्तस्य पदातिं कामिमोहनादितत्कर्मकारित्वेन भृत्यम् इदं पुरोवर्ति जपाकुसुमम् उच्चिनु ॥

---

१ BD° चरणे. २ BC पूर्वक्षुप्ता°.

आरद्ध-वहल-परिमल-केलि-पयाईकयन्न-तरु-कुसुमं ।
किडि-दाढ-सुत्ति-भङ्गोज्जलमुचिण फुल्ल-वेइल्लं ॥ ७१ ॥
वाहिं अवाहिरे फुंड-पेमेहि पेअसीओ तरु-हेट्ठे ।
केहिं पि इआलविआ रईइ माउच्छ-धूअ व्व ॥ ७२ ॥

७१. आरब्धा या वहलपरिमलस्य केलिर्विलासः तया पदाती-कृतानि । अध.कृतानीत्यर्थ । अन्यतरूणां कुसुमानि येन तत् तथा । किरि· शूकरस्तस्य दंष्ट्रा च शुक्तिश्च तयोर्या भङ्गश्छेदः तद्वद् उज्ज्वलं फुल्लविचकिलं विकसितमाल्लिकाकुसुमं त्वम् उच्चिनु ॥

द्रह । "ह्रदे हदो "[१२०]इति ह्रदयोर्व्यत्यय । आर्षे हरए मह-पुण्डरिए॥
हलिआर हरिआल । "हरिताले रलोर्न वा" [१२१]इति रलयोर्व्यत्ययो वा।
लहुअ हलुअ । "लघुके लहो " [१२२] इति लहोर्व्यत्ययो वा ॥
णडाल णलाडे । "ललाटे लडो " [ १२३ ] इति लडोर्व्यत्ययो वा । आदेर्लस्य णविधानाद् [ १. २५७ ] द्वितीयो ल. स्थानी ॥
गेय्ह गेज्झ । " ह्ये ह्यो. " [ १२४ ] इति ह्ययोर्व्यत्ययो वा ।
अथोव अथोक अथेव । " स्तोकस्य थोकथोवथेवाः " [ १२५ ] इति स्तोकस्य त्रय आदेशा वा । पक्षे अथोअ ।
धूआ दुहिअ । बहिणी भइणी । "दुहितृभगिन्योर्धूआबहिण्यौ" [१२६] इति अनयो. एतावादेशौ वा ॥
रूढा सिस । यच्छे रुक्खे । "वृक्षक्षिप्तयो रुक्खछूढौ" [ १२७ ] इति अनयोर्यथासंख्य रुक्खछूढौ वा ॥
विलय वणिआ । "वनिताया विलया" [१२८] इति विलयादेशो वा । विलयेति संस्कृतेऽपीति केचित् ॥
अरूर । " गौणस्य° " [१२९] इत्यादिना ईषतो गौणस्य कूरो वा । पक्षे ईसि॥ थी [इत्थी] । "स्त्रिया इत्थी" [१३०] इति स्त्रिया इत्थी वा ॥

१ BO फुडपेम्मेहिं पीअसीओ.

**निअ-माउसिआ-पिउसिअ-पिउच्छ-तणया घरे व्व उज्जाणे ।**
**मिहुणेहिं हित्थ-तिरिच्छि पिच्छिरेहिं रमिअमेअं ॥ ७३ ॥**

धिइ दिहि । "धृतेर्दिहि" [१३१] इति धृतेर्दिहिर्वा ॥

मज्जर वज्जर । "मार्जार°" [१३२] इत्यादिना मार्जारस्य मज्जरवज्जरौ । पक्षे मज्जारेहिं ॥

वेरुलिअ वेडुज्ज । "वैडूर्यस्य वेरुलिअ" [१३३] इति वेरुलिअ वा ॥

एण्हिं एत्ताहे । "एण्हिं एत्ताहे इदानीम" [१३४] । पक्षे इआणि ।

पुरिमाण । "पूर्वस्य पुरिम" [१३५] । पक्षे अपुव्व ॥

हित्थ तट्ठा । "त्रस्तस्य हित्थतट्ठौ" [१३६] । पक्षे तत्थ ॥

भयस्सई । "बृहस्पतौ बहो भय" [१३७] पक्षे बहस्सइ ॥

मइल मलिण । अवह उमय । सिप्पि सुत्ति । छुत्तो छिक्क । आढत्त आरद्ध । पाइक्क पयाई । "मलिनोभ°" [१३८] इत्यादिना एषां यथासंख्य मइलादयो वा । उवह इत्यपि केचित् ॥ आर्षे उभओकाल इति ज्ञेयम् ॥

दाढ । "दंष्ट्राया दाढा" [१३९] । दाढा संस्कृतेप्यस्ति ॥

बाहिं अबाहिरे । "बहिसो बाहिंबाहिरौ" [१४०] ॥

हेट्ठे । "अधसो हेट्ठ" [१४१] ॥

७३. निजा चासौ मातु स्वसा च पितु स्वसा च पितृष्वसुस्तनया च तासां गृहं तस्मिन्निव उद्याने परस्परं तारामेलके सति त्रस्तं सभयं तिर्यक् तिरश्चीनं यथा भवति एवं प्रेक्षणशीलैर्मिथुनै स्त्रीपुम्परूपद्वन्द्वै एतद् वक्ष्यमाण रतं रमणं कृतम् ॥

माउच्छ माउसिआ । पिउसिअ पिउच्छ । "मातृपितु°" [ १४२ ] इत्यादिना मातृपितृभ्यां परस्य स्वसु सिआ छा इत्यादेशौ ॥

तिरिच्छि । "तिर्यचस्तिरिच्छि" [१४३]॥ आर्षे तिरिआ इति ज्ञेयम्॥

---

१ BC *तिर्यग*°.

आसण ठिआइ घरिणीइ गह-वई झम्पिऊण अच्छीइं ।
हसिरो मोत्तुं सङ्कं चुम्बिअ अन्नं सढो मुइओ ॥ ७४ ॥
मा सोउआण अलिअं कुप्प मईआ सि तुम्हकेरो हं ।
इअ केण वि अणुणीआ णिअय-पिआ पाणिणीअजडा ॥७५॥
किं हवसि पारकेरा न हु पारक्को तुहाहमिअ भणिआ ।
राइक्क-चार विलया केणावि हु रायकेरेण ॥ ७६ ॥

७४. रमणमेव गाथाषोडशकेनाह् । आसनस्थिताया उपविष्टाया गृहिण्या अक्षिणी झम्पिऊणेति हस्ताभ्या पिधाय शङ्का भीतिं मुक्त्वा अन्याम् अपरां स्त्रियं चुम्बित्वा हसिता चस्करिकरणशील शठो गूढापराधो गृहपतिर्मुदित ॥ " भ्रमेष्टिरिटिल्ल० " [ ४.१६१ ] इति भ्रमेर्झम्पादेशे " धातवोऽर्थान्तरेपि " [ ४ २५१ ] इति पिधानार्थत्वम् ॥

घरिणी । " गृहस्य घरोऽपतौ " [१४४] इति घर । अपताविति किम् । गह वई ॥

पिच्छिरेहिं । हसिरो । " शीलाद्यर्थस्येर " [ १४५ ] इति " तृन् शील° [ है० ५.२ ] इत्यादिभिर्विहितस्य प्रत्ययस्य इर ॥

७५. अलीक सत्यायुक्त वृद्ध श्रुत्वा आकर्ण्य त्वं मा कुप्य मा रोष कुरु । मदीया त्वम् त्वदीयोहम् इति अनया रीत्या केनापि पाणिनीयेन पाणिनीयव्याकरणेन अजडा विचक्षणा निजकप्रिया स्ववल्लभा अनुनीता प्रसादिता । विचक्षणो हि सुखेनैव प्रसाद्यते ॥

झम्पिऊण । मोत्तु । चुम्बिअ । सोउआण । "क्त्वस्तुम°" [१४६] इत्यादिना तुम् अत् तूण तुआण इत्येते आदेशा ॥ वन्दित्तु इति अनुस्वारलोपात् । वन्दित्ता [इति] सिद्धसंस्कृतस्यैव वलोपेन । कट्टु इत्यार्षे ज्ञेयम् ॥

तुम्हकेरो । " इदमर्थस्य केर " [ १४७ ] इति इदमर्थस्य केरः । न च भवति । मईआ । पाणिणीअ ॥

७६. किं त्वं परकीया भवसि यत । हु इति निश्चितम् । नाहं

1 BD गढो

तुम्हेचया य अम्हेचया य एगव्व होउ तणु-लट्ठी ।
इअ जम्पिऊण दइआ केण वि सव्वङ्गिअं गहिआ ॥ ७७ ॥
तुह पय-पह-पहिओ हं अप्पणयो पीणिम-प्पणइ-जहणे ।
पीणत्तण-सालि-थणे इअ केण वि तोसिआ रमणी ॥ ७८ ॥

तव परकीयः । किं तु तावकीन इत्यर्थः । ततस्त्वयापि मदीययैव भवितव्यम् इति भावः । इति अनया रीत्या केनापि राजकीयेन राज-संबन्धिना राजवारवनिता भणिता ॥

पारकेरा । पारक्को । राइक्क । रायकेरेण । "परराजभ्यां क्कडिक्कौ च" [१४८] इति आभ्यां यथासंख्यं क्क डित् इक्कश्च । चकारात् केरश्च ॥

७७. यौष्माकी च आस्माकी च तनुयष्टिः एकवद् भवतु । आवयोः संयोगो जायताम् इति भावः । इति पूर्वोक्तं कथयित्वा केनापि सर्वाणि अङ्गानि व्याप्नोति यद् ग्रहणं तत् सर्वाङ्गीणं यथा भवति एवं दयिता प्रिया गृहीता[1] ॥

तुम्हेचया । अम्हेचया । "युष्मद°" [१४९] इत्यादिना अत्र एच्चयः ॥

एगव्व । "वतेर्व्वः" [१५०] इति वतेः प्रत्ययस्य व्वः ॥

सव्वङ्गिअं । "सर्वाङ्गादीनस्येकः" [१५१] इति "सर्वादेः पथ्यङ्ग°" [हे० ७.१] इत्यादिना विहितस्य ईनस्य स्थाने इकः ॥

७८. पीनत्वप्रणयि काठिन्ययुक्तं जघनं यस्यास्तस्या. संबोधनम् । तथा हे पीनत्वशालिस्तनि तव अहम् आत्मीयः स्वकीयः पदपथपान्थः । अनुचर इत्यर्थः । इति अनया रीत्या केनापि रमणी तोषिता तोषं नीता ॥

पहिओ । "पथो णस्येकट्" [१५२] । "नित्यं णः" [ हे० ६.४ ] इति यः पथो णो विहितस्तस्येकट् ॥

अप्पणयो । "ईयस्यात्मनो णयः" [१५३] इति ईयस्य णयः ॥

---

[1] D गृहीता आलिङ्गिता.

पीणत्त-निहि-निअम्बे तिलेल्ल-अङ्कोल्लतेल्ल-कन्तिल्ले ।
मा तित्तिएण कुप्पेत्ति इत्तिअं को वि पियमाह ॥ ७९ ॥
जित्तिअमत्तं रत्तो म्हि एत्तिअं रज्ज एत्तिलं किमिमं ।
केण वि एद्दहमुत्ता तुण्हिक्का माणिणी जाआ ॥ ८० ॥
सिहिओ सि जेत्तिअं जेत्तिलं च भणिओ सि जेद्दहं थविओ ।
न हु तेत्तिएण होसि त्ति पई कीइ वि उवालद्धो ॥ ८१ ॥

७९. पीनत्वस्य निधिः स्थानं नितम्बो यस्यास्तस्याः संबोधनम् । तिलस्य स्नेहस्तिलतैलं तच्च अङ्कोठतैलं च ते इव कान्तिमति तद्वत्स्निग्ध-कान्तियुक्ते त्वं तावता सख्याद्युक्तालीकव्यलीकमात्रेण मा कुप्य । इति इत्यम् एतावत् इयन्मात्रं कोपि कश्चित् प्रियाम् आह ॥.

पीणिम पीणत्तण । "त्वस्य डिमात्तणौ वा" [१५४] इति त्वस्य डिमात्तणौ । पक्षे पीणत्त ॥

तिलेल्ल । "अनङ्कोठ°" [१५५] इत्यादिना तैलस्य डेल्लः । अनङ्कोठाद् इति किम् । अङ्कोल्लतेल्ल ॥

८०. कश्चिन्मानिनीं प्रसादयन् तया च तत्संयुक्तस्त्वं न मयि तव प्रेमानुबन्ध इत्यादि सक्रोधं निर्भर्त्स्यमानः तां प्रति आह । यावन्मात्रं रक्तः अनुरागयुक्तोस्मि अहं त्वमपि इयत् एतावद् वा रज्यस्व अनुरागं कुरु । नाहम् अधिकम् अर्थये इत्यर्थः । इयत् एतावद् वा इदं क्रोधाडम्बरं किम् । निरर्थकम् इत्यर्थः । केनापि इयत् एतावद् वा उक्ता सती मानिनी तूष्णीका जाता । निश्चितस्वयाल्पभ्यतया न किंचिद् उपालेभे इत्यर्थः ॥

तित्तिएण । इत्तिअं । जित्तिअ । "यत्तद°" [१५६] इत्यादिना एभ्यो टावादेरतोः परिमाणार्थस्य इत्तिअः एतदो लुक् च ॥

८१. यावत् यत्परिमाणं गृहितः चेतसि वाञ्छितोसि यावद्

1 BC जि.

तं तेत्तिल-पेम्मं तुह न केत्तिअं तेद्दहा य अणुवित्ती ।
न हु केत्तिला वि केद्दहमित्थं कीइ वि सढो भणिओ ॥ ८२
सयहुत्तं विणइल्लो दइओ जोण्हाल-चन्द-सिरिमन्तो ।
णेहालूए कीइ वि बाहुल्लच्छीइ अहिसित्तो ॥ ८३ ॥
गव्विर न माणइत्ता सहन्ति गव्वं ति भणिअ कीए वि ।
दइओ हणिओ हणुमा-लङ्गूल-पलम्ब-लट्ठीए ॥ ८४ ॥

भणित. आगच्छागच्छ त्वं मत्प्रिय इत्युक्तोसि यावच्च स्तुतः न त्वत्समः सौभाग्यपात्रम् अपरोस्तीति श्लाघितः । हु इति निश्चितम् । न तावता तावन्मात्रेण भवसि । अनुरज्यसे इत्यर्थः । इति अनया रीत्या कयापि पतिर्भर्ता उपालब्धः रेरे धृष्ट दुराचार आराध्योसि इति निर्भर्त्सितः ॥

८२. तत् तावत् प्रेम तव न कियत् कियन्मात्रम् । तावती च अनुवृत्तिरपि अनुकूलकरणमपि तव नैव कियती । असत्प्रायप्रेमानुवृत्तिरसीत्यर्थः । इत्थम् अनया रीत्या कियदपि कयापि शठः गूढापराधो भणितः ॥

एत्तिअ एत्तिलं एद्दह । जेत्तिअ जेत्तिलं जेद्दह । तेत्तिएण तेत्तिल तेद्दहा । केत्तिअं केत्तिला केद्दह । "इदकिमश्च°" [१५७] इत्यादिना इदकिंभ्या यत्तदेतद्भ्यश्च अतोर्डावतोर्वा डित् एत्तिअ एत्तिल एद्दह एतद्दृक् च ॥

८३. शतकृत्वः । अनेकश इत्यर्थः । विनयवान् । अलीकापनेयनार्थं पादप्रणत इत्यर्थः । ज्योत्स्नावच्चन्द्रस्य या श्रीः आह्लादिका शोभा तद्वान् सचन्द्रिकचन्द्रशोभायुक्तो दयितः प्रियः स्नेहवत्या कयापि बाष्पवदक्षिभिः स्नेहवशोद्भूताश्रुप्रवाहयुक्तलोचनैः अभिषिक्तः आर्द्रीकृतः॥

सयहुत्तं । "कृत्वसो हुत्तं" [१५८] । वारे विहितकृत्वसः हुत्त ॥

८४. रे गर्विन् साहंकार न मानयत्यः अहंकारवत्यो नायिका गर्वं

१ BO बाहुल्लच्छीहिं. २ C गर्वित; D गर्वव्वर.

अन्नत्तो अन्नहि एसि तह वि अन्नत्थ अन्नदो जासि।
एक्कसि न खु तिथरो सि त्ति पिओ कीइ वि उवालद्धो ॥
एक्कसिअं चिअ भणिओ एक्कइआ णेगया य गामिहिं।
अप्पुल्ल-पियं वच्चेत्ति भच्छिओ को वि अन्नाए ॥ ८६ ॥

सहन्ते। ता प्रियाणा गर्वापनोदं कुर्वन्तीत्यर्थ'। इति भणित्वा कयापि हनुमल्लाङ्गूलवत् प्रलम्बा द्राघीयसी या यष्टिश्रृतादिलता तया दयितो हतस्ताडितः ॥

विणइल्लो। जोण्हाल। सिरिमन्तो। णेहालूए। बाहुल्ल। गव्विर। माणइत्ता। "आल्विल्लो°"[१५९]इत्यादिना मतो स्थाने आलुइत्यादयो नव आदेशा यथा-योगम्। केचिद् मादेशमपि इच्छन्ति। हणुमा ॥

८५. अन्यत सपत्नीत अन्यत्र अपरसपत्न्याम् एषि गच्छसि। तत्रापि एवमपि सति अन्यत· अपरसपत्नीत· अन्यत्र प्रतिपक्ष-नायिकायां यासि। एकत्र एकस्यां दयिताया नैव स्थिरोसि। इति अनया रीत्या कयापि प्रिय उपालब्ध· ॥

अन्नत्तो अन्नदो। "त्तो दो तसो वा" [१६०] ॥
अन्नहिं। तह। अन्नत्थ। "त्रपो हिहत्थाः" [१६१] ॥

८६. एकदैव भणितस्त्वम् एकशः अनेकदा च माम्याम् आत्मीयाम् आत्मनो वा प्रियां व्रज। एकवाक्येनैव त्वदर्थतस्तावद् एतद् उक्तम् यद् उत त्वं यथेच्छं स्ववल्लभाम् अभिसर। न मम त्वया किमपि प्रयोजनम् इत्यर्थः। इति इत्थम् अन्यया कोपि भर्त्सित· ॥

एक्कसि एक्कसिअं एक्कइआ। "वैक°"[१६२]इत्यादिना एकाद् दाप्रत्ययस्य सि सिअं इआ। पक्षे णेगया ॥

गामिहिं। अप्पुल्ल। "डिल्लडुल्लौ भवे" [१६३] इति डिल्लो डुल्लो ॥

निच-नवल्लय-रुचिर मं एंक्क-मणं नवाणुराइल्लं ।
एकल्लं चिअ मुञ्चसि कीइ वि रमणम्मि इअ रुन्नं ॥ ८७ ॥
अवरिल्लञ्चल-गहिओ भालोवरि-निहिअ-भुमयमन्नाए ।
भमया-दासो व्व पिओ विहसन्तो सणिअमवगूढो ॥ ८८ ॥
मणयं च मुच्छिरो वेविरो अ मणिअं पिओ मणा हसिरो ।
कीइ वि रइ-मीसाए वम्मह-मीसालिओ रमिओ ॥ ८९ ॥

८७. नित्यं नवे अन्यान्यनायिकारूपे रागवन् रागपर एकस्मिन् त्वय्येव मनो यस्याः सा तथा तां नवानुरागाम् उदीयमानस्नेहाम् एकाम् असहायामेव मां मुञ्चसि कयापि रमणे इति इत्थं रुदितं साश्रुपातं जल्पितम् ॥

अप्पुल्ल । नवल्लय । राइल्लं । "स्वार्थे कश्च वा" [ १६४ ] इति कः । चकारात् डितौ इल्लोल्लौ ॥

नवल्लय । एकल्लं । "ल्लो नवैकाद् वा" [१६५] इति ल्लः । पक्षे एक । नव ।

८८. भालस्य उपरि ऊर्ध्वं निहिते धृते भ्रुवौ यत्र ग्रहणे तत् तथा । सकोपम् इत्यर्थः । एवम् उपर्यञ्चलेन उत्तरीयांशुकान्तेन गृहीतः अवष्टब्धः भ्रुवो दास इव तदुत्क्षेपमात्रेण कृत्यकरणात् मन्यते किंकर इव प्रियः अन्यया विहसन् धृष्टत्वाद् विकसन् शनैर्मन्दम् अवगूढः आलिङ्गितः ॥ ज्ञातापराधत्वेन पादपतनादिभिराराधयन्नपि निर्भर्त्सितत्वाद् गन्तुं प्रवृत्तः सन् कृतकोपं चेलाञ्चलेन गृहीत्वा मन्दम् आलिङ्गित इति भावः ॥

अवरिल्ल । "उपरेः संव्याने [ १६६ ] इति ल्लः ॥ [संव्यान इति किम् । भालोवरि ]॥

भुमय भमया । "भ्रुवो°" [ १६७ ] इत्यादिना मया डमया इत्येतौ ॥

सणिअं । "शनैसो डिअं" [ १६८ ] इति डित् इअं ॥

८९. मनाग् मूर्छावान् मनाग् वेपवान् मनाक् च हास्यवांश्च । शठत्वात् तदावर्जनाय किंचित् तत्तद्भावभाग् इति भावः । मन्मथेन

१ C इक्कमणं; D एकमण. २ BCD उवरिल्ल.

गिम्हो दीह-गन्ध-अन्धालिणि-दीहर-पत्त-चम्पओ
मण-मउअत्तयाइ कामन्धल-विज्जुलिआ-दुरिक्खओ।
दिट्ठो विज्जु-पीअ-नव-किंसुअ-पत्तल-पीवलोवणो
तत्ताऊ विओअ-विहुरीकय-पन्थिअ-गोण-खेअणो ॥ ९० ॥

रतेच्छया मिश्र प्रिय रतिमिश्रया सुरताभिलापयुतया कयापि रमित कामित ॥

मणय मणिअ। "मनाको न वा डय च" [१६९] इति डय डिअ च। पक्षे मणा ॥ मीसालिओ। "मिश्राड्डालिअ" [१७०]। पक्षे मीसए ॥

९० दीर्घगन्धेन पुष्पोत्थप्रभूतपरिमलेन अन्धा। व्याप्ता इत्यर्थः। एवंभूता अलिन्यो यत्र स चासौ दीर्घपत्रश्च एवंभूतश्चम्पको यत्र स तथा। मनसो मृदुत्वेन अकठिनत्वेन कामान्धैर्विद्युद्वद् दुरीक्ष्यः घनतरतापकृत्त्वेन द्रष्टुम् अशक्य। विद्युद्वत् पीतानि पीतवर्णानि यानि नवकिंशुकपत्राणि प्रत्यग्रपलाशपुष्पपलाशानि तै. पीतानि उपवनानि यत्र स तथा। तप्ताप संतप्तपानीय। वियोगेन विधुरीभूता दुःखिता ये पान्थास्त एव अचेतनत्वाद् गावस्तेषां खेदन. खेदजनको ग्रीष्मो दृष्ट. इति उत्तरसर्गार्थसूचनम्। राज्ञेति शेष.॥ पत्तुगौ द्वितीयपष्ठौ जोलीवा द्विपदी एक षण्मात्र. पञ्चचतुर्मात्रा गुरुश्च। तथा द्वितीयपष्ठौ च गणौ जोलीवा द्विपदी ॥

दीह दीहर। "रो दीर्घात्" [१७१] इति रो वा ॥

मउअत्तयाइ। "त्वादे स" [१७२] इति स एव त्वादिर्वा ॥

अन्धा अन्धल। पत्त पत्तल। विज्जुलिआ विज्जु-पीअ पीअलो "विद्युत्पत्र°" [१७३] इत्यादिना एभ्य स्वार्थे लो वा।

तत्ताऊ। गोण। "गोणादय" [१७४]। गोणादय शब्दा अनुक्तप्रकृतिप्रत्ययलोपागमवर्णविकारा बहुल निपात्यन्ते ॥

इत्याचार्यहेमचन्द्रविरचितश्रीकुमारपालचरिताख्याश्रयमहाकाव्यवृत्तौ तृतीयः सर्ग. ॥

---

१ BC दिय. २ C खेदन°. ३ C तै तथा. ४ D °चरितप्राकृतद्या°.

तं निव-पुच्छिअ-दोवारिएण भणिअं ति आम गिम्ह-सिरी ।
उण्हेह सीअला णवि कयलि-वणे पेच्छ पुणरुत्तं ॥ १ ॥
हन्दि विदेसो जीवइ हन्दि पिआ हन्दि किं पिआ मुक्का ।
हन्दि मरणं जमो गिम्हो हन्दि लवन्ति इअ पहिआ॥ २॥

१. अधुना सप्तसप्तत्या गाथाभिर्ग्रीष्मर्तुं वर्णयन् आह । नृपेण कुमारपालभूपालेन पृष्टः वसन्तर्त्वसंभविपुष्पादिदर्शनात् कः संप्रति ऋतुरिति नोदितो यो दौवारिकः प्रतीहारस्तेन इति अमुना प्रकारेण भणितम् । तं इति वाक्योपन्यासे । विवृत्य उक्तम् इत्यर्थः । तदेव वाक्यार्थकर्मणा आह आमेत्यादि । आमेति अभ्युपगता अङ्गीकृता । ज्ञातेति यावत् । ग्रीष्मश्रीः इह उद्यानेस्ति । णवीति वैपरीत्यार्थत्वाद् अप्यर्थो ज्ञेयः । उष्णापि शीतला कदलीवने पश्य । राजन् इति शेषः । पुणरुत्तम् इति एकवारं दृष्ट्वा भूयोपि अवलोकयेति । एवम् अग्रेपि राजन् इति संबोधनपदं ज्ञेयम् ॥

[ " अव्ययम् " । १७५ । अधिकारोयम् । इतः परं ये वक्ष्यन्ते आ पादसमाप्तेस्ते अव्ययसंज्ञका ज्ञातव्याः ] ॥

तं । " तं वाक्योपन्यासे " [१७६] ॥

आम । " आम अभ्युपगमे " [१७७] ॥

णवि । " णवि वैपरीत्ये " [१७८] ॥

पुणरुत्तं । " पुणरुत्तं कृतकरणे " [१७९] ॥

२. हन्दि इति विषादे । कष्टं विदेशोऽस्माकम् ॥ हन्दीति विकल्पे । जीवति प्रिया न वा ॥ हन्दीति पश्चात्तापे । किं प्रिया अस्माभिर्विरह-

---

१ B सप्तत्याः

हन्द महु हन्दि परिमलमिमं व भणिरेहि भसल-मिहुणेहि।
उअ सहइ कञ्चणारो मउडो इव गिम्ह लच्छीए ॥ ३ ॥
जणणिं मिव धूअं पिव नत्तिं विअ सोअरं विव सहिं व।
मालारीओ सिणेहा नव-कञ्चण-केअइमुवेन्ति ॥ ४ ॥
जेण अहुल्ला लवली वोलीणा णइ वसन्त-उउ-लच्छी।
फुल्लं च धूलिकम्बं तेण फुडा चेअ गिम्ह-सिरी ॥ ५ ॥

दु खम् अविचार्यैव मुक्ता। एव च हन्दीति निश्चित मरणम् अस्माकम् यतो हन्दीति सत्यम् यम कृतान्तकल्पो ग्रीष्म इति पान्था लपन्ति परस्पर जल्पन्ति ॥

हन्दि। "हन्दि विषादविकल्पपश्चात्तापनिश्चयसत्ये" [१८०] ॥

३. हन्द इति। गृहाणेत्यर्थ। मधु मकरन्दम्। हन्दीति। गृहाणेत्यर्थ। परिमलं गन्धम् इदमिव भणितृभि। मञ्जुगुञ्जितकरणाद् उत्प्रेक्ष्यते। एतद् मधु इद परिमल गृहीत इत्यन्योन्यं भणनशीलैर्भसरमिथुनै पदपदद्वन्द्वै कृत्वा। उअ इति पश्येत्यर्थ। काञ्चनारो राजति। नीलमणिकल्पालिकलितसुवर्णवर्णप्रसूनत्वेन तर्क्यते मुकुट इव ग्रीष्मश्रिय ॥

हन्द। हन्दि। "हन्द च गृहाणार्थे" [१८१] ॥

४. जननीमिव। दुहितरमिव। नप्त्री पौत्री तामिव। सोदरा भगिनी तामिव। सखीमिव स्नेहाद् नवकाञ्चनकेतकीं नूतनस्वर्णकेतकीं मालाकार्य उपयान्ति। तत्कुसुमावचयार्थं समीपे गच्छन्ति ॥ ग्रीष्मे हि स्वर्णकेतकय पुष्प्यन्तीति ॥

इम व। जणणिं मिव। धूअं पिव। नत्तिं विअ। सोअरं विव। सहिं व। "मिवपिव°" [१८२] इत्यादिना एते इवार्थे अव्ययसञ्ज्ञका. प्राकृते प्रयुज्यन्ते वा। पक्षे मउडो इव ॥

५. वसन्तर्तुलक्ष्मीरतिक्रान्तैव। कथम्। येन लक्ष्मीकृत्य। फा।

---

१ B कम्बं; C कम्बं २ BC चेव.

फुल्ल च सुगन्ध चिअ लयाण णोमालिआ वले रम्मा ।
जा किर मल्ली जा इर जवा वले ते मयण-बाणा ॥ ६ ॥
सुत्ते जणम्मि जो हिर सद्दो चीरीण सुव्वए णवर ।
गाअइ किल तस्स मिसा णवरि वसन्तस्स गिम्ह-सिरी ॥७॥

अफुल्ला लवलीः ॥ तथा ग्रीष्मश्रीः स्फुटैव । कथम् । तेन लक्षीकृत्य । किम् । फुल्लं धूलिकदम्बम् ॥ "गौणात् समया°" [हे० २.२] इत्यादिना येनतेनयोगे द्वितीया । फुल्लं चेति चकारः पृथग्वाक्यद्योतनार्थः ॥

जेण । तेण । "जेण तेण लक्षणे" [१८३] ॥

६. फुल्लैव सुगन्धैव । वले इति निर्धारणे । लतानां मध्ये नवमालिका रम्या ॥ तथा या । किलेति संभावयामि । मल्ली । या किल जपा । वले इति निश्चितम् । ते मदनस्य बाणौ । तत्साध्यपान्थमोहनादिकार्यस्य ताभ्याम् अनुष्ठानात् ॥

णइ । चेअ । च । चिअ । "णइ चेअ चिअ च अवधारणे" [१८४] ॥
वले । "वले निर्धारणनिश्चययोः" [१८५] ॥

७. सुप्ते जने यः किल शब्दश्चीरीणां भृङ्गारीणां[1] श्रूयते । किलेति प्रसिद्धौ । लोकस्वापवेलायां चीरीनादः श्रूयत इति लोकप्रसिद्धिः । णवरेति केवलम् । तस्य मिषात् चीरिकाध्वनिव्याजात् । णवरि इति आनन्तर्ये । वसन्तस्य अनन्तरम् किलेति संभावयामि । ग्रीष्मश्रीर्गायति हर्षाद् गानं करोतीव ॥

किर । इर । हिर । "किरेर हिर किलार्थे वा" [१८६] । पक्षे किल ॥

णवर । "णवर केवले" [१८७] ॥

णवरि । "आनन्तर्ये णवरि" [१८८] ॥

---

1 B भृङ्गाराणां.

पहिआ अलाहि गन्तुं अणदइआण कुसलाइँ इह णाइं ।
माइँ इह णिय हद्धी इअ व्व चीरीहि उल्लविअं ॥ ८ ॥
समुहोल्लिअम्मि भमरे वेव्वे त्ति भणेइ मल्लिउचिणिरी ।
[illegible]एहिं भणिअं वेव्वे वयंसे त्ति ॥ ९ ॥
नेव्व सहि चिट्ठसु हला निसीद मामि रम जासि कत्थ हले ।
दे पासुअ किं मासि रुट्ठा हुं गिण्हसु कणय भायणयं ॥ १० ॥

८. [illegible] अलाहि इति निवारणे । अल गत्वा । गमनेन स्मृतम् इत्यर्थ । अण इति नञर्थे । अदयितानां कान्तारहितानाम् । णाइं इति नञर्थे । इह अस्मिन् वने न कुशलानि । अत । माइं इति मार्थे । मा इह वने एत । अपि तु स्वपत्नीपार्श्वे गच्छतेत्यर्थ । इतीव । हद्धी इति निर्वेदे । सनिर्वेदं यथा भवति एव चीरीभि [illegible] कूजितव्याजेन पान्थान् प्रति चीरिकाभिरिदम् उक्तम् इत्यर्थ ॥

॥ [अलाहि] । "अलाहि निवारणे" [१८९] ॥

अण । णाइं । "अण णाइं नञर्थे" [१९०] ॥

[illegible] । "माइं मार्थे" [१९१] ॥

। [illegible] "हद्धी निर्वेदे" [१९२] ॥

९. वेव्वे इत्यामन्त्रणे । हे वयस्ये इति भणित्वा संमुखोत्थिते भ्रमरे वारणम् अलिहस्ततलचालनेन निषेधनम् खेदस्तन्निवारणादेव प्रयास भयम् अलिदशनात् त्रास तै कृत्वा वेव्वे इति मल्लिकाम् उच्चेत्री [illegible] भणति ॥

वेव्वे । "वेव्वे भयवारणविषादे" [१९३] ॥

१०-२१. अधुना गाथाद्वादशकेन मीप्मपानक्रीडाम् आह । द्वादशभि कुलकम् । मधुमैरेयं मानयितुम् अनुभवितुं प्रवृत्ता एता

१ BD दशम्. २ C अमुना.

हुं तुह पिओ न आओ हुं किं तेणज्ज सो हु अन्न-रओ।
तुमयं खु माणइत्ता तस्स हु जुग्गा मि सा खु न तं ॥११॥
सहि वव्वरो खु अह धीवरो हुं एसो खु तुज्झ ऊ रमणो।
ऊ इअ हसेइ लोओ इमम्मि ऊ किं मए भणिअं ॥ १२॥
ऊ अच्छरा मह सही थु रे निकिट्ठ कलह-सील अरे।
दासो सि इमाइ हरे सढो सि ओ ओ किमम्मि दिट्ठो ॥१३॥

वारवनिता इति पूर्वोक्तरीत्या यदपि तदपि क्षीवतया संनद्धासनद्धं लपिन्यो भापणशीला, पका परिपाकप्राप्ता या द्राक्षास्तासां रसं पिबन्ति पानपात्रैर्धयन्ति ॥ १०. लपनप्रकारमेवाह। वेव्व इति आमन्त्रणे। हे सखि तिष्ठ। हलेति हे सखि निषीद। मामीति हे सखि रमस्व क्रीडां कुरु। हले इति हे सखि क यासि। दे इति सामान्येन संबोधने सख्यामन्त्रणे वा। हे सखि [प्रसीद]। किम् असि रुष्टा। हुं इति दाने। निर्तीर्णम् इत्यर्थः[1]। कनकभाजनं[2] गृहाण।

११. हुं इति पृच्छायाम्। पृच्छाम्यहं तव प्रियो नायात। हुं इति निवारणे श्रुतम्। अस्माकं किं तेनाद्य। नाधुना तेन प्रयोजनम् इत्यर्थः। हु इति निश्चितम्। सोऽन्यस्या रत[3]। खु इति निश्चितम्। त्वं मानवती। हु इति ऊहे। संभावयामि च तस्य योग्या सा अन्या। खु इति ऊहे। संभावयामि च तस्य न योग्या त्वम् असि ॥

१२. हे सखि। खु इति संशये। बर्बरो वा। हु इति संशये। धीवरो वा। खु इति विस्मये। एप हुरङ्गोपि। आश्चर्यम् एप समीपवर्ती तव। ऊ इति गर्हायाम्। निन्दितो रमण। ऊ इति सूचने। दोषाविष्करणपूर्वम् इति अनया रीत्या इमं त्वत्प्रियं लोक सखीजनरूपो हसति। अथ वा ऊ इति आक्षेपे। किं मया भणितं लोको हसति ईदृशम् अमुम् इति। एतद् मम वक्तुं न युक्तम् इत्यर्थः।

१३. ऊ इति आश्चर्यम्। अप्सरा मम सखी। थू इति कुत्सायाम्।

[1] BD यु  [2] B omits कनक°.  [3] CD रत.

अव्वो नओ तुह पिओ अव्वो तम्मोसि कीस किं एसो ।
अव्वो अन्नासत्तो अव्वो तुज्झेरिसो माणो ॥ १४ ॥
अव्वो पिअस्स समओ अव्वो सो एइ रूसणो अव्वो ।
अव्वो कट्ठं अव्वो किं एसो सहि मए धरिओ ॥ १५ ॥
अइ एसि रइ-घराओ वणे मिलाणा सि दइअ-दरवालिआ ।
मुणिमो वणे न मुणिमो तं न वणे कहइ न जमङ्गं ॥ १६ ॥

रे इति संभाषणे । निकृष्ट अधम कलहशील । अरे इति रतिकलहे । रतिकलहकारकेत्यर्थः । हरे इति संभाषणे रतिकलहे क्षेपे च । दासोसि अस्या मत्सख्याः । ओ इति सूचने । शठोसि गूढापराधो वर्तसे । ओ इति पश्चात्तापे । किम् असि दृष्ट. । त्वद्दर्शनात् पश्चात्तापो जात इत्यर्थः ॥

१४. अव्वो इति सूचने । नतस्त्वां प्रिय । अव्वो इति कष्टम् । किं ताम्यसि । अव्वो इति संभाषणे । किम् एष समीपवर्ती अन्यासक्त । अव्वो इत्यपराधे विस्मये च । तव ईदृशो मानः । सप्रणये प्रणयिनि मानकरणाद् अपराध आश्चर्यं च ॥

१५. अव्वो इति आनन्दे । प्रियस्य समय' आगमनलक्षणः । अव्वो इति आदरे । एति आगच्छति स मद्वल्लभ । अव्वो इति भये । निर्भेमि रोषण स्तोकापराधेपि कोपन स । अव्वो इति खेदे विषादे च । कष्टं यथा भवति एवं खिन्ना विषण्णा चाहम् इत्यर्थः । अव्वो इति पश्चात्तापे । अनुतप्तास्मि किम् एष सखि मया धृतः ॥

१६. अयीति संभावयामि । त्वम् एषि आगच्छसि रतिगृहात् । वणे इति संभावयामि । यतो दयितेन उपभुक्ता सती म्लाना विच्छायासि । वणे इति विकल्पे । जानीमो वा न जानीम । परं वणे इति निश्चितम् । तद् नास्ति यद् अङ्गं न कथयति । दन्तक्षतादिप्रकट-

---

१ C तुम्भेरिसो. २ D गिलाणा.

दासो वणे न मुच्चइ मणे पिओ तुज्झ मुच्चइ स अम्मो ।
पत्तो खु अप्पणो चिअ तए मयं चेअ निउणाए ॥ १७ ॥
पाडिक्कं दइआओ ताण वअंसीओ पाडिएक्कं च ।
पत्तेअं मित्ताइं उअ एसो एइ भामन्तो ॥ १८ ॥
देक्ख तुहेसो दइओ कहमिहरा पुलइआ सि दट्ठुमिमं ।
भणिमो न वयमिअरहा मुणिअमिमं एक्कमरिअं ति ॥१९॥

नाद् अङ्गमेव सुरतक्रीडितं प्रतिपादयतीत्यर्थः । उपमुक्तस्य तक्षादित्वात् [४. ३९५] दरवलः ॥

१७. वणे इत्यनुकम्प्ये । मणे इति विमर्शे । अन्ये मन्ये इत्यर्थेपि इच्छन्ति । अहं विमृशामि मन्ये वा प्रियस्तव दासः अनुकम्प्य इति न मुच्यते ॥ स प्रियः अम्मो इति आश्चर्यम् स्वयमेव प्राप्तः खु इति आश्चर्यम् त्वया निपुणया [स्वयमेव] मुच्यते ॥ निपुणयेति सोल्लुण्ठम् । ज्ञातं तव नैपुण्यं यद् अत्यन्तप्रणतं प्रेयांसं स्वयं गृहम् आगतम् अवमन्यस इत्यर्थः ॥

१८. काचित् सखी कलिकौतुकिनी कांचन प्रति प्रियव्यलीकानि साक्षादेव दर्शयति । प्रत्येकं दयिता अन्या वल्लभाः प्रत्येकं तासां दयितानां वयस्यश्च प्रत्येकं मित्राणि च तासाम् अनुकूलानि भाषमाणः आवर्जनार्थम् आलपन् । उअ इति पश्य । एष त्वत्प्रियः एति आगच्छति ॥

१९. पश्य तव एष दयितः । कथम् इतरथा इमं दृष्ट्वा पुलकितासि । न च कूटभाषित्वम् अस्मासु आरोप्यम् यतो न वयम् इतरथा पुलकावलोकनं विना भणाम । अतः एक्कमरिअं ति झगिति सांप्रतमेव वा इदं तवायं वल्लभ एवेति ज्ञातम् ।

---

१ C तुज्म. २ BC चेव. ३ BC पि. ४ BC त्वत्प्रिय. ५ B वस्यश, ६ BD एक्कसरिअमिति.

मा तम्म मोरउल्ला दर-विअसिअ-बन्धुजीव-कुसुमोट्ठि ।
अणुसोचसि धुत्तमिमं सरल सहावे किणो रमणं ॥ २० ॥
वार-विलया इ एआ गिम्ह-सुहं माणिउं पयट्टा जे ।
इअ जं वि तं पि लविराओ पिअन्ति र पिक-दक्ख-रसं ॥२१॥

२०. दर इति अर्धेन ईषद् वा विकसितं यद् बन्धुजीवकुसुमं जपापुष्पं तद्वद् ओष्ठौ यस्यास्तस्या संबोधनम् । मोरउल्ला इति मुधा त्वं मा ताम्य । तथा । किणो इति प्रश्ने । हे सरलस्वभावे धूर्तं शठम् इम रमण किम् अनुशोचसि । मायाविनोऽस्य अनुशोचनं कर्तुं नोचितम् इत्यर्थ ॥

वेव्वे । वेव्व । "वेव्व चामन्त्रणे" [१९४] ॥
हला । मामि । हले । "मामि हला हले सख्या वा" [१९५] पक्षे सहि॥
दे । "दे समुखीकरणे च" [१९६] ॥
हु । "हु दानपृच्छानिवारणे" [१९७] ॥
हु । खु । "हु खु निश्चयवितर्कसंभावनविस्मये" [१९८]
ऊ । "ऊ गर्हाक्षेपविस्मयसूचने" [१९९] ॥
थू । "थू कुत्सायाम्" [२००] ॥
रे । अरे । "रे अरे संभाषणरतिकलहे" [२०१] ॥
हरे । "हरे क्षेपे च" [२०२] ॥
ओ । "ओ सूचनापश्चात्तापे" [२०३] ॥
अव्वो । "अव्वो सूचनादुःखसंभाषणापराधविस्मयानन्दादरभयखेदविषाद पश्चात्तापे" [२०४] ॥
अइ । "अइ संभावने" [२०५] ॥
वणे । "वणे निश्चयविकल्पानुकम्प्ये च" [२०६] ॥
मणे । "मणे विमर्शे" [२०७] ॥
अम्मो । "अम्मो आश्चर्ये" [२०८] ॥

---

१ BC पयट्टो. २ BD ज पि.

एकेकमेस स महू अम्बो वि हु एक्कमेक्कमेसो सो ।
लोआ हणिही पहिआऽलीण रवेणेममाह वणं ॥ २२ ॥

अप्पणो । " स्वयमोर्थे अप्पणो न वा " [ २०९ ] पक्षे सयं ॥
पाडिक्क । पाडिएक्कं । "प्रत्येकम. पाडिक्क पाडिएक्कं"[२१०] । पक्षे पत्तेअं ॥
उअ । " उअ पश्य " [ २११ ] । पक्षे देक्ख ॥
इहरा । " इहरा इतरथा " [ २१२ ] पक्षे इअरहा ॥
एक्कसरिअं । " एक्कसरिअं झगिति संप्रति " [ २१३ ] ॥
मोरउल्ला । " मोरउल्ला मुधा " [ २१४ ] ॥
दर । " दरार्धाल्पे " [ २१५ ] ॥
किणो । " किणो प्रश्ने " [ २१६ ] ॥
[ इ । जे । र । " इजेराः पादपूरणे " [ २१७ ] ॥
वि । पि । " प्यादयः " [ २१८ ] ॥

इति प्राकृतद्याश्रयमहाकाव्ये अष्टमस्याध्यायस्य उदाहरणप्रतिपादनद्वारेण द्वितीयः पादः संपूर्णः ॥

---

२२. एकैकं पृथक्पृथग् यथा भवति एवम् एप स मधुः मधूकः तथा एकैकम् आम्रोपि । हु इति संभावयामि । भो लोकाः पान्थान् हनिष्यति इदम् आह अलीनां रवेण गुञ्जितव्याजेन वनं काननं कर्तृ । अन्योपि अध्वन्यान् प्रति कृपालुतया कचिद् अवस्थितांश्चौरादीन् घातकान् कथयतीत्युक्तिलेशः ॥

एक्कमेक्कम् । "वीप्स्यात् स्यादेः" [१] इत्यादिना वीप्सार्थात् पदात् परस्य स्यादेः स्थाने स्वरादौ वीप्सार्थे पदे परे मो वा । पक्षे एक्केकम् ॥
अम्बो । " अतः सेर्डो. " [ २ ] इति डो ॥
एस एसो । स सो । " वैतत्तदः " [ ३ ] इति डो वा ॥
लोआ । पहिआ । " जस्शसोर्लुक् " [ ४ ]
इम । "अमोऽस्य"[५]इति अमोऽस्य लुक् । "शेपेऽदन्तवत्"[३.१२४] इत्यदन्तवत्त्वात् ॥

खज्जूरेहि पिआलेहिँ फणसेहिँ अवि दंसिअ-फलत्तो ।
हरिसाओ दूराउ वि उज्जाणमिमं न को सिहइ ॥ २३ ॥
सिरिसाहिन्तो तह किंसुआहि बउला य महमहिअ गन्धो ।
देसत्तो गामाओ नयराउ वि कं न आणेइ ॥ २४ ॥
पत्थाहिन्तो रामेसुन्तो देवेसराहि वि अणूणो ।
धारा-हरस्स मज्झे तओ गओ सज्जिअम्मि निवो ॥ २५ ॥

अलीण । रवेण । टामोर्णः " [ ६ ] इति टाया आमश्च णः ॥

२३. खर्जूरैः प्रियालैः राजादनैः पनसैश्च कृत्वा दर्शितं च तत् फलं च एतस्मात् प्रकटितफलाद् अत एव हर्षाद् दूराद् अनासन्नदेशादपि को न उद्यानम् इदं स्पृहयति । अपि तु तत्तद्वृक्षफलास्वादवाञ्छया सर्वोपि सहर्षम् इदम् अभिलषतीति भावः ॥

खज्जूरेहि । पिआलेहिँ । फणसेहिँ । " भिसो हि हिँ हिं " [ ७ ] ॥

२४. शिरीषात् तथा किंशुकाद् बकुलाच्च प्रसृत्य गन्धः कर्ता देशेभ्यो ग्रामेभ्यो नगरेभ्योपि कं न आनयति किं तु तेन गन्धेन कृष्टः सर्वतः सर्वोप्यागच्छतीत्यर्थः ॥

फलत्तो । हरिसाओ । दूराउ । सिरिसाहिन्तो । किंसुआहि । बउला । "ङसेस्त्तो दो दु हि हिन्तो लुकः " [ ८ ] इति ङसेः षड् आदेशाः ॥

२५. अथ ग्रीष्मर्तुविलाससर्वस्वभूतं जलकेलिक्षणं विवर्णयिषुः जलयन्त्रगृहनृपप्रवेशपूर्वं जलयन्त्रगृहवामादिदेशतद्वितर्दिमकरमुखस्फटिकस्तम्भद्वारोत्तरङ्गपञ्चालिकाकर्णादिप्रदेशेभ्यस्तरसाधनभूतं जलनिर्गमम् आह । पार्थेभ्यः पाण्डवेभ्यः रामेभ्यः रामचन्द्रपरशुरामबलभद्रेभ्यः देवेन्द्रेभ्योपि अनूनः । सर्वोत्तम इत्यर्थः । नृपः धारागृहस्य जलयन्त्रगेहस्य सज्जिते सकलोपकरणोपेते मध्ये ततो दौवारिकाद् ग्रीष्मप्रादुर्भावश्रवणानन्तरं गतः प्रविष्टः ॥

१ BD सिरसा°. २ BC किं. ३ B सिरसा°.

रेहन्ता वण-भागा तओ पलोट्टा जवा जलाणोघा ।
वामाउ दाहिणाओ समुहत्तो पच्छिमाहिन्तो ॥ २६ ॥
वेइअ-मयर-मुहाहि अ आ-मूल-सिरं च फलिह-थम्माओ ।
गयोत्तरङ्गयाओ नीहरिआ वारि-धाराओ ॥ २७ ॥
पञ्चालिआहि मुकं कन्नेसुन्तो जलं मुहासुन्तो ।
हत्थेहिन्तो चरणाहिन्तो वच्छाहि उअरेहि ॥ २८ ॥

देसत्तो । गामाओ । नयराउ । पत्थाहिन्तो । रामेसुन्तो । देवेसराहि ।
" ङसस् त्तो दो दु हि हिन्तो सुन्तो " [ ९ ] इति ङसः षड् आदेशाः ॥

धारा-हरस्स । " ङसः स्सः " [ १० ] ॥

मज्झे । सलिअम्मि । "डे म्मि डेः" [ ११ ] इति डेर्डित् एकारः म्मिश्च ॥

२६. ततो राज्ञो यन्त्रगृहप्रवेशाद् ऊर्ध्वं वनभागान् प्लावयन्तो जवात् जलौघाः प्रवृत्ताः । कथम् । वामात् । दक्षिणात् । संमुखात् । पश्चिमात् । पार्श्वपृष्ठाग्रप्रदेशस्थजलयन्त्रप्रादुर्भूतजलप्रवाहवेगेन काननान्तराला व्याप्ता इत्यर्थः ॥ प्लवतेः वक्षादित्वात् [ ४.२१५ ] रेहादेशः ॥

२७. वेदिकायां वितर्दौ यानि मकरमुखानि तेभ्यश्च मूलं च शिरश्च ते अभिव्याप्यामूलशिरो यथा भवति एवं स्फटिकस्तम्भेभ्यश्च द्वाराणां यान्युत्तराङ्गाणि ऊर्ध्वदारूणि तेभ्यश्च वारिधारा निःसृताः ॥

रेहन्ता । वण भागा । जवा । जलाण । वामाउ । दाहिणाओ । समुहत्तो । पच्छिमाहिन्तो । मुहाहि । थम्माओ । गयाओ । "जस्शस्ङसित्तोदोद्वामि दीर्घः" [१२] । एषु अतो दीर्घः । ङसिनैव सिद्धे त्तोदोदुग्रहणं ङ्यसि एत्वबाधनार्थम् ॥

२८. कर्णेभ्यः मुखेभ्यः हस्तेभ्यश्चरणेभ्यो वक्षोभ्यः उदरेभ्यः पञ्चालिकाभिः शालभञ्जिकाभिर्जलं मुक्तम् ॥

---

१ BC नगराउ.

वेएणं सम विसमे पूरन्तेहिँ जलेहि कूवेहि ।
खन्धेसु तुसार-मिसा तरूहिँ पुलउ व्व पायडिओ ॥ २९ ॥
दट्ठुं तं छणमच्छीहिँ जणो उज्जाण भूमिसु अमन्तो ।
तत्थ गिरीसु तरूओ गओ गिरीओ तरूसुं च ॥ ३० ॥
पक्खेसु चउसु दारेसु चऊसु चऊहि सालभञ्जीहि ।
चउहि करएहि तुंछं पलोट्टिअं वारि धारीए ॥ ३१ ॥

कनेसुन्तो । मुहासुन्तो । हत्थेहिन्तो । चरणाहिन्तो । वच्छाहि । उअरेहि ।
" भ्यसि वा " [ १३ ] । भ्यसादेशे अतो दीर्घो वा ॥

२९ कूपेभ्य इति उपात्तविषये अपादाने पञ्चमी । तत कूपाद् नि:सृत्येत्यर्थ । वेगेन दक्षपुरुषप्रेरितकूपान्तर्वर्तियन्त्रजत्त्वाज्जवेन समविषमान् प्राञ्जलनिम्नोन्नतप्रदेशान् पूरयद्भिर्जलै कृत्वा तरुभि कर्तृभि । मूलात् शाखावधय प्रकाण्डा । तेषा मस्तकानि स्कन्धास्तेषु पुलक इव वेगविनि सृतजलप्रवाहोच्छलिततद्बिन्दुसदोहविष्वग्व्याप्तत्वेन रोमाञ्च इव प्रकटित. व्यक्तीकृत ॥

वेएण । सम-विसमे । "टाणशस्येत्" [ १४ ] इति एकार ॥

कनेसुन्तो इत्यादि । पूरन्तेहिं । जलेहि । कूवेहि । खन्धेसु । "भिस्भ्यस्सुपि" [ १५ ] एषु अत ए ॥

३० तत्र सर्वर्तुपुष्पजातियुक्तत्वात् प्रसिद्धासु उद्यानभूमिषु अमान् संकीर्णत्वेन अवस्थातुम् अपारयन् तम् आश्चर्यकारिक्षण मकरमुखादिजलयन्त्रनिर्गममहोत्सवम् अक्षिभिर्द्रष्टु जनस्तरुभ्यो गिरिषु गिरिभ्यस्तरुषु च गत । निरन्तरायम् अवलोकयितुम् उच्चोच्चतरप्रदेशेष्वारूढ इत्यर्थ ॥

तरूहिं । अच्छीहिं । गिरीसु । तरूओ । गिरीओ । तरूसु । " इदुतो दीर्घ " [ १६ ] ॥ च्छणमि । भूमिसु ॥

३१. पक्षेषु स्तम्भादिपार्श्वेषु चतुर्षु द्वारेषु पार्श्वस्थग्रामगृहमुखेषु

१ D धाराए २ D वेगेग ३ D त तत्राश्चर्य°. ४ D °यन्त्रजल°.

थम्भ-सिहराहि चउओ चऊओं वेई-मुहाहि सिञ्चीअ ।
कील-गिरी कील-तरू जल-पूरो उरुं अमन्द-गई ॥ ३२ ॥
साऊ जलोह-पन्ती जइ एसा किं दहिं महुं किं वा ।
इअ नम्म-पडू जल-पाण-रई लवइ म्ह विड-लोओ ॥ ३३ ॥
मयणग्गउ तह विरहग्गओ वि संधुक्किआ चिरं जेहि ।
अइ-मलय-वायओ वायउ व्व हूआ जल-प्पवहा ॥ ३४ ॥

चतुर्षु वर्तमानाभिश्चतसृभिः शालभञ्जिकाभिः चतुर्भिः करकैर्वारि-घटिकाभिः कृत्वा तुल्यं युगपद् धारया वारि पर्यस्तं मुक्तम् ॥

३२. स्तम्भशिखरेभ्यश्चतुर्भ्यः वेदिकामुखेभ्यश्चतुर्भ्यः अमन्दगतिः शीघ्रप्रवृत्तिः उरुर्महान् जलपूरः क्रीडार्थं कृताः गिरयः क्रीडागिरयस्तान् तथा क्रीडातरून् असिञ्चत् औक्षत् ॥

चउसु चऊसु । चउहि चऊहि । चउओ चऊओ । "चतुरो वा "[१७] इति दीर्घो वा ॥

कीलगिरी । कील-तरू । " लुप्ते शसि " [ १८ ] इति दीर्घः ॥

३३. स्वादुः जलौघपङ्क्तिः मकरमुखादिनिर्गतजलप्रवाहपरंपरा यद्येषा तदा किं दधि किं वा मधु । शरीरसौख्यस्य अमृतमधुरया अनयैव कृतत्वाद् नैताभ्यां प्रयोजनम् इत्यर्थः । इति नर्मणि परस्परं परिहासे पटुः जलपानरतिर्विटलोकः पिङ्गजनो लपति स्म ॥

साऊ । पन्ती । पडू । रई । "अक्लीबे सौ" [१९] इति दीर्घः । अक्लीब इति किम् । दहिं । महुं । केचिद् दीर्घत्वं विकल्प्य मादेशमिच्छन्ति । उरुं अमन्द गई ॥

३४. मदनाग्नयस्तथा विरहाग्नयोपि यैश्चिरं संधुक्षिताः संदीपिताः ते वायव इव जलप्रवाहा भूता जाताः । तत् किं मलयवायव इव । नेत्याह । अतिक्रान्तमलयवायवः । पान्थसार्थस्य अधिकतरं मदनाभि-

जलिअग्गिणो व्व जल-वाउणो वि विरहीण साहवो नासि ।
अह वा विहिम्मि वामे साहू वि न साहुणो हुन्ति ॥३५॥
कीला-गिरिणो साहउ कीला-तरुणो वि साहओ जाया ।
नीक-पवाहेहि जओ गिरी तरू वा जल-सलोणा ॥ ३६ ॥
उचिणिअ बहू तरुणो काउं गिरिणो व्व बहु-कुसुम-रासी ।
गिरिणो तरुणो अ तले कुसुमाभरणाइँ रइआइं ॥ ३७ ॥

विरहाग्निदीपनात् तेभ्योऽप्युत्कृष्टा इत्यर्थः । अत्र तच्छब्दो ज्ञेयः ॥

३५. ज्वलिताग्नय इव जलेन मिश्रा वायवो जलवायवस्तेऽपि विरहिणां पान्थानां ज्वलिताग्नय इव साधवः उपकारका नासन् । अधिकतरं संतापमेव चक्रुरित्यर्थः । अथ वा युक्तमेवैतत् । विधौ वामे प्रतिकूले सति साधवोऽपि हिता अपि न साधवो हिता भवन्ति ॥

मयणग्गउ विरहग्गओ । वायओ वायउ । "पुंसि जसो डउ डओ वा" [ २० ] इति अउ अओ इत्यादेशौ । पक्षे अग्गिणो । वाउणो ॥

३६. नीकानां कुल्यानां प्रवाहैः कृत्वा क्रीडागिरयः साधवः प्रधानाः क्रीडातरवोऽपि साधवो जाताः । यतो गिरयस्तरवो वा जलेन सलवणा लावण्योपेता भवन्ति ॥

साहवो । "वोतो डवो" [ २१ ] इति जसो डित् अवो । पक्षे साहू । साहुणो । साहउ । साहओ ॥

३७. उच्चित्य बहूंस्तरून् ततः कृत्वा गिरीनिव अत्युच्चत्वात् पर्वतानिव बहुकुसुमराशीन् गिरेस्तरोश्च तले अथ कुसुमाभरणानि जलकेलिक्षणोचितानि पर्णपूरादीनि रचितानि । दंपतिभिरिति शेषः ॥

कीला-गिरिणो । कीला तरुणो । तरुणो । गिरिणो । "जस्शसोर्णो वा" [ २२ ] इति णो । पक्षे गिरी । तरू । बहू । रासी ॥

१ BCD दंपतीभि॰.

गुरुणो कीला-गिरिणो निवडिअ निज्झर-जलाइँ जायाइं ।
चन्दण-घुसिणच्छाइं दहिणो महुणो सिरि-हराइं ॥ ३८ ॥
लीला-गिरीउ चङ्गिम-गुरूउ निज्झर-जलाइँ सहिआइं ।
अखलिअ-गइस्स किर रइ-पहुस्स जय-वेजयन्तीओ ॥३९॥
रइ-अहिवइणा पहुणा तइआ पवलेण तरुण-मिहुणाण ।
दहिणा दहिं व महुणा महुं व मिलिअं मणेण मणं ॥ ४० ॥

३८. गुरोः महतः क्रीडागिरेः सकाशाद् निपत्य निर्झरजलानि चन्दनघुसृणवन्ति सन्ति चन्दनमिश्रितत्वाद् दध्नः घुसृणमिश्रितत्वाच्च मधुनः सकाशात् श्रियं हरन्ति चोरयन्ति दध्नो मधुनो वा संबन्धिनीं श्रियं हरन्ति श्रीहराणि जातानि । तदधिकशोभाकलितानि संवृत्तानी-त्यर्थः ॥

३९. चङ्गत्वेन प्रधानत्वेन गुरोर्गरिष्ठात् लीलागिरेः सकाशाद् निर्झरजलानि अस्खलितगतेः अविलङ्घिताज्ञस्य रतिप्रभोः किर इति इवार्थत्वात् जयवैजयन्त्य इव राजितानि द्राघीयस्त्वनिर्मलत्वाभ्यां जयपताका इव शोभितानि ॥

गिरिणो । तरुणो । गुरुणो । कीला गिरिणो । दहिणो । महुणो । "ङसिङसोः पुंक्लीबे वा" [ २३ ] इति णो । पक्षे गिरीउ । गुरूउ । °गइस्स । पहुस्स ॥

४०. प्रभुणा स्वाज्ञाविधापनात् समर्थेन तदा लीलागिरिनिपतन्नि-र्झरवारिप्रवाहावसरे प्रबलेन सर्वसामग्रीयुक्तत्वेन प्रचण्डेन रत्यधिपतिना तरुणमिथुनानां युवदंपतीनां दध्ना दधीव मधुना मध्विव मनसा मनो मेलितम् ऐक्यं प्रापितम् ॥

अहिवइणा । पहुणा । दहिणा । महुणा । "टो णा" [२४] इति णा । ङसि-ङसोरित्यस्य व्यावृत्तिरपि । इदुत इत्येव । मणेण । द इति किम् । दहिं महुं ॥

मणं । "क्लीबे स्वरान्म् सेः" [२५] इति सेः म् । केचिद् अनुनासिकमपीच्छन्ति तदा । दहिँ महुँ ॥

कुल्ल-जलाइं अइसीअलाइँ विमलाणि पेच्छ पवहन्ति ।
इअ भणिरा महिलाओ जल-केलि-छणे पयट्टाउ ॥ ४१ ॥
हारावलि मुत्ताउ वि जलाहयाओ जलम्मि निवडन्ता ।
अगणिअ जले विलुलिआ का वि मयच्छी हसन्तीआ ॥४२॥
मउवीओ तणुवीआ पेच्छ जले संचरन्ति लीलाअ ।
रम्माइ बहु-विहाए ठाणं अच्छर-सरिच्छाओ ॥ ४३ ॥

४१. अतिशीतलानि विमलानि कुल्याजलानि प्रवहन्ति स्रोतोरीत्या गच्छन्तीति पश्य इति भणित्र्य परस्पर भाषमाणा महिला युवत्य जलकेलिक्षणे प्रवृत्ता । कान्तै सहेति शेष ॥

जलाइ । अइसीअलाइँ । विमलाणि । "जश्शस इँइणय सप्राग्दीर्घा "[२६]॥

४२. अधुना तदेव जलकेलिक्षण पट्त्रिंशता गाथाभि प्राह । जलैराहतास्ताडिता अत एव जले निपतन्ती भ्रश्यन्ती हारावलिमुक्ता अपि आस्ता वस्त्रादिक मुक्ताकलापमुक्ता अपि अगणयित्वा अनादृत्य हसन्ती [1]प्रियै सह चस्करिपरा कापि मृगाक्षी जले विलुलिता बुडिता॥

महिलाओ पयट्टाउ । मुत्ताउ जलाहयाओ । "स्त्रियाम् उदोतौ वा" [२७] इति जश्शसो [प्रत्येकम्] उदोतौ सप्राग्दीर्घौ । पक्षे भणिरा । निवडन्ता ॥

४३-४५. त्रिभिर्विशेषकम् । अहिलोकवध्वा पातालकन्यकाया सुरवध्वा देवाङ्गनाया तथा यक्षश्च पुण्यजन किंनरश्च किंपुरुषस्तयोर्वध्वा सकाशात् रूपाधिका । ताभ्योपि प्रधाना इत्यर्थ । वध्वा इति जातिविवक्षया एकवचनम् । दयिताराटस्थतरुणी पार्श्वस्थयुवभि इति पूर्वोक्त भणिता ॥ ४३. तदेवाह । मृद्व्य कोमलच्छवय अप्सरसदृशा देवाङ्गनातुल्यास्तन्व्यो नायिका रम्याया बहुविधाया लीलाया

---

[1] D प्रिदेन.

पिच्छ ह जल-लहरीए एन्तीइ उदञ्चिरीअ पडिरीआ ।
खेलन्ति मज्झ-लुलिआ समराइअ-तरल-कवरीओ ॥ ४४ ॥
अहि-लोअ-वहूए सुर-वहूइ तह जक्ख-किंनर-वहूअ ।
रूवाहिआउ दइआ तइत्थ-तरुणेहि इअ भणिआ ॥ ४५ ॥
को वि वहूओ अइखेअराउ खे खेअरीण पच्चक्खं ।
रममाणीउ अकालीउ लहिअ गण्डूसमुद्धंसिओ ॥ ४६ ॥

स्थान रम्यया बहुविधया लीलया [ वा ] जले मचरन्तीति पश्य इति योजनाया मृग्य इत्यादिषु प्रथमा । मृद्वी अप्सर सदृशास्तन्वी पश्य जले सचरन्ति लीलयेत्यादियोजनाया तु द्वितीया ॥

४४. यत्याम् आगच्छन्त्याम् उदञ्चिन्याम ऊर्ध्वं यान्त्या पतिन्याम् अधोमतिन्या जललहर्यां मध्ये लुलिता गता मकरायिता तदाकारत्वाद् मीनवद् आचरितास्तरलाश्चञ्चला कवर्यो वेणयो यासा तास्तथा खेलन्ति क्रीडन्ति इति पश्य ॥ ४ ॥

हसन्तीआ । तणुवीआ । "ईत सेश्वा वा" [२८] इति आ । पक्षे मयच्छी । मउवीओ ॥

४६. अतिक्रान्ता रूपसौन्दर्याद्यतिशयात पराभूता खेचर्यो विद्याधरवध्वो यया तस्या रममाणाया क्रीडन्त्या अकालायां अनुकूलाचरणाद् अक्षेपिकाया [ वध्वा ] सकाशात् खे गगनाङ्गणे खेचरीणा प्रत्यक्ष यथा भवति एव गण्डूष मुखजल लब्ध्वा प्राप्य कोपि उद्धुषित । मूर्तप्रेमायमाणप्रियागण्डूषप्रादुर्भवप्रमोदतया पुलकित । धुषि सौत्र ॥

लीलाअ रम्माइ बहु विहाए । लहरीए एन्तीइ उदञ्चिरीअ पडिरीआ । वहूए वहूइ । वहूअ । वहूआ इति वा पाठ । "टाङस्ङेरद् आद् इद् एद् वा तु ङसे."

१ BC उद्धसिओ. २ B omits लीलया ३ C तयाका° ४ BC repeat here महिलाओ पयडाउ । मुत्ताउ नलाइयाओ । स्त्रियाम् उदोतौ वा इति जदसो प्रत्येकम् उदोतौ सप्राग्दीर्घौ । पक्षे मन्दिरा ॥ ५ CD insert प्रति after गण्डूष°.

रममाणाए कालाइ इमीए कीइ काइ अ इमाए ।
रे अज अजाइ रमसे त्ति का वि भणिउं हणीअ पिअं ॥४७॥
जीओ तीओ मुद्धा जाओ ताओ वि तह विअड्ढाओ ।
तरुणीण जाण ताण वि जल-दन्द-रणे पयट्टाओ ॥ ४८ ॥
अच्छीण कज्जल-सिरी जा सा गलिआ न काण उम्मीहीं ।
कं पि हु तं नयण-सिरिं ता पत्ता जं जणो सिहइ ॥ ४९ ॥

[२९] इति प्रत्येकम् अत् आत् इत् एत् इत्यादेशा.। ङसेस्तु वा। पक्षे वहूओ इत्यादि। टादीनाम् इति किम्। सरिच्छाओ इत्यादि ॥

लीलाअ। रम्माइ। बहुविहाए इत्यादि। 'नात आत्" [ ३० ] इति स्त्रियाम् आदन्ताट्टादीनाम् आ आदेशो न ॥

खेअरीण। "प्रत्यये ङीर्न वा" [ ३१ ]। अणादिसूत्रेण प्रत्ययनिमित्तो यो ङीरुक्त' [ हे० २. ४. २० ] स स्त्रियां नाम्नो वा। पक्षे खेअराउ ॥

४७. रममाणया क्रीडन्त्या कालया तिरस्कारपरया कया कुत्सितया अनया थया तथा अनया च अजया भर्तृप्रसादनकलाविकलत्वेन पशुप्रायया सार्धं रे अज कान्ताप्रसादनानिपुणत्वेन पशो त्वं रमसे इति पूर्वोक्तं भणित्वा कापि प्रियं जघान जलैरताडयत् ॥

रममाणीउ। अकालीउ। इमीए। "अजातेः पुंस "[ ३२ ]। अजातिवाचिनः पुल्लिङ्गात् स्त्रियां वर्तमानाद् ङीर्वा। पक्षे रममाणाए। कालाइ। इमाए ॥

४८. यासां तासामपि तरुणीना मध्ये यास्ता मुग्धा अकृत्रिममनोहरा. तथा यास्ता अपि विदग्धा' कटाक्षविक्षेपादिभिः प्रियावर्जने प्रवीणा जलद्वन्द्वरणे प्रिये सह जलक्रेडौ प्रवृत्ताः ॥

४९. अक्ष्णां या कज्जलश्री अञ्जनशोभा सा कासाम् ऊर्मिभि पर्गोद्दे न गलिता। किं तु सर्वासा सा मलिछै क्षालितेत्यर्थ ॥ परं कामपि। हु इति आश्चर्यम। ताम अद्भुता नयनश्रियं ता नायिका प्राप्ता यां जन काङ्क्षति। कज्जलापगमे हि नयनयोर्नि.श्रीकता

घण-छाहि-कयलि-छाये हलद्दि-गोरी हलद्-गोरीहि ।
विलया जलम्मि रमिआ ससाउ दुहिआउवन्नोन्नं ॥ ५० ॥
तर फलिहं कट्ठ अरे न लवसि किं अज्ज मा लवसु अज्जो ।
पइ नेसि पई मेसु व भणीअ इअ का वि जल-मज्झे ॥५१॥

भवति। परम् एतन्नयनानां तथाभावेपि स्वभावमनोहरत्वाद् एतानि सर्वोपि सतृष्णम् ईक्षत इत्यर्थः ॥

कीइ काइ । जीओ तीओ । जाओ ताओ । "किंयत्तदोऽस्यमामि" [३३] । एभ्यः स्त्रिया ङीर्वा । अस्यमामीति किम् । का । जाण ताण । जा सा । काण । कं तं जं ॥

५०. घना चासौ छाया च आतपाभावो घनच्छाया तया युक्ताः कदल्यो रम्भास्तासां छाया पङ्क्तिस्तस्यां जले च हरिद्रावद् गौर्यः गौरवर्णास्ताभिः सह हरिद्रागौर्यो वनिता रताः क्रीडिताः । निरुपमस्नेहयुक्तत्वाद् यकाभिर्हरिद्रागौरीभिः सार्धं ता रमन्ते तासां मन्यन्ते स्वसारो भगिन्यस्ता इव दुहितरः पुत्रिकास्ता इव चेति ॥

छाहि छाये । हलद्दि-गोरी हलद्-गोरीहि । "छायाहरिद्रयोः" [३४] । अनयोः आप्प्रसङ्गे स्त्रियां ङीर्वा ॥

ससाउ । दुहिआउ । "स्वस्रादेर्डा" [३५] इति स्त्रिया डित् आः ॥

५१. अरे इति संभाषणे । हे काष्ठ नीरसत्वाद् दारो त्वं परिगां स्वार्ति तर अतिक्रमय । सरसविचक्षणोचिते जलकेलिक्षणे किं मम पार्श्वे तिष्ठसीत्यर्थः । काष्ठं किल तीर्त्वा तटीं गच्छतीत्युक्तिलेशः । तया किम् अये आर्य या न लपसि भणिते प्रत्युत्तरं न ददासि । मा या अये आर्य वा लप । तथा पते भर्तः नैपि मत्पार्श्वं नागच्छसि । मा या पते एहि । स्वसमीहितं कुर्वित्यर्थः । इति पूर्वोक्तं कापि जलमध्ये घमाण भर्तुरमे उवाच ॥

---

१ BC हलिद्दि°. २ D भगिनेपि.

निग्घिणया सढ-पिअरं ओसर निग्घिणय मुञ्च घिट्ठ-पिअ।
का वि जलन्तर-कड्डिअ-कडिछ्रयं इअ भणीअ पिअं ॥५२॥
कत्तार कया किमहं सुणसु वयंसे निरिक्खसु वयंसा।
अम्मो अन्नाइ पिओ रमए कीए वि इअ रुन्नं ॥ ५३ ॥
सहि वर-वहु चयसु इमं गामणिमिव खलपुणो वहूइ इह।
वारिणि इमाइ रमिरं इअ का वि सहीइ सिक्खविआ ॥५४॥

फलिह। "ह्रस्वोऽमि" [३५] इति ह्रस्व ॥

कट्ठ। "नामन्यात् सौ म" [३७] इति "क्लीबे स्वरान्म् से" [३ २५] इति यो म उक्त स न ॥

५२ हे निर्घृण नि कृप हे शठाना पित अतिशयकूटकरणाद् मायाविनाम आद्य स्वम् अपसर मद्दृष्टिगोचराद् गच्छ। तथा हे निर्घृण धृष्टाना व्यक्तापराधाना पितस्त्व मुञ्च मा मद्वस्त्रादिक स्प्राक्षी। जलस्य अन्तर मध्य तस्मिन् कृष्टम् अपासित कम्यम् अधस्तनवस्त्र येन त प्रिय कृत व्यलीक दयितम् इति पूर्वोक्त कापि बभाण निरभर्त्सयत् ॥

अत्र अन्नो। पद पई। निग्घिणया निग्घिणय। "डो दीर्घो वा" [३८] इति डो दीर्घो वा ॥

पिअ। "ऋतोऽद् वा" [३९] इति अकार अन्तादेश। पक्षे पिअर।

५३ हे कर्त स्रष्ट किमह कृता। एव प्रियापमाने सति मज्जन्मनो निरर्थकत्वात् किमह सृष्टा। तथा हे वयस्ये सखि शृणु मद्वाक्यम् आकर्णय। तथा वयस्ये निरीक्षस्व। तथा हे अम्ब मात अन्यस्याम अपरकान्ताया प्रियो रमते इति अनया रीत्या कयापि रुदितम् ॥

किमर। "नाम्न्यर वा" [४०] इति अर। पक्षे पिअ। नाम्नीति किम्। कत्तार ॥

वयस। "वाप ए" [४१] इति आप एत्वम्। पक्षे वयसा ॥ बाहुलकात् क्वचिद् आत्वमपि। अम्मो ॥

५४. सखि वरवधु प्रधानपत्नि इह ग्रीष्मे वारिणि जलमध्ये

१ B का मिल°.

जामाउणो रमन्ते उअ वारिणि अपुरवं खु लडहत्तं ।
को अन्नो लडहो सम्मलीहिं काहिं पि इअ भणिअं ॥५५॥
रे धुत्त-पिआ सि तुमं जग-पिअरा गोरि-संकरा सनिमो ।
मा सवसु अप्प-पिअरं तं भत्तारो किमम्हाण ॥५६॥

अनया त्वत्सपत्न्या सह रन्तार रमणशीलम् इम पुरोवर्तिन प्रियम् खलप्व कर्षकस्य वध्वा ग्रामणी भर्ता तमिव । अकृत्यकारितया हालिकम् इत्यर्थ । त्यज मा अङ्गीकार्षी इति अनया रीत्या कापि सख्या शिक्षिता ॥

वहि । वर-वहु । "ईदूतोर्ह्रस्व" [ ४२ ] ॥

गामणि । खलपुणो । "क्विप" [४३] इति ह्रस्व ॥

५५ जामातरो दुहितृपतय वारिणि रमन्ते अस्मत्पुत्रिकाभि सह जलकेलिं कुर्वन्ति । उअ पश्य जामातॄन् । इति एकया उक्ते सति अपरा प्राह । खु आश्चर्यम् अपूर्वं लोकोत्तरम् । जातिविवक्षया एकवचनात् जामातु । लडह इति देश्यो रूपमशब्द सस्कृतो वा सुन्दरार्थ । ततो लडहत्त रूपभत्व वा सौन्दर्यम् । ततस्तदन्यापि आह । कोन्य अपरो जामातु सकाशात् रूपम प्रधान । किं तु इत्थ यौवनमाननाद् एप एवेत्यर्थ । इति अनया रीत्या काभिरपि सम्मलीभि तत्क्रीडावलोकनागततटस्थकुट्टिनीभिर्भणित जल्पितम् ॥

५६. त्रिभिर्विशेषकम् । अन्यस्या सपत्न्या । उरेस्तत्वादित्वात् [ ४. ३९५ ] छण्टादेश । उम्पणे जलेन आहनने कृते सति प्रक टेन अनेन मदीयापराधेन निश्चितम् इय मानिनी बहु किमपि कुपिता भविष्यतीति प्रसादयितु समागते प्रियतमे इति अनया रीत्या कयापि रन्ति साश्रुपातम उक्तम् । तदेवाह । रे त्व धूर्तानां पिता । शाठ्याचरणाद् मायाविना मुख्य इत्यर्थ । असि वर्तसे । अत्रार्थे जगत पितरौ गौरीशङ्करौ । आत्मान बहुमन्यमाना बहुवचनेन निर्दिशति । वय तुभ्य शपामहे तच्छपथ कुर्म । ततोमी वद्रक्षनाय मम त्वमेव प्रिया तस्यास्तु सेचन मया एवमेव कृतम्

1 B गामिणि 2 CD add परस्पर before जल्पितम्

भत्तारा जाण वसे धन्ना इत्थीण ताण माआओ ।
माआए किं जणिआ किं महिआ माअराउ मए ॥५७॥
देवा पिअरा सरणं संहर कत्तार भुअण-कत्ता मं ।
अन्नाइ छण्ठणे पिअयमम्मि कीए वि इअ रुण्णं ॥५८॥

इत्यर्थे पितृशपथं कुर्वाणस्तया ऊचे । त्वं मह्यं मा शपस्व आत्मपितरम् तच्छपथं मा कार्षीः । यतस्त्वं किम् अस्माकं भर्ता । किं तु तस्या एवेत्यर्थः ॥

५७. एवं भर्तारं निर्भर्त्स्य सनिर्वेदम् आकाशोक्तिमेवाह । भर्तारो यासां वशे आज्ञायां धन्याः कृतपुण्यास्तासां स्त्रीणां मातरो जनन्यः । न पुनस्त्वद्धर्वृकाया मम मातेत्यर्थः । तथा किं मात्रा अहं जनिता उत्पादिता । अयम् अभिसंधिः । यद्यहं तया नोत्पादिता स्यां तदा नैवं पराभवभाजनं स्याम् इति । तथा किं मातरः ।

ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा ।
कौमारी चर्ममुण्डा च कालसंकर्षणीति च ॥

इत्यष्टौ देवताविशेषाः । अथ वा ।

अमृताया ब्रह्माणी सिद्धिर्माहेश्वरी च कौमारी ।
वैष्णव्यथ वाराही चामुण्डा मातरः सप्त ॥

इत्येवं सप्त या मया महिताः पूजिताः । किल एतन्मातृपूजनं भर्तृवाल्लभ्याय कृतम् । तच्च नास्ति । तस्मात् तदपूजनमेव श्रेयः ।

५८. देवाः हरिहरब्रह्माणः पितरो मातृपित्राद्याः शरणम् । एवंविधदुःखदग्धाया मम त्राणं सन्तु । तथा भुवनत्रयकर्तः जगत्त्रयनिर्माणकर्तः स्रष्टः मां संहर । येन नैवैतस्माद् आधिर्भवतीत्यर्थः ॥

जामाउणो । "ऋतामुद०" [४४] इति ऋदन्तानाम् उत् वा । बहुवचनस्य व्यत्ययत्वाद् यथादर्शनं सामर्थ्यपि । परो भत्तारा । अस्यमौस्विति किम् । पिआ । पिअरा । पिअरं ॥

भत्तारो । भत्तारा । "आरः स्यादौ" [४५] इति आरः ॥

---

१ BC गिरौ मा°.

दे विन्नवेमि राया रायाणो देसु सव्वओ दिट्ठिं ।
उअ रायाणो के वीह के वि राया इह रमन्ते ॥ ५९ ॥
वाणारसीइ रण्णो कुरूण रायाउ अहिअमब्भु-छणो ।
रण्णो तिउरीए महुराए रायस्स य पयट्टो ॥ ६० ॥
हूणाण राइणा इह उअ रायाणो इमे पहु रमन्ते ।
अङ्गाणं रण्णा राइणो तह सगेण राएण ॥ ६१ ॥

माआओ । माआए । माअराउ । "आ अरा मातुः" [ ४६ ] इति बाहुलकात् जनन्यर्थस्य आ देवतार्थस्य तु अरा इत्यादेशौ ॥

पिअरा । "नाम्यरः" [ ४७ ] इत्यरः ॥

कत्ता । "आ सौ न वा" [ ४८ ] इति आः । पक्षे कत्तार ॥

५९–७७. एकोनविंशत्या महाकुलकम् । यस्मिन् काले जलेन पूर्णं शालमञ्जिकादिकर्णादिस्थानेभ्यः प्रपतन्नीरेण निभृतं यन्त्रगृहं धारागृहम् यस्मिन् काले [च] जलक्षणो वारिक्रीडा भूतः संवृत्तस्तस्मिन् काले नरेन्द्रस्य श्रीकुमारपालभूपालस्य दौवारिकेण इदं पूर्वोक्तं प्रतिपादितम् । तदेवाह ।

दे संबोधने । हे राजन् विज्ञपयामि । किं विज्ञपयसि । हे राजन् सर्वतो दृष्टिं देहि । समन्ताद् राजादीनां जलोक्षणम् ईक्षस्वेत्यर्थः । राजन्निति संबोधनपदं प्रतिक्रियम् अमेपि योज्यम् । ततस्तत्परं भूपं ज्ञात्वा आह । उअ पश्य राज्ञः । केपि राजानः इह अस्मिन् प्रदेशे रमन्ते । उअ पश्य राज्ञः । केपि राजान इह रमन्ते ॥

६०. वाराणस्याः काशे राज्ञः सकाशात् तथा कुरूणां राज्ञः सकाशाद् अधिकं गाढतरं यथा इति एवं त्रिपुर्याश्चेदिनगर्या राज्ञो मथुराया राज्ञश्च अभ्युक्षणः प्रवृत्तः ॥

६१. हे प्रभो उअ पश्य राज्ञः । हूणा देशविशेषाः । तेषां राज्ञा

१ D पूर्वोक्तं विज्ञपितं प्रति°.

परओ जदूण रण्णो परओ चेदीण राइणो तह य ।
राइम्मि अराअम्मि अ एगागारं जले कीला ॥ ६२ ॥
इह वारि-मज्जण-छणे राईणमराइणं च समभावो ।
रायं अराइणं तह कीलन्तं पिच्छ राईहिं ॥ ६३ ॥
राईहिन्तो राईसु जन्ति राईण मण-हरा विलया ।
डण्हिं रायाणेहिं उअ जल-कीला-पयट्टेहिं ॥ ६४ ॥
रण्णा अराइणा वि हु उच्छालिज्जन्ति नीर-लहरीओ ।
मगहाण राइणो कोसलाण रण्णो अ सविहम्मि ॥ ६५ ॥

सह इमे पुरोवर्तिनो राजान इह अत्र प्रदेशे रमन्ते । तथा उअ पश्य राज्ञः । अङ्गानां राज्ञा शकानां राज्ञा च सह राजानो रमन्ते ॥

६२. यदूनां यादवानां राज्ञः परतः परत्र देशे तथा चेदयो देशविशेषास्तेषां राज्ञः परतश्च राज्ञि अराज्ञि च तत्पत्न्यादौ एकाकारं प्रतिपत्तिभावाशङ्कारहितत्वेन निर्विशेषं जले क्रीडा अनयोरन्योन्यं नीरैरभ्युक्षणम् अस्ति । राज्ञ इत्यत्र परतस्तसन्तस्य योगे "प्रभृत्यन्यार्थ°" [हे° २. २. ७५] इति दिक्पञ्चमी । अतसन्तस्य तु योगे "रिरिष्टात्" [हे° २. २. ८२] इति षष्ठी ॥

६३. इह अत्र प्रदेशे वारिणा मज्जनं स्नानं तस्य क्षणः कालस्तस्मिन् राज्ञाम् अराज्ञां च पौरजनानां समभावः मिथो जलाघातात् तुल्यत्वम् । तथा इह राजानम् अराजानं च राजभिः सह क्रीडन्तं पश्य ॥

६४. उअ पश्य इदानीं सांप्रतं जलक्रीडायां प्रवृत्तैर्व्यापृतै राजभिः सह राजभ्यः राज्ञः सकाशाद् राज्ञां मनोहरा मनोज्ञाश्चित्तावर्जिका या वनिता वारविलासिन्यो राजसु यान्ति । राजमहिला एकान् राज्ञ उज्झित्वा अन्यान् उक्षितुम् उपगच्छन्तीत्यर्थः ॥

६५. मगधानां राज्ञः सकाशात् कोसलानां राज्ञः सविधे समीपे

को वि जुआ सजुआणो अप्पणिआ सह पिअं जले नेउं ।
रूमविअप्पाणेणं अतोससी अप्पणइआ वि ॥ ६६ ॥
सव्वे अन्ने वि निवा खिवन्ति धारा-हरम्मि सव्वस्सि ।
सव्वत्थ त्थी-लोए सव्वम्मि जलं तहन्नम्मि ॥ ६७ ॥
अन्नत्थ कुन्तला अन्नस्सि कुसुमाइँ अन्नहिं हारा ।
पिच्छ मयच्छि-जणे मव्वहिं पि रहसेण जल-रमिरे ॥ ६८ ॥
काहिं जाहिं ताहिं इत्थीए रमइ नेस राय-चड्डू ।
कीए जीए तीए वि विअड्ढाए निहिय-चित्तो ॥ ६९ ॥

कोसलानां राज्ञ. सकाशाद् मगधानां राज्ञ सविधे राज्ञा अराज्ञापि सु निश्चितं नीरस्य लहर्य. कल्लोला उच्छाल्यन्ते ।

६६. प्रियाम् अभीष्टां गणिकाम् आत्मना सह जले नीत्वा आत्मना रोपयित्वा सकोपां कृत्वा सयुवा तरुणमित्रपरिवृत. कोपि युवा आत्मनैव अतूतुपत् वचनवैचित्र्येण आवर्जयत् । अपि. एवार्थे ॥

६७. सर्वस्मिन समस्ते धारागृहे सर्वस्मिन् स्त्रीलोके तथा सर्वस्मिन् अन्यत्र मित्रादिषु सर्वे अन्येपि पूर्वोक्तेभ्योऽपरेपि नृपा जलं क्षिपन्ति उच्छालयन्ति ॥

६८. अन्यस्मिन् स्कन्धादिदेशे । विसंस्थुला इति भाव. । कुन्तला. केशपाशा. । अन्यस्मिन् कुसुमानि । अन्यस्मिन् हारा । इति रभसेन औत्सुक्येन जले रन्तरि रमणशीले सर्वस्मिन्नपि मृगाक्षिजने पश्य । इति ज्ञेयम ॥

६९ कस्यां यस्या तस्यामेव विदग्धायामेव कटाक्षादिन्यासे-निपुणस्त्रियां निहितचित्त न्यस्तमना सन् कस्या यस्या तस्याम । अविदग्धस्त्रियाम इत्यर्थ. । एप पुरोवर्ती राजरट्ठ न रमते । अपि: एवार्थे ॥

---

१ B °न्यासे.

एअस्सिं ठाणे जल-छणे इमस्सिं हवन्ति नक्खङ्का ।
सव्वेसिं अन्नेसिं जुआण जुअईण य पयासा ॥ ७० ॥
सव्वाणं अन्नाण वि जुआण जुअईण एत्थ हलवोलो ।
न हु कास तास रम्मो केसिं तेसिं न देइ दिहिं ॥ ७१ ॥
कास वि ताम सरिच्छा किंनर-नारीइ किंनरस्स तहा ।
गायन्ति इत्थ रमिरा वारिणि तरुणीउं तरुणा य ॥ ७२ ॥
कस्स वि तस्स जुआणस्स काइ ताए अ एत्थ जुअईएं ।
न हु दीसइ तणु-लट्ठी जा न सरोमञ्च-कञ्चुइआ ॥ ७३ ॥

७०. एतस्मिन् स्थाने यन्त्रगृहरूपे अस्मिन् जलोक्षणे सति सर्वेषां सर्वासां यूनां युवतीनां संबन्धिनो नखाङ्का नखक्षतानि अन्येषाम् अन्यासां यूनां युवतीना च प्रकाशाः अङ्गरागापगमात् स्वपरप्रकटा भवन्ति ॥

७१. अत्र जलकेलिकाले सर्वेषाम् अन्येषां यूनां सर्वासाम् अन्यासां युवतीनामपि संबन्धी । हलवोलो देश्यः कोलाहलार्थ. । ततः कोलाहलः हु निश्चितं केषां तेषां न रम्य' काम्यः । किं तु सर्वेषां श्रोत्रपुटैः पेय इत्यर्थः । केषां तेषा यूनां कासां तासां युवतीनां न धृतिं ददाति किं तु सर्वेषां हृदयम् आह्लादयतीति भाव. ॥

७२. तथा कस्या अपि तस्याः सर्वोत्कृष्टायाः किंनरनार्याः अमररमण्यास्तथा कस्यापि तस्य सर्वप्रसिद्धस्य किंनरस्य देवगायनस्य सदृशा रूपवेषनिनादादिना तुल्याः रन्त्र्यो रन्तारश्च क्रीडापरास्तरुण्यस्तरुणाश्च अत्र धारागृहे वारिणि गायन्ति गानं कुर्वन्ति ॥

७३. कस्यापि तस्य यूनः कस्यास्तस्याश्च युवत्यास्तनुयष्टिः अत्र यन्त्रगृहे हु निश्चितं यत्तदोर्नित्यसंबन्धात् सा न दृश्यते या न रोमाञ्चः पुलकः स एव तनुव्यापकत्वात् कञ्चुकः सह रोमाञ्चकञ्चुकेन

---

१ BC तरुणीइ. २ BC जुअईए. ३ BC गु.

पुं-सद्दो जास मणं जस्स य जल-केलि-काल-दुल्ललिओ।
किस्सा तिस्सा जिस्सा सो जुवईए अणुसरेण ॥ ७४ ॥
कीसे तीसे जीसे पणालिआए पलुट्टिअं नीरं।
कीए जीए तीए वि बाहिरं तं न जुअईए ॥ ७५ ॥
काहे वि नाहि-लोए काला वि न वा अमच्च-लोगम्मि।
कइआ वि न भू-लोए जल-जन्तं एरिसं आसि ॥ ७६ ॥

वर्तते सरोमाञ्चकञ्चुकिका। किं तु सर्वस्य शैत्यहर्षादिना अङ्गयष्टिः सपुलका अभूद् इति भावः ॥

७४. यस्य पुमूशब्दः धर्मादिपुरुषार्थासाधनात् पुमान् इति नाममात्रम् यस्य च मनः चित्तम्। सचेतन इत्यर्थः। जलकेलेः कालस्तत्र दुर्ललितः भोगवाञ्छातत्परः स कां यां तां युवतिम् अनुसरति। पञ्चशरशराघातभीतः स्त्रीमात्रस्यापि पृष्ठानुयायी भवतीति भाव.। "क्वचिद् द्वितीयादेः [३.१३४] इति द्वितीयायाः षष्ठी ॥

७५. कस्या यस्यास्तस्या. प्रणालिकायाः सकाशाद् यद् नीरं पर्यस्तं पतितं तत् कस्या यस्यास्तस्या अपि युवत्याः न बहिरभूत् किं तु सर्वस्यास्तद् अङ्गसङ्गम् आपेत्यर्थः।" क्वचिद् द्वितीयादेः" [३.१३४] इति पञ्चम्याः षष्ठी। पूर्वार्धे यच्छब्दो ज्ञेय. ॥

७६. कस्मिन्नपि काले न अहिलोके नागसद्मनि। कस्मिन्नपि काले नैव अमर्त्यलोके त्रिदशालये। कस्मिन्नपि काले न भूलोके पृथ्वीपृष्ठे जलयन्त्रम् ईदृशम् आसीत्। अवलोकनपरनिश्चलोकालक्षितसततविश्वतोमुखोच्छलितशुचिसुरभ्यमृतधाराधोरणीवहनाद् नैतत्समं बभूव ॥

राया। "राज्ञः"[४९]इति नलोपे अन्त्यस्य णो आत्वं वा। पक्षे रायाणो ॥

जाला जलेण पुन्नं जन्त-हरं जल छणो हुओ जाहे ।
दोवारिएण ताहे विन्नत्तमिमं नरिन्दस्स ॥ ७७ ॥

रायाणो । रण्णो । रण्णो । । "जस्शस्ङसिङसा णो" [५०] इति णो। पक्षे । राया । रायाउ । रायस्स ॥

राइणा । ' टो णा " [५१] इति णा । पक्षे रण्णा । राएण ॥

राइणा । राइणो । राइणो । राइम्मि । "इर्जस्य णोणाङौ" [५२ ] इति जस्य इ । पक्षे रायाणो । राएण । रण्णो । अराअम्मि ।

अराइण । अराइण । " इणम् अमामा " [५३] इति जस्य अमाम्भ्या सह इणम् । पक्षे राईण । राय ॥

राईहिं । राईहिन्तो । राईसु । राईण । "ईद्भिस्भ्यसाम्सुपि" [५४ ] इति जस्य ई । पक्षे रायाणेहिं इत्यादि ॥

रण्णा । रण्णो।"आजस्य°"[५५] इति टाङसिङस्सु णा णो इत्यादेशापन्नेषु अण् । पक्षे अराइणा । राइणो । सणाणोपु इति व्यावृत्ते रायाउ रायस्स राएण इति प्राग् [ ६०,६१ ] उक्तोदाहरणानि इह ज्ञेयानि ॥

सुआणो। "पुस्यन°"[५६]इति अन्नन्तस्य आण । पक्षे यथादर्शन"राज्ञ " [३ ४९] इत्यादिभि राजवत् कार्यम् । पक्षे जुआ ॥

अप्पणिआ । अप्पणइआ । "आत्मन°"[५७]इति टाया णिआ णइआ । पक्षे । अप्पाणेण ॥

सव्वे अन्ने । " अत सर्वादे °" [५८] इति सर्वादे अदन्ताजस डित् ए । जस इति किम् । सव्वस्सि ॥

सव्वस्स । सव्वम्मि । अन्नम्मि । अन्नत्थ । अन्नस्सि ।"ङ स्सिम्मित्थाः "[५९]॥ अन्नहिं । सव्वहिं । "न वानिदे°"[६०]इति हिं वा । बाहुल्कात् किंयत्तद्भ्य स्त्रियामपि । काहिं । जाहिं । ताहिं । पक्षे सव्वस्सि । सव्वत्थ । सव्वम्मि इत्यादि। स्त्रिया तु पक्षे कीए । जाए । तीए । इदमतद्वर्जन किम् । इमस्सि । एअस्सि ॥

सव्वसि । अन्नसि । "आमो डेसिं"।[६१]इति डेसिं । पक्षे सव्वाण । अन्नाण । बाहुल्कात् स्त्रियामपि । केसिं । तसिं ॥

जइआ गिम्हो पयट्टओ तइअ च्चिअ किर आसि पाउसो।
जाए ताला जल-च्छणे पत्तो अच्छि-वहं खणे तहिं ॥७८॥

कास। तास। "किंतद्भ्या डास." [६२] इति डासः। पक्षे केसिं। तेसिं॥

कास। तास। जास। "किंयत्तद्भ्यो ङस." [६३] इति डासः। पक्षे कस्स। तस्स। जस्स। बाहुलकात् किंतद्भ्याम् आकारान्ताभ्यामपि डासो वा। कास। तास। पक्षे काए। ताए॥

किस्सा। जिस्सा। तिस्सा। कीसे। जीसे। तीसे। "ईद्भ्य. स्सा से" [६४] इति स्सा से। पक्षे कीए। जीए। तीए॥

७८. तदा ग्रीष्मकाले तस्मिन् क्षणे ग्रीष्मप्रवृत्त्यनन्तरमेव जलक्षणे नानाजलयन्त्रादिधारासारादिभिर्जलोत्सवे जाते संपन्ने सति। किल इति संभाव्यते। यदा ग्रीष्मः प्रवृत्तस्तदैव प्रावृड् अक्षिपथं प्राप्ता समस्तजनप्रत्यक्षासीद् इति। अथ च यौगपद्येन ऋतुसंभवेन ग्रीष्मकाले प्रावृड् आसीद् इति भङ्ग्योक्तम्। उत्तरसर्गार्थसूचनमपि कृतम्। वैतालीयं छन्दः॥

काहे। काला। कइआ। जाला। जाहे। ताहे। जइआ। तइआ। ताला। "ङेर्हे°" [६५] इति आहे आला इति डितौ इआ च। पक्षे तहिं इत्यादि॥

इत्याचार्यश्रीहेमचन्द्रविरचितश्रीकुमारपालचरितप्राकृतद्व्याश्रयमहाकाव्यवृत्तौ चतुर्थः सर्गः समाप्तः॥

---

कम्हा जम्हा तम्हा वि वण-निउञ्जाउ तत्थ महमहिओ ।
काओ जाओ ताओ वि पक्खओ नीव-गन्धो तो ॥ १ ॥
गायन्ति किणो मोरा कीस पिगी गाइ जम्बु-फल-मत्ता ।
कम्हा वयं जिआमो तत्थ पउत्थेहिँ इअ लविअं ॥ २ ॥
इमिणा इमेण एएण एदिणा किण वि जेण तेण किर ।
सव्व-दिसाण मुहेणं महमहिओ मालई-गन्धो ॥ ३ ॥

१. अथ पञ्चचत्वारिंशता गाथाभिर्ग्रीष्मानन्तरभाविनीं प्रावृषं वर्णयति । ततो ग्रीष्मानन्तरं कस्माद् यस्मात् तस्मादपि । सर्वस्माद् इत्यर्थः । वननिकुञ्जात् कस्माद् यस्मात् तस्मादपि पक्षात् पार्श्वात् समीपदेशात् तत्र प्रावृषि नीपगन्धः धाराकदम्बसौरभ्यं प्रसृतः उच्छलितः ॥

कम्हा । जम्हा । तम्हा । "ङसेर्म्हा" [६६] । पक्षे काओ । जाओ । ताओ ॥ तो । "तदो डो." [६७] इति ङसेर्डो । पक्षे तम्हा ॥

२. कस्माद् मयूरा गायन्ति केकायन्ते । कस्मात् जम्बुफलैर्मत्ता पुष्टा मत्ती पिकी कोकिला गायति मधुरं कूजति । अथ यदि एतयोः शब्दितम् उल्लसति तदा कस्माद् वयं जीवाम. । एवं सति न प्राणितुं समर्था इति भावः । इति तत्र प्रावृषि प्रोषितैः पान्थैर्लपितं परस्परम् उक्तम् ॥

किणो । कीस । "किमो डिणोडीसौ" [६८] इति ङसेर्डिणोडीसौ । पक्षे कम्हा ॥

३. येन केनापि तेन लोकप्रसिद्धेन सर्वदिशां मुखेन । केन तेने-

वायं वाएण तिणा केणावि जिणा खु णेहि पहिएहि ।
परिमुक्को नीसासो भरिऊणं दइअ-रइ-केलिं ॥ ४ ॥
मालइ-लयाइ णाए णेण य पुव्वाणिलेण पहिआण ।
कत्तो वि को वि कत्थ वि अहूव-पुव्वो हुओ मोहो ॥५॥
अह विन्नत्तं आरामिएण पेच्छसु इमं वणोद्देसं ।
वल्लीहि इमाहि इमो वहल-दलाहिं मणो हरइ ॥ ६ ॥

त्याह। अनेनें प्राच्येन अनेनें अवाँच्येन एतेन प्रतीच्येन एतेन उदीच्येन कृत्वा। किर इति किलार्थे। स च आप्तवादे। मालतीगन्धो जातिपरिमलः प्रसृतः ॥

४. तेन केनापि वातेन वातं परिश्रान्तम् येन कृत्वा खु निश्चितं दयितारतिकेलिं प्रियासुरतक्रीडां स्मृत्वा निचिन्त्य तैः पथिकैः निःश्वासः परिमुक्तः। तथाविधपवनस्य उद्दीपनविभावत्वात्। बहिर्मुखाद् उष्णवातः परित्यक्तः ॥

इमिणा। इमेण। एएण। एदिणा। किणा। जेण। तेण। तिणा। वेण। जिणा॥ "इदमेतत्कियत्तद्भ्यष्टो डिणा" [६९] इति टाया टित् इणा वा॥

५. तया मालतीलतया तेन च पूर्वानिलेन पथिकानां कस्मादपि कुतश्चित्कारणात् कुत्रापि उद्यानोद्देशे कोप्यनिर्वचनीयः अभूतपूर्वः अ संजातचरो मोहः चित्तवैक्लव्यम् अभूत्। अपिः संदेहे ॥

णेहि। णाए। णेण। "तदो णः" [७०] इति स्यादौ णो लक्ष्यानुसारेण। कत्तो। को। कत्थ। "किमः कः" [७१] इति स्यादौ त्रतसोश्च कः॥

६. अथ प्रावृड्विजृम्भणानन्तरम् आरामिकेण उद्यानपालकेन विज्ञप्तं श्रीकुमारपालभूपालस्य पुरः प्राञ्जलि प्रतिपादितम्। किं तत् तदेवाह। इमं प्रत्यक्षवर्तिनं वनोद्देशं काननसमीपं पश्य प्रेक्षस्व वा सावधानं विलोकय। सामान्येन वनदर्शनविषयं विज्ञाप्य विशेषेण वर्षासंभवि-

---

१ BC इमेन. २ BC इमेन. ३ B अप्राच्येन, C अवाच्येन.

इमिआ पाउस-लच्छी कहइ अयं सिरिफलो वणे अस्सिं ।
समए इमस्सिमलि-किङ्किणी-रवं काम-छत्तं व ॥ ७ ॥
उअ अस्स जम्बु-तरुणो इमस्स दाडिमि-दुमस्स य फलाइं ।
एसु रमिज्जइ आहिं सुगीहि एहिं सुगेहिं च ॥ ८ ॥
इह उज्जाणे समए इमम्मि णं पिच्छ विहसियं नीवं ।
कुडयं च इमं णे अज्जुणे अ ताविच्छए अ इमे ॥ ९ ॥

वृक्षलतापत्रादिसंपदं वनगतां दर्शयन् विज्ञपयति । इमाभिः बहलदलाभिः सान्द्रपत्रपङ्क्तिभिः वल्लीभिः प्रततिभिः कृत्वा अयं वनोद्देशो मनो हरति हृदयम् आवर्जयति ॥

इमं । इमाहि । इमो । " इदम इमः " [७२] ॥

७. अस्मिन् समये सांप्रतम् अस्मिन् वने अयं श्रीफलः बिल्वः अलयः सौरभ्यलोभलग्ना भृङ्गास्त एव तदाकारत्वात् किङ्किण्यः क्षुद्रघण्टिकास्तेषां रवो यत्र तत् तथा एवंविधं कामच्छत्रमिव । तेन कन्दर्पस्य सच्छायत्वात् । इति इयं प्रावृड्लक्ष्मीः कथयति सामर्थ्यात्स्तनयित्नुस्तनितैः प्रतिपादयति ॥

इमिआ । अयं । "पुंस्त्रियोः°"[७३] । इति न वा अयं इमिआ । पक्षे इमो ॥

८. अस्य जम्बुतरोः अस्य दाडिमीद्रुमस्य च फलानि उअ पश्य । तथा एषु फलेषु आभिः शुकीभिः कीरीभिः एभिः शुकैश्च रम्यते परस्परं क्रीड्यते ॥

अस्सिं । अस्स । " स्सिंस्सयोरत्" [७४] । इमादेशोपि । इमस्सिं । इमस्स॥ बाहुलकाद् अन्यत्रापि । एसु । आहिं । एहिं ॥

९. अस्मिन् समये सांप्रतम् अस्मिन्नुद्याने इमं नीपं धाराकदम्बम् इमं च कुटजं च वत्सकाख्यवृक्षविशेषं विकसितं पुष्पितम् इमान् अर्जुनांश्च ककुभान् इमान् तापिच्छांश्च तमालान् । अर्थवशाद् वचनव्यत्ययः। इति विकसितान् पश्य ॥

१ B रिंति°; C रिंस°. २ BC °लच्छी.

लङ्गलि-वणेण णेणं फुल्लं जूही-वणेण य इमेण ।
कोहलि-वणेहिं णेहिं इमेहिं बिम्बी-वणेहिं च ॥ १० ॥
भू-भागमिणं तह नह-भागमिमं परिमलेण रुन्धन्तं ।
इदमिणामिणमो अ वणं कोआमइ केअईण उअ ॥ ११ ॥
उअ किं पि हु सुन्देरं पाउस-समयस्स से पयट्टस्स ।
सिं कुडयज्जुण-सज्जाण परिमलो इत्थ परिमिलिओ ॥१२॥

इह। "ङेर्मेन हः"[७५]। इदमः कृतेमादेशात् ङेः स्थाने मेन सह हः। पक्षे इमस्सिं।
इह । इमम्मि । " न त्थः " [ ७६ ] । इदमः ङेः त्थो न ॥

१०. एतेन लाङ्गलीनां शारदीलतानां वनेन अनेन यूथिकानां माधवीलतानां वनेन च एभिः कूष्माण्डीनाम ओषधिविशेषाणां वनैः एभिर्बिम्बीनां रक्तफलानां वनैश्च फुल्लम । एतानि लाङ्गल्यादिवनानि पुष्पितानीत्यर्थः ॥

णं । णे ॥ णेणं । [णेहिं]। "णोम्शस्टाभिसि"[७७]इति णः। पक्षे इमं ।
इमे । इमेण । इमेहिं ॥

११. इमं भूभागं पृथ्वीपृष्ठप्रदेशं तथा इमं नभोभागम आकाशदेशं परिमलेन सौरभ्येण रुन्धत् व्याप्नुवद् इदम इदम् इदं च । समस्तमपीति भावः । केतकीनां वनं विकसति पुष्पति उअ पश्य ॥

इणं । " अमेणं " [ ७८ ] । पक्षे इमं ॥
इदं । इणं । इणमो । " क्लीबे स्य° " [ ७९ ] इति सिअम्भ्यां सह इदं इणमो इणं च ॥

१२. प्रवृत्तस्य प्रसृतस्य । प्रौढिं प्राप्तस्येत्यर्थः । अस्य प्रावृट्समयस्य हु निश्चितम् आश्चर्यं वा किमपि लोकोत्तरं सौन्दर्यम अस्ति

1 D पुष्पति.

से चन्दणस्स तह मयनाभीए सिं च अगरु-कलिआण ।
कप्पूर-पारियाण य अहिअयरो मालई-गन्धो ॥ १३ ॥
चिञ्चणिअ-तरूणेमाणेआण य कुसुम-दंसणे हरिसो ।
कह वि न माइ इमस्सेअस्स य आराम-लोअस्स ॥ १४ ॥
ताण ललिआण ठाणं तस्साणङ्गस्स लङ्गली-कुसुमं ।
एआओ एत्ताहे एत्तो अ न एत्थ को लेइ ॥ १५ ॥

उअ पश्य । तथा अत्र प्रावृषि एषां कुटजार्जुनसर्जानां वत्सकककुभशालाख्यद्रुमाणां परिमलः परिमिलितः पिण्डीभूतः । तद्गन्धवैविक्त्यं न ज्ञायत इत्यर्थः ॥

किं । "किमः किं" [ ८० ] ॥

१३. अस्माद् उपलभ्यमानात् तस्मात् पूर्वम् उपलब्धात् एतस्मात् आसन्नोपलभ्यमानाद् वा चन्दनात् । एषाम् अत्यासन्नोपलभ्यमानपत्तनादिनगराणां तेषां लोकदृष्टमलयादिदेशानां वा चन्दनात् । तथा अस्यास्तस्या एतस्या वा मृगनाभेः आसां तासां वा पुरां मृगनाभेः । आभ्यस्ताभ्य एताभ्यश्च अगुरुकलिकाभ्यः । एभ्यस्तेभ्य एतेभ्यश्च कर्पूरपारिजातेभ्यः । सामर्थ्यात् चन्दनादिगन्धेभ्य इत्यर्थः । मालत्या जातैर्गन्धः परिमलः अधिकतरः । प्रावृट्काले हि मालत्या अतिरुचिरप्रचुरतरसौरभ्यास्पदत्वात् ॥ से चन्दणस्स इत्यादिषु "क्वचिद् द्वितीयादेः" [ ३.१३४ ] इति पञ्चम्याः षष्ठी ॥

१४. एषाम् एतेषां च चिञ्चणिकातरूणाम् अम्लिकावृक्षाणां कुसुमदर्शने सति अस्य एतस्य आरामलोकस्य उद्यानजनस्य कथमपि केनापि प्रकारेण हर्षो न माति अतिवर्तते ॥

१५. तस्य अनङ्गस्य तेषां ललितानां विलसितानां स्थानं पदं

---

१ So BC. २ BD °पारयाण. ३ B wants °मानपत्त° up to °गन्धेभ्यः in line 16. ४ CD °मलयजादि°. ५ C अभिवर्तते.

एअम्मि वणोद्देसे ईअम्मि तहा अयम्मि ऊसलइ ।
इणमिणमो एस फुडं सालो जूही सिलिन्धं च ॥ १६ ॥
कुडेयं दलइ तमेअं एसा सा जूहिआ महमहेइ ।
एसो सो कन्दलिओ वेणु-कुडङ्गो वि पडिसाहं ॥ १७ ॥

लाङ्गलीकुसुम शारदीलताप्रसूनम् एतस्मात् [ एतस्मात् ] एतस्माच्च । सर्वसमीपवर्तिदेशाद् इत्यर्थ । अत्र उद्याने को न लाति । परिमलविकासिसौन्दर्याद्यावर्जितचेता सर्वोपि एतद् गृह्णातीति भाव ॥

से। सिं। "वेदतदेत°" [८१] इत्यादिना इदम्तद्एतदा स्थाने ङस्आम्भ्यां सह यथासख्य सेसिमौ। पक्षे इमाण। एआण। इमस्स। एअस्स। ताण। तस्स ॥

एत्ताहे। एत्तो। "वैतदो°"। [८२] इति एतदो ङसे स्थाने त्तो त्ताहे। पक्षे एआओ ॥

एत्ताहे। एत्तो। एत्थ। "त्थे च तस्य लुक्" [८३] एतद त्थे परे त्तो त्ताहे एतयोश्च परयोस्तस्य लुक् ॥

१६ एतस्मिन्नेतस्मिन् एतस्मिन् समीपवर्तिनि वनोद्देशे एष साल अर्जुन । एषा यूथी मागधीलता । एतत् सिलिन्ध्र च भूमिस्फोट स्फुटम् उल्लसति पुष्पपत्रप्रवालादिभिर्वर्धते ॥

ईअम्मि। अयम्मि। "एरदी°" [८४] इति एतद एकारस्य ङ्यादेशे म्मौ अत् ईतौ। पक्षे एअम्मि ॥

१७ तद् एतत् पूर्वदृष्टम् अधुना अनुभूयमान कुटज दलति विकसति। एषा सा यूथिका महमहेइ इति गन्धेन प्रसरति। सौरभ्येण सर्वं व्याप्नोतीत्यर्थ । एष स वेणुकुडङ्गोपि वंशगहनमपि प्रतिशाख सर्वशाखासु कन्दलित सजातनवाङ्कुर ॥

---

१ B कुडल. २ C शिलिन्ध्र ३ BCD महमहेइत्ति for महमहेइ इति

अह लीला-पोक्खरिणी अह नीरं वड्डवास-मुक्कं च ।
अह पवण-वेवमाणो नवो अ कलमङ्कुरुक्केरो ॥ १८ ।
तापिच्छो बहल-दलो अमू अमू कमलिणी अ गय-कमला।
मत्तममुं भेग-कुलं अमूसु लीला-तलाईसु ॥ १९ ॥
निचुलाण अयम्मि वणे इअम्मि तह सल्लई-निउञ्जम्मि ।
साल वणम्मि अमुम्मि अ परिमल बहलो वहइ पवणो ॥२०॥

इण । इणमो । ऐस । "वैसेण°" [८५] इति एतद सिना सह एस इण इणमो । पक्षे एअ । एसा । एसो ॥

एसा । सा । एसो । सो । "तदश्च त सोऽक्लीबे" [८६] अक्लीबे । अक्लीब इति निम् । त एअ ॥

१८ असौ लीलापुष्करिणी क्रीडावापिका । वड्डवास इति देश्यो मेघार्थे । वड्डवासमुक्क मेघमुक्तम् अदो नीर च । पवनेन वेपमान कम्पमान नव अधुना उद्गत असौ कलमाङ्कुरोत्करश्च सुरभिशालि विशेषाङ्कुरपूरोऽस्ति ॥

१९ बहलदल सान्द्रच्छद असौ तापिच्छस्तमाल । तथा अमूषु लीलातडागिकासु क्रीडादीर्घिकासु गतानि प्रावृट्सद्भावाद् नष्टानि कमलानि यस्या सा तथा असौ कमलिनी च पद्मिनी मत्तम् अदो भेककुल दर्दुरवृन्द चास्ति ॥

अह १ । "वादसोद°" [८७] इति अदसो दस्य सौ हो वा । तस्मिश्च कृते अत सेर्डो" [३ २] "आत्" [हि० २.४] इत्यात् । क्लीबे स्वरान्मसे" [३.२५] इति मश्च न भवति । पक्षे उत्तरेण मु आदेश ॥

अमू । अमू । अमु । अमूसु । "मु स्यादौ" [८८] ॥

२० निचुलाना वञ्जुलानाम् अमुष्मिन् वने तथा अमुष्मिन्

---

* B एसा

वं तुं तुवं तुह तुमं आणेह नवाइँ नीव-कुसुमाइँ।
भे तुब्भे तुम्होय्हे तुय्हे तुज्झासणं देह ॥ २१ ॥

सल्लकीनिकुञ्जे गजप्रियागह्वरे अमुष्मिन् सालवने च परिमलबहलः सौरभनिचितः पवनो वहति वाति ॥

अयम्मि। इअम्मि। "म्मावयेऔ वा"[८९]। अदसः अन्त्यव्यञ्जनलुकि दकारान्तस्य स्थाने ङ्यादेशे म्मौ अय इअ। पक्षे अमुम्मि ॥

२१.–४५. अथ मालिनीपरस्परोक्तिप्रत्युक्तिनिवेदनेन उद्यानपालः श्रीकुमारपालभूपालं विज्ञपयति। पञ्चविंशत्या महाकुलकम् ॥

४५. पद्मावतीदेव्याः पूजने पूजानिमित्तं *त्रिसृभिः द्वाभ्यां द्वाभ्यां* गुणिते वे च ते द्वे च द्विगुणितद्वे ताभ्याम्। चतसृभिश्चेत्यर्थः। सखीभिः सह मालिन्यो मालायुक्ता अन्योन्यम् इति पूर्वोक्तं जल्पन्ति कथयन्ति ॥

तदेवाह। २१ सखि त्वम् ५। कोर्थः। सर्वा अपि यूयम्। नवानि नीपकुसुमानि आनयतेति। अत्र तंतुमादिभिः सह सखिशब्दस्य प्रत्येकं योगः। एवम् उत्तरत्रापि युष्मदादेशैः भे तुब्भे इत्यादिभिः अस्मदादेशैश्च अम्मि म्मीत्यादिभिश्च संबन्धः कार्यः। हे सख्यः यूयम् ६ आसनं पूजाविलोकनार्थागतोपवेशनार्थं विष्टरं दत्त वितरत ॥

---

१ B तुम्हेय्हे. २ B तुब्भा°. तुब्भ would give us one more form तुज्झ (III. 104). It would be far-fetched to suppose that तुब्भ is the correct form but that तुज्झ is not to be formed under III. 104 since out of तुम्ह and तुज्झ that are formable from तुब्भ, तुम्ह is expressly given in III. 91 so as to indicate that तुज्झ is not to be formed. Neither in the Vṛtti of the Sūtras nor in commentary on our text is there any indication of such a *Jnāpaka*. ज्झ and ब्भ closely resemble in the MSS. ३ BC कथयंति जल्पंति.

तुम्हे तुज्झे ण्हायह अहिणव-कल्हार-पत्तिआणयणे ।
तं तुं तुमं तुवं तुह तुमे तुए संपयं भणिमो ॥ २२ ॥
वो तुब्भे तुज्झोम्हे तुम्हे तुज्झे अ भे अ तुय्हे अ ।
भणिमो न किमिह ण्हाएह पल्लले दद्दुर-भएण ॥ २३ ॥
भे ते दि दे तइ तए तुमाइ तुमए तुमे तुमं तुमइ ।
किं नाणिज्जइ दुव्वा पउमावइ-देवि-पूयत्थं ॥ २४ ॥
भे तुब्भेहिँ अ तुज्झेहिँ अ तह तुम्हेहिँ तुलसिआ गिज्झा ।
उज्झेहिँ अ उम्हेहिँ अ तुय्हेहिँ तह य उय्हेहिँ ॥ २५ ॥

२२. हे हला यूय यूय स्नात स्नानं कुरुत । हे वयस्या त्वाम् ७ अभिनवा नूतना या कह्लारस्य वनस्पतिभेदस्य पत्रिका तस्या आनयने सांप्रत वय भणाम आदिशाम ॥

२३ हे आल्य युष्मान् ८ भणाम यथा इह पल्वले अल्पसरसि दर्दुरभयेन किं यूयं न स्नात । भेकभीतिं त्यक्त्वा स्नानम् आधत्तेत्यर्थ ॥

२४. हे सध्रीच्य त्वया ११ पद्मावतीदेव्या पूजार्थम् । किम् इति आक्षेपे । किं दूर्वा नानीयते । अपरव्यापारम् उत्सृज्य आनीयताम् इति भाव ॥

२५. हे सरय युष्माभि ८ तुलसिका । सुरसाख्य प्रसिद्धसुरभि- वनस्पतिभेद । ग्राह्या उपेया ॥

---

१ BC are both confused and wanting in this distich B merely has वो तुब्भे तुब्भोम्हे तुज्झे य, C वो तुब्भे तुब्भोम्हे तुम्हे भे अ ते थ तुम्हे य Bm reads the Sutra thus वो तुब्भे उज्झे तुय्हे उय्हे भे वासा (III. 93) where P substitutes तुब्भ for उज्झे. Metre in our text makes उज्झे impossible, and तुब्भ would give two more forms besides the right one, viz, तुज्झ and तुय्ह तुज्झ appears to be the correct reading and the Sutra should therefore read वो तुज्झ तुब्भे तुय्हे उय्हे भे वासा in Jain Mss ज्झ and व्भ are very similar २ That उज्झे° is the correct form and not उय्हे° as given by P ( III 95 ) is plain from the fact that we should thereby have one more form उय्होहिं which the grammar would not recognise See note २ on page 149 above

तुब्भत्तो तुम्हत्तो तुज्झत्तो केअडं तुहत्तो नि ।
आणाएमि तुमत्तो तहा तुनत्तो तउत्तो अ ॥ २६ ॥
तुय्ह ताहिन्तो तुब्भ य तुम्ह य तुज्झ य सरेण्ट पिकाडं ।
देवीइ ढोगणत्थं तोडामो दाडिमि फलाडं ॥ २७ ॥
तुब्भत्तो तुय्हत्तो उय्हत्तो तह य तह य उम्हत्तो ।
तुम्हत्तो तुज्झत्तो मुत्था धूनं करावेमि ॥ २८ ॥
तेड ते तुहं तुह तुमे तु तुम्ह तुव तुम तुमो तुमाइ इ ए ।
दे दि तहा निम्हरिअं किमिमं पह्लल-जले ण्हाणं ॥ २९ ॥

२६ हे हला त्वत् ७भवत्या भवत्या पार्श्वात् केतकम् आनयामि॥

२७ हे वयस्या त्वत् ५ भवत्या भवत्या सकाशाद् देव्या पद्मावत्या ढौकनार्थं बलिकरणार्थं सवृन्तानि च तानि पक्वानि च तानि तथा प्रसववन्धनपरिपाकयुक्तानि दाडिमीफलानि वय त्रोटयाम अवचयाम ॥

२८ हे आल्य युष्मत् ६ भवतीना भवतीना सकाशात् मुस्ताना गुन्द्राणा धूप कारयामि॥

२९ हे सखीन्य तव १५ किमिद पल्वलजले स्नान विस्मृतम् । येन न कृतम् इति भाव ॥

---

१ B reads the first halves of the two stanzas 29 and 30 thus;

तइ ते तुह तुमे तु तुम्ह तुव तुमो तुमाइ ई ए ।
दे हि   *   *   *
तुब्भ (? उब्भ) य तम्ह तुब्भ य तुम्भ य उम्ह तइ उम्ह तह तुज्झ
C तइ त तुह तुमे तु तुम्ह तुव तुम तुमो तुमइ ई ए ।
दे हि   *   *   *
तुब्भ य तम्हि य तुब्भ य उब्भ य तज्ज तइ तम्हु उम्हे ।
२ B यथा  ३ B तव ११

उब्भ य तुम्हं तुब्भ य उम्ह य उय्ह तह उज्झ तह तुज्झ ।
पुष्फञ्जलि-दाण कए नीवानचए किमालस्सं ॥ ३० ॥
भे तुब्भ तु वो तुब्भं तुब्भाण तुवाण तुम्ह तुम्हं च ।
तुम्हाण य पल्ललओ निम्हरिअं किं जलाणयणं ॥ ३१ ॥
तुज्झं तुज्झ तुमाणं तुमाण उम्हाण अवि अ उम्हाणं ।
मत्त-जलयायसुड्डावणेण जल-कलुसणं किमिमं ॥ ३२ ॥
तुब्भाणं तुज्झाणं तुहाण तुम्हाणमह तुवाणं च ।
तुज्झाण तुहाणमिमं मत्त-बलायासु किं रमणं ॥ ३३ ॥
तुमए तए तइ तुमे तुमाइ तुज्झम्मि तुम्मि तुब्भम्मि ।
तुम्हम्मि तुहम्मि तुवम्मि तुमम्मि भणाम जूहि-कए ॥३४॥

३०. हे सख्य तव ७ पुष्पाञ्जलिदानकृते कुसुमाञ्जलिविधान निमित्त किं नीपाना धाराकदम्बकुसुमानाम् अवचये चुण्टने आलस्यम् । न मन्दादरत्व कर्तुं युक्तम् इति भाव ॥

३१. हे हंहो युष्माक १० पल्वलाज्जलानयन किं विस्मृतम् ॥

३२ हे वयस्या युष्माक ६ मत्तजलवायसोड्डायनेन पुष्टमद्रु क्षेपणेन कृत्वा किमिद जलकलुषणम् । तत्समुत्थ लेष्टुक्षेपणादिना पानीयाविलीकरणं नोचितम् इति भाव ॥

३३. हे आल्य युष्माक ७ मत्तबलाकासु पुष्टसारिकासु किमिद रमणम् । पूजाप्रस्तावे न क्रीडितु युक्तम् इति भाव ॥

३४. हे मध्येन्य त्वा १२ यूथीकृते मागधीनिमित्त भणाम *आदिशाम । "द्वितीयातृतीययो सप्तमी" [३.१३५] इत्यनेन द्वितीयाया* सप्तमी ॥

---

१ B तुब्भे; C doubtful between तुब्भे and तुवत्त २ C तुम्हाण ३ B अम्हाणं. ४ D omits 33,34 and 35 ५ BC इल्य . ६ B युष्माकं ८

तुसु तुज्झेसु तुहेसु अ तुवेसु तुम्हेसु तुवसु तुब्भेसु ।
तुमसु तुमेसु अ तुहसु अ भिसिणि-दलाहरणमादिसिमो॥ ३५॥
तुब्भासु तुब्भसु तहा तुम्हसु तुम्हासु तह य तुज्झासु ।
तुज्झसु अ आइसामो नव-जम्बु-फलोवहारम्मि ॥ ३६ ॥
अम्मि म्मि अम्हि अहयं हमहं माल्रूर पल्लवे लेमि ।
अम्हम्हे अम्हो मो भे वयमवि लोद्ध-कुसुमाइं ॥ ३७ ॥
णे णं मि अम्मि अम्ह य मम्ह अहं मं ममं मिमं भणह ।
[1]अम्हे अम्हो णे अम्हामलय-फलेहि जइ कज्जं ॥ ३८ ॥
मे मि ममं ममए मइ ममाइ णे तह मए मयाइ तहा ।
अम्हाहि अम्ह अम्हे णे अम्हेहि अ जवा गेज्झा ॥ ३९ ॥

३५. हे सख्यः युष्मासु १० विसिनीदलाहरणं पद्मिनीपत्रानयनम् आदिशामः ॥

३६. हे हला. युष्मासु ६ नवजम्बुफलैः उपहारः पद्मावतीदेव्याः पूजनं तस्मिन् तन्निमित्तम् आदिशाम. ॥

३७. हे वयस्याः अहं ६ माल्रूरपल्लवान् निल्वकिसलयान् लामि गृह्णामि । हे सख्यः वयं ६ लोध्रकुसुमानि मार्जनप्रसूनानि । अर्थवशात् वचनव्यत्यय इति लामीत्येकवचनान्तमपि बहुवचनान्तम् लामः ॥

३८. हे आल्य. मां १० तथा अस्मान् ४ भणत यदि आमलकफलैः कार्यम् । एतद् भवत्प्रयोजनं वयमेव निष्पादयाम इति भावः ।

३९. हे सध्रीन्य. मया ९ तथा अस्माभिः ५ यवा ग्राह्या उपादेयाः ॥

---

१ B अम्हि. २ D °नान्तमिति लाम .

मज्झत्तो वि महत्तो तहा मइत्तो तहा ममत्तो त्ति ।
अम्हत्तो तह गिण्हेह कुडय-तरुणो पसूणाइं ॥ ४० ॥

मे मइ मम मह मज्झं महं तहा मज्झ अम्ह अम्हं च ।
णे णो अम्हे अम्हो चम्पय-कलिआउ गिज्झाओ ॥ ४१ ॥

अम्हाणं मज्झाणं ममाण ममाणं महाण य महाणं ।
अम्हाण य मज्झाणं हत्थे धव-पसवँ-दामाइं ॥ ४२ ॥

मि मइ ममाइ मए नि अ अम्हम्मि ममम्मि मे तह महम्मि ।
मज्झम्मि अ थल-नलिणी-कुसुमाहरणे निउत्तव्वं ॥ ४३ ॥

अम्हेसु ममेसु तहा महेसु मज्झेसु तह य अम्हासु ।
आदिसह सल्लई-तरु-नव-कुसुमाहरण-कम्मम्मि ॥ ४४ ॥

४० हे सख्य मत् ४ मम मम सकाशात् । तथा अस्मत् अस्मत् अस्माकम् अस्माकं सकाशाच्च कुटजतरोः प्रसूनानि यूयं गृहीत अङ्गीकुरुत ॥

४१ हे हला मम ९ तथा अस्माकं ७ चम्पककलिका हेमपुष्पककोरका ग्राह्याः ॥

४२. हे वयस्या अस्माकं ८ हस्ते धवप्रसवदामानि शालिविशेषप्रसूनस्रजः सन्ति ॥

४३. हे आर्य मयि ९ स्थलनलिनीकुसुमाहरणे स्थलपद्मिनीपद्मानयननिमित्तं नियोक्तव्यम् आदेष्टव्यम् ॥

४४ हे सख्य अस्मासु ५ सल्लकीतरुनवकुसुमाहरणकर्मणि

१ BC मज्झाणं २ B मज्झाण य for मज्झाणं ३ BC °पसव°.

इअ पउमावइ-देवीइ पूअणे मालिणीउ जम्पन्ति ।
तीहिं दोहिं दुगुणिअ-वेहिं च सहीहि अन्नोन्नं ॥ ४५ ॥
सरय-समयम्मि एत्थ य मिहुण-सरूवेण पिच्छ विलसन्ति ।
देव दुवे सारसया दुण्णि सुगा वेण्णि हंसा य ॥ ४६ ॥

गजप्रियापादपप्रसूनानयनरूपव्यापारनिमित्तं यूयम् आदिशत भणत । अत्र च महाकुलके तथाचापिशब्दाः सर्गी सर्गी प्रति समुच्चयद्योतकत्वेन नियोक्तव्याः[1] ॥

तथा अत्रैव च "युष्मदस्त तु तुवं°" [९०] इत्यादि "सुपि" [११७] इत्यन्तसूत्राणां तं तुं–तुवं इत्यादि-अम्ह मम-मह मज्झ इत्यन्तानि उदाहरणानि युष्मदस्मदोः सर्वविभक्तिसंबन्धे स्पष्टान्येव । नवरं सुपि एत्वविकल्पम् इच्छन्त्येके । तन्मते तुवसु तुमसु इत्यादि । तुब्भस्य आत्वमपि इच्छत्यन्यः । तेन तुब्भासु । तुम्हासु । तुज्झासु । अम्हस्य आत्वमपीच्छत्यन्यः । तेन अम्हासु इति विशेषः ॥

तीहिं । "त्रेस्ती तृतीयादौ" [११८] ॥

दोहिं । वेहिं । "द्वेर्दो वे" [११९] ॥

४६. प्रावृडनन्तरं शरत्संपदं दर्शयन् आरामिकः कुमारपालनृपं विज्ञपयति । हे देव महाराज अत्र च अस्मिन् पुनः शरत्समये द्वौ सारसश्च सारसी च सारसौ । "पुरुषः स्त्रिया" [है० ३.१] इति पुरुषशेषे । सारसौ लक्ष्मणौ । एवम् अग्रेपि । द्वौ शुकौ कीरौ द्वौ च हंसौ सितच्छदौ मिथुनस्वरूपेण स्त्रीपुंसयुग्मरूपेण पश्य विलसतः क्रीडां कुरुतः । द्वौ इति पश्येत्यपेक्षया द्वितीया । विलसत इत्यपेक्षया च प्रथमा । एवम् अग्रेपि पश्येत्यपेक्षया द्वितीया भ्राम्यतः उड्डयन्ते सन्तीति योगे प्रथमा ॥

---

1 B समुच्चयावद्योतकत्वेन; C समुच्चयावंद्योतकत्वेन. २ C त्रेस्तीस्तृ°.

दो दो कुररा वे वे अ खञ्जणा नह-यले उअ भमन्ते ।
पण्णाइँ तिवण्णस्स य उअ तिण्णि वि जुण्ण-नीलाइं ॥४७॥
उअ चउरो चत्तारो चत्तारि इमे नहम्मि उड्डन्ते ।
दंसेइ सारसे इअ मुद्धा दुण्हं वयंसीणं ॥ ४८ ॥
दुण्ह नयणाण सुहदा उअ माला पङ्कयाण तासुं च ।
कमल-सही हंस-वहू अली-वहू पिच्छ रममाणा ॥ ४९ ॥

४७. द्वौ द्वौ कुररौ उत्क्रोशाख्यपक्षिविशेषौ द्वौ द्वौ च खञ्जनौ खञ्जरीटौ नभस्तले उअ पश्य भ्राम्यतः । त्रिपर्णस्य च पलाशस्य त्रीण्यपि पर्णानि जीर्णान्यपि पुरातनप्रायाण्यपि नीलानि । समय-माहात्म्यात् हरितानि । सश्रीकाणीति यावत् । उअ पश्य सन्ति ।

दुवे । दोण्णि । वेण्णि । दो । दो । वे । वे । "दुवे दोण्णि वेण्णि च जस्शसा" [१२०] ॥ दुण्णि । विण्णि इति पाठे तु "ह्रस्वः संयोगे" [१. ८४] इति ह्रस्वः ॥

तिण्णि । "त्रेस्तिण्णि." [१२१] ॥

४८. मुग्धा अप्रगल्भा द्वयोर्वयस्ययोः सारसान् इति अनेन प्रकारेण दर्शयति । तमेवाह । चतुर इमान सारसान् नभसि उअ पश्य । उड्डयन्ते विचरन्ति ॥

चउरो । चत्तारो । चत्तारि । "चतुरश्चत्तारो चउरो चत्तारि" [१२२] ॥

४९. द्वयोर्नयनयोः सुखदाः पङ्कजानां मालाः स्रजः उअ पश्य सन्ति । तासु च कमलसख्यः सहचारित्वाद् वयस्याः । हंसवधूः वरटा । अलिवधूः भ्रमरी । रममाणाः पश्य सन्ति ॥

दोण्हं । दोण्ह । "संख्याया आमो ण्ह ण्हं" [१२३] ॥

अखलिअ-परिमल-रिद्धिं पहिआ दट्ठूण छंत्त-वण-तरुं।
वचन्ति मोह-निद्दं मरण-सहिं भरिअ अप्प-वहुं ॥ ५० ॥
हाहाण समा हेट्ठे तरूण सालीण गोविआ गन्ती।
खे जन्तीणं मिलिआण सुर-वहूणं गई खलइ ॥ ५१ ॥
अलि-मालाहि सणाहेहिँ वाण-कुसुमेहि परिमल-गुरूहिं।
दिट्ठेहि वि मुच्छिज्जइ दुहिणीहिं पन्थिअ-वहूहिं ॥ ५२ ॥
सारस-मालाहिन्तो सुग-मालाओ अ चडय-मालाउ।
अखलिअ-गईउ धेणूउ रक्खिमो सालि-वणमेअं ॥ ५३ ॥

५०. अस्खलितपरिमलऋद्धिं निरर्गलसौगन्ध्यसमृद्धिं सप्तपर्णतरुम् अयुक्छदवृक्षं दृष्ट्वा पथिका आत्मवधूं स्वभार्यां स्मृत्वा मरणसखीम् अचैतन्यादितत्कार्यकारित्वाद् वयस्यां मोहनिद्रां तमोगुणमयीं मूर्छानिद्रां व्रजन्ति आसादयन्ति ॥

५१. तरूणाम् अधः अधस्तनभागे हाहा देवगायनस्तेन तेषां वा समा। निरुपमनिनादोपेतत्वात्। शालीनां गोपिका गायन्ती गानं कुर्वती खे यान्तीनां व्रजन्तीनां मिलितानां क्रीडार्थं समुदितानां सुरवधूनां गतिं स्खलयति निषेधयति। दिवि गच्छन्त्योप्सरसः अत्याश्चर्यं गोपीगीतं श्रुत्वा तत्रैव तिष्ठन्तीत्यर्थः ॥

५२. अलिमालाभिः सनाथैः युक्तैः परिमलगुरुभिः सौरभाढ्यैः दृष्टैरपि बाणकुसुमैः असनप्रसूनैर्हेतुभूतैः दुःखिनीभिः स्मरज्वराभितापात् सकष्टाभिः। पन्थेन चरन्ति पान्थिकाः। पथिवत् पन्थशब्दोप्यस्ति। तेषां वध्वस्ताभिर्मूर्छ्यते मुह्यते ॥

५३. सारसा लक्ष्मणास्तेषां मालास्तस्यास्ताभ्यो वा। शुकाः कीरास्तेषां मालास्तस्यास्ताभ्यो वा। चटकाः कलविङ्कास्तेषां मालास्तस्यास्ताभ्यो वा। अस्खलिता अप्रतिहता। अनिवार्येति यावत्।

१ BC सत्त°.

कुङ्कुम-कलिआसुन्तो सुरहिस्स मिउस्स एन्त-पवणस्स ।
पसरो गिरिम्मि इह तह तरुम्मि सव्वं पि सुरहेइ ॥ ५४ ॥
फुल्ला मुणी इह तरू न मुणीउ तरूउ दूरगा भमरा ।
वाइ मुणीण तरूणं नव परिमल-मासलो वाऊ ॥ ५५ ॥
उद्दीविय दढ-मयरद्धयग्गिणो वाउणो फुरन्ति रया ।
मुणि-मालत्तो पङ्कय-मालाहिन्तो पराय-कणा ॥ ५६ ॥

एवभूता गतिर्यस्या यासा वा तस्यास्ताभ्यो वा धेनोर्धेनुभ्यश्च शालि वनम् एतद् वय रक्षाम तन्निवारणेन पालयाम । अत्र आरामिकेण स्वनियोग एव विज्ञप्त ॥

५४ कुङ्कुमकल्किाभ्य केसरकोरकसकाशाद् आयश्चासौ पवनश्च तस्य अत एव सुरभे मृदो सुखस्पर्शस्य प्रसर उज्जृम्भणम् इह शरदि गिरौ तथा तरौ सर्वमपि उपत्यकाधित्यकाप्रस्थादि मूलपत्रपुष्पादि सुरभयति स्वगन्धवासेन एकतानता नयति ॥

५५. इह शरदि मुनय अगस्त्यस्तरव फुल्ला पुष्पिता । अतो न मुनेस्तरो सकाशाद् दूरगा विरला । किं तु मकरन्दलोभात् समीपस्था इत्यर्थ । भ्रमरा । तथा मुनीना तरूणा नवपरिमलमासल नूतनसौरभसमृद्धो वायुर्वाति ॥

माला यमल वही दस-वहू इत्यादीनि मुणीउ तरूउ मुणीण तरूण इत्यन्तानि चोदाहरणानि "शेषेऽदन्तवत्" [१२४] इत्येतद्वृत्यनुसारेण स्वयम् उपयुज्य परिभावनीयानि ॥

५६ उद्दीपित वृद्धिं नीत दढो बल्वान् मकरध्वज एव सताप-त्वाद् अग्निर्यैस्ते तथा वायव स्फुरन्ति सर्वत परिभ्रमन्ति तथा उद्दीपितमकरध्वजाग्निर्यायो वायु प्राप्य । वायुयोगाद् इति यावत् ।

---

१ D यन् वदन् स वायो पवनध २ B वायुयोगादिति

चारुम्मि एत्थ पल्लल-वारिम्मि विसट्ट-पोम्म-मालाओ ।
दोहिँ चिअ नयणेहिँ होइ न तित्ती नियन्ताणं ॥ ५७ ॥
मच्च-गणस्स सुराण य अलं सु कामो हवेइ इह सरए ।
कामाय पवट्टन्ते बाणं कामस्स य घडन्ते ॥ ५८ ॥

रयाद् वेगेन मुनिमालायाः अगस्त्यिपुष्पपरंपरायाः मुनिमालाभ्यो वा सकाशात् [ तथा पङ्कजमालायाः पङ्कजमालाभ्यो वा सकाशात् ] परागकणा एतद्रजोलवाः स्फुरन्ति इतस्ततः उद्भ्रमन्ति ॥

अग्गिणो । वाउणो । " न दीर्घो णो " [ १२५ ] ॥

मालत्तो । मालाहिन्तो । "ङसेर्लुक्" [१२६]। भ्यसश्च हिः"[१२७]।न॥

५७. अत्र शरदि चारुणि पल्वलवारिणि । विसट्ट इति देश्यम् । विकसितानि यानि पद्मानि तेषां मालाः मालाभ्यो वा सकाशाद् द्वाभ्यामेव नयनाभ्यां पश्यतां वीक्षमाणानां न तृप्तिर्भवति । न तद्दर्शनवाञ्छा व्युपरमत इति भावः ॥ मालाओ इति पश्यताम् इति संबन्धविवक्षया द्वितीया । न भवतीति संबन्धविवक्षया तु पञ्चमी ।

चारुम्मि । वारिम्मि । " टेर्ङे " [ १२८ ] । न ॥

मालत्तो । मालाहिन्तो । मालाओ । " एत् " [ १२९ ] । न ॥

दोहिँ । नयणेहिँ । " द्विवचनस्य बहुवचनम् " [ १३० ] ॥

५८. कामाय स्मरार्थं प्रवर्तमानायाम् कामाय बाणः अमनः स एव विरहिमनोभेत्तृत्वाद् बाणः शरः तं घटमानायाम् उत्पादयन्त्याम् । " प्रावृट्शरत्तरणयः पुंसि " [ १. ३१ ] इति प्राकृते पुंस्त्वम् । इह शरदि बाणाख्यपुष्पेण कृत्वा मर्त्यगणाय सुरेभ्यश्च निमित्तं प्राप्तुं समर्थः कामो भवति ॥ शरदुपष्टम्भेन स्मरस्तान् स्ववशवर्तिनो विहितवान् इत्यर्थः ॥

---

१ D शरदि मर्त्यगणाय सुरेभ्यश्च सु निमित्तं अलं समर्थः.

मयणम्मि विरहिणीणं वहाइ रुट्ठम्मि को व न वहाय ।
जं ताण वहस्स हुअं फुल्लं सेहालिअ-वणं पि ॥ ५९ ॥
वन्दे भण्डीरस्स वि चिरस्स फुल्लम्मि जंम्मि अलि-ओली ।
नील-मणीण न इअरा वण-सिरि-पिट्ठीइ कवरि व्व ॥६०॥
एइ न पहिओ पासे इमस्स असणेसु भूसिअ-वणस्स ।
गन्ध-विसेहिं व तेहिं बीहन्तो नस्सए दूरे ॥ ६१ ॥

मच्च-गणस्स । सुराण । " चतुर्थ्याः षष्ठी " [ १३१ ] ॥
कामाय । कामस्स । " तादर्थ्यङेर्वा " [ १३२ ] ॥

५९. विरहिणीनां प्रोषितभर्तृकाणां वधाय विनाशाय कुपिते सति मदने । वा इवार्थे । स च संभावनायाम् । को वा क इव न वधाय न संभाव्यते । असौ यस्तासां वधाय न भवतीत्यर्थः । यत् तासां वधाय फुल्लं पुष्पितं शेफालिका निर्गुण्डी तस्या वनमपि भूतम् ॥

वहाइ । वहाय । वहस्स । " वधाड्डाइश्च वा " [ १३३ ] इति तादर्थ्यङेर्डित् आइः षष्ठी च वा ॥

६०. भण्डीरमपि वृक्षविशेषमपि चिरेण वर्णनीयसौरभादिगुणग्रामस्य असंख्यत्वाद् बहुकालेन वन्दे वर्णयामि । यस्मिन् फुल्ले पुष्पिते सति नीलमणिभ्यो न इतरा । अतिसादृश्यात् ता इवैवेत्यर्थः । अल्याली भ्रमरश्रेणिः वनश्रियः पृष्ठे कवरीव वेणिरिवास्ति ॥

भण्डीरस्स । चिरस्स । मणीण । पिट्ठीइ । " क्वचिद् द्वितीयादेः " [१३४] इति द्वितीयादीनां विभक्तीनां स्थाने षष्ठी ॥

६१. अस्य प्रत्यक्षवर्तिनः असनैः बीजकैः कृत्वा भूषितं च तद् वनं च तस्य पार्श्वे न एति नायाति । किं तु गन्ध एव मारणाद्

१ C संमि. २ D वधाय विनाशनिमित्तं रुष्टे कुपिते. ३ So BC. See P. ४ BD पृष्ठो, C पुष्ठो. ५ D न पथिक एति । किं तु.

इह कणय-पङ्कएहिं रत्तिं विज्जुज्जलेहि चउ-वीसं ।
अच्चिज्जन्ति जिणा तेण तेण कालेण सयराहं ॥ ६२ ॥
उज्जाण-मण्डवेसुं गरुआअइ लोहिआइ बिम्ब-फलं ।
गुरुआइ लोहिआअइ एव्वारु-फलं च कच्छेसु ॥ ६३ ॥

विषं येषां ते तथा विषवृक्षविशेषास्तेभ्य इव दूरं तेभ्योऽसनेभ्यो बिभ्यत् त्रस्यन् नश्यति ॥

पासे । असणेसु । "द्वितीयातृतीययोः सप्तमी" [ १३५ ] ॥

विसेहि । तेहिं । दूरे । "पञ्चम्यास्तृतीया च [ १३६ ] इति तृतीयासप्तम्यौ॥

६२. इह शरदि विद्युद्वद् उज्ज्वलैः कनकवर्णानि पङ्कजानि । "मयूरव्यंसकेत्यादयः"[है० ३.१) इतिवर्णशब्दलोपेन । कनकपङ्कजानि तैः कृत्वा रात्रौ तस्मिन् तस्मिन् काले रात्रेरेव आद्यन्तरूपे । सयराहं इति देश्यं शीघ्रार्थे । चतुर्विंशतिर्जिना अर्च्यन्ते पूज्यन्ते ॥

रत्तिं । "सप्तम्या द्वितीया" [ १३७ ] ॥

प्रथमार्थेऽपि द्वितीया दृश्यते । चउ-वीसं ॥ आर्षे तृतीयापि दृश्यते । तेण तेण कालेण ॥

६३. उद्यानमण्डपेषु बिम्बाख्यफलं गुरु इव आचरति । क्यङ् । गुरूयते । अगुरु गुरुं भवति गुरूयति । अलोहितं लोहितं च भवति "डाच् लोहितादिभ्यः षित्" [ है० ३.४ ] इति क्यङ् वा । गुरूयति । लोहितायति । तथा कच्छेषु जलप्रायेषु वाटेषु एर्वारुः कर्कटी तस्याः फलं च गुरूयते लोहितायते । एतद् एतच्च फलं समग्रस्वकारण-सामग्रीवशाद् महद् अरुणं च संपद्यत इति भावः ।

गरुआअइ । लोहिआइ । गरुआइ । लोहिआअइ । "क्यङोर्यलुक्" [ १३८ ] ॥

१ BC दूरं पथिकः तेभ्यो. २ D उज्ज्वलैः दीप्तैः. ३ C कंचन for कनक°. ४ D °लोपे. ५ D देश्य युगपत् ६ B चउव्वीसं. ७ BC गुरुर्भ°. ८ BC गुरु°. ९ B क्यङोर्लुक्.

वेवइ हसइ अ कुमुअं पवेवए विहसए अ कासं च ।
देव जलम्मि थलम्मि अ इह पेक्खसि पेक्खसे इत्थ ॥६४॥
न हससि न वोवहससे जइ ता भासेमि किं पि वन्नेमि ।
अमुणा सरेण हंसाण माणसं तं पि विम्हरिअं ॥ ६५ ॥
बहु वन्निउं न सक्कं जाइं दीसन्ति सरय-चिन्धाइं ।
चरिआइं विप्फुरन्ते इदो अ हेमन्त-सिसिराण ॥ ६६ ॥

६४. देव कुमारपाल भूपाल इह जले कुमुदम् । जातावेकवचनम् । कुमुदानीत्यर्थः । एवम् अन्यत्रापि । वेपते वायुवशाच्चलति । हसति । चन्द्रचन्द्रिकया विकसतीत्यर्थः । त्वं प्रेक्षसे । तथा देव अत्र स्थले कासं काशकुसुमं च प्रवेपते विहसति च त्वं प्रेक्षसे ॥

वेवइ हसइ । पवेवए विहसए । "त्यादीनाम्०" इति [१३९] इचेचौ ॥

६५. हे राजन् यदि त्वं न हससि जल्पाकोयम् इति न हास्यं करोषि । न वा उपहससि अहो अस्य वर्णनाचातुर्यम् इति न विप्लवयसि तदा भाषे भणामि किमपि किंचिच्च वर्णयामि श्लाघे । वर्णनमेवाह । अमुना परतो वर्तमानेन सरसा सहस्रलिङ्गाख्यसरोवरेण हंसानां तदपि सततस्वविलासास्पदत्वेन श्रेष्ठमपि मानसं देवसरो विस्मृतम् ॥

पेक्खसि पेक्खसे । हससि उवहससे । "द्वितीयस्य सि से" [१४०] ॥

६६. शरद्वर्णनम् उपसंहरन् हेमन्तशिशिरयोः सार्धैकविंशत्या गाथाभिर्वर्णनम् आह । यानि शरच्चिह्नानि घनात्ययलक्षणानि दृश्यन्ते वीक्ष्यन्ते तानि बहु प्रभूतं वर्णयितुं न शक्नोमि असंख्यत्वात् सामस्त्येन श्लाघयितुं न पारयामि । तथा इतश्च अस्मिन् उद्यानप्रदेशे पुनः हेमन्तशिशिरयोश्चरितानि तत्कालप्रभावप्रभविष्णुफलकण्ठस्वरह्रासकुन्दलतादिप्रसवपुष्पफलादिलक्षणविलसितानि विस्फुरन्ति उज्जृम्भन्ते ।

१ D प्रेक्षसि. २ BCD स्फुरन्ति.

विच्छुहिरे कलयण्ठा सूसइरे ताण तारिसो कण्ठो ।
दीसन्ते कुन्द-लयाउ निप्फुरन्तीह रोलम्बा ॥ ६७ ॥
इह पेक्खह पेक्खित्था इहेह पासेह इहावि पासित्था ।
लवली-लयाउ फलिणी लयाउ फद्धा इवाफुल्ला ॥ ६८ ॥
नोवदिसामो नो संदिसामु न य आदिसाम[3] किं तु इमा ।
गायन्ति इह सयं चिअ मिलिआ कसणेच्छु गोवीओ ॥६९॥

उभयोरपि लक्षणानाम् उभयत्रापि प्रायो दर्शनात् सममेव हेमन्त शिशिरयोर्वर्णनम् ॥

भासेमि । वन्नेमि । "तृतीयस्य मि" [ १४१ ] ॥ बाहुलकाद् मिवे[3] स्थानीयस्य मे इकारलोपश्च । सक्क ॥

६७. तान्येवाह । कलकण्ठा पुंस्कोकिला विक्षुभ्यन्ति मन्दायन्ते । तेषा कलकण्ठाना तादृशो मधुरध्वनिधुर्य कण्ठो गल शुष्यति परुषीभवति । कुन्दलतास्तु माघ्यशाखा पुनर्दृश्यन्ते सश्रीकतया सतर्षं जनैर्विलोक्यन्ते । इह आसु कुन्दलतासु रोलम्बा भ्रमरा विस्फुरन्ति मकरन्दपानलोभाद् उपरि स्फुरन्ति ॥

दीसन्ति । विप्फुरन्ते । विच्छुहिरे । दीसन्ते । विप्फुरन्ति । "बहुष्वाद्यस्य न्ति न्ते इरे" [ १४२ ] ॥ क्वचिद् इरे एकत्वेपि । सूसइरे ॥

६८ इह अस्मिन् प्रत्यक्षवर्तिनि प्रदेशे प्रेक्षध्वम् इह प्रेक्षध्वम् इह पश्यत इहापि यूय पश्यत । लवलीलता फलिनी श्यामा तस्या लताश्च स्पर्धादिवे अन्योन्यस्य न्यक्कृचिकीर्षयेव उत्फुल्ला कुसुमिता ॥

पेक्खह । पेक्खित्था । पासेह । पासेत्था । "मध्यमस्येत्थाहचौ" [१४३] ॥

७०. नोपदिशाम उपचिकीर्षया भणाम । न च सदिशाम अन्य-

---

१ D पासेह २ BC आदिसामु ३ BC मिव ४ So BC स्पर्धा इव would probably have explained the text more correctly Or have we to read फद्धाइ वाफुल्ला or फद्धाइ वोप्फुल्ला (व=इव)?
५ D पासेह

तुवरामो चणएसुं नव-सरिसव-कन्दलीसु तुवराम ।
तुवरामु मूलएसुं इअ कच्छ-त्थीण संरम्भो ॥ ७० ॥
हसए अ तुवरए तह लेइ अ पुंनामयाइँ एस जणो ।
कीस न हससि न तुवरसि न लेसि विलया इअ लवन्ति ॥७१

मुखेन कथयाम । न च आदिशाम नियोगं दद्म. तर्हि कथं गायन्ती-स्याह । किं तु अपि तु इह अनयोर्हेमन्तशिशिरकालयोः स्वयमेव कथित-मन्तरेणापि इमा. कृष्णाश्च ते इक्षवश्च कृष्णेक्षवस्तान् गोपायन्त इति "कर्मणोऽण्" [ हे० ५.१ ] इत्यणि कृष्णेक्षुगोप्य. इक्षुवाटरक्षिकाः स्त्रियो मिलिता एकत्रोपविष्टा गायन्ति मधुरध्वनिगीतं कुर्वन्ति ॥

७०. चणकेषु हरिमन्थकनिमित्तं वयं त्वरामहे उद्यमं कुर्म. । नवसर्षपकन्दलीषु नूतनसिद्धार्थककिशलयार्थं त्वरामहे । मूलकानि शाक-विशेषास्तन्निमित्तं च त्वरामहे । इति भणितरीत्या कच्छस्त्रीणाम् इक्षुचणकचिर्भटिकादिवाटकरक्षकावलानां संरम्भः उद्यमः ॥

उवदिसामो । संदिसामु । आदिसाम । तुवरामो । तुवराम । तुवरामु । "तृतीयस्य मोमुमा." [ १४४ ] ॥

७१. हे सखि एष जन इक्षुगोपिकादिस्त्रीलोकः हसति हास्यं करोति त्वरते च उद्यच्छते । तथा पुंनागानि सुरपर्णिकापुष्पाणि लाति च गृह्णाति । अतस्त्वं किं न हससि न त्वरसे न लासि । अप्रीतिकं मुक्त्वा एवत् कर्तुं तवापि युक्तम् इति भावः । इति एवं वनिता लपन्ति अन्योन्यम् आभाषन्ते ॥

हसए । तुवरए । एस्थाने तु सेपाठे । हससे तुवरसे । "अत एवैच्से" [ १४५ ] । अत इति किम् । लेइ । लेसि । एवकारः अत एच् से एवेति विपरीतावधारणनिषेधार्थः । तेन अकारान्तादपि इच् सिम सिद्धौ । हससि । तुवरसि । इच उदाहरणं तु हसइ इति शेषम् ॥

---

१ BCD चनदे°. २ BC °मंथनकनिमित्तं. ३ C अप्रीतिकं. ४ D एः स्थाने.

तं सि तहा एस म्हि अ अम्हत्थि जुव म्ह सम-गुण म्हो अ ।
गायामो इअ नव-लट्ठ-गोविआणं इदो वत्ता ॥ ७२ ॥
अत्थि अहं तुममेसा दरिसेइ न का वि कुसुम-विन्नाणं ।
इअ भणिअ का वि कारइ मुचुकुन्दाओ कुसुम-हरणं ॥७३॥
अलि-गुञ्जिअं करावइ मालिणि-हल्लप्फलं करावेइ ।
जाणावइ रइ-लीलं मयणं भावेइ पारत्ती ॥ ७४ ॥

७२. हे सखि त्वम् असि तथा एषा अहम् अस्मि वयं च स्मः । तथा युताः स्नेहाद् एकत्र मिलिता वयं स्मः । समगुणाः तारुण्यतारमधुरस्वरत्वादिना तुल्याश्च वयं स्मः । तथा वयं गायामः गीतं कुर्मः । इतः अस्मिन् हेमन्तशिशिरकाले नवलट्ठागोपिकानां नूत्नमहारजतरक्षकस्त्रीणाम् इति एवं वार्ता परस्परम् आलापाः ॥

तं सि । "सिनाऽस्तेः सिः" [ १४६ ] ॥

७३. हे सखि अहम् अस्मि । त्वम् असि । एषास्ति । परं न कापि कुसुमविज्ञानम् अद्भुतमाल्यादिग्रथनकलां दर्शयति प्रकटयति । इति एवं भणित्वा उक्त्वा [ कापि ] मुचुकुन्दात् वृक्षविशेषात् कुसुमाहरणं पुष्पमाल्यादिरचनाचातुर्यख्यापनाय पुष्पावचयं कारयति सखीपार्श्वाद् विधापयति ॥

म्हि । म्ह । म्हो । "मिमोमैर्म्हिम्होम्हा वा" [१४७] । पक्षे अम्हत्थि ।

अत्थि । "अत्थिस्त्यादिना" [१४८] इति च अस्तेस्त्यादिभिः सह अत्थि ।

७४. पारत्ती कुसुमविशेषः अलीनां गुञ्जितं कारयति मकरन्दपानदानेन हर्षकारित्वाद् रुतं विधापयति । मालिनीनाम् औत्सुक्यम् अपरपुष्पेभ्यः सौरभादिना विशिष्टत्वेन त्वरां कारयति । रतिलीलां

१ B अम्हि°. २ D °रजत°. ३ D स्वम माम्या°.

तोसविअ-तरुण-गोवं तोसिअ-हरिणं इदो अ जव-गोवी ।
खे भामइ गीअ-झुणिं पउत्थ-सत्थं भमाडेइ ॥ ७५ ॥
कारिअ-अलि-कुल-रोला मरुवय-माला करावि॑अच्छि-छणा ।
उअ कारीअइ जीए जयं करावीअइ अणङ्गो ॥ ७६ ॥
कुन्देहि कराविज्जइ तह कारिज्जइ नवेहि लवलेहि ।
जं ताण परिमल-वहो गन्धवहो मारइ पउत्थे ॥ ७७ ॥

सुरतक्रीडां ज्ञापयति बोधयति । कामिनः कारयतीत्यर्थः । यतो मदनं -भावयति । कामिषु भवन्तं भावयति प्रवर्तयति ॥

दरिसेइ । कारइ । करावइ । करावेइ । " णेरदेदावावे " [ १४९ ] इति णेः अत् एत् आव आवे । बाहुलकात् क्वचित् एत् न । जाणावइ । क्वचित् आवे न । भावेइ ॥

७५. इतश्च एतस्मिन् प्रदेशे तोषिततरुणगोपम् आवर्जितयुवजनं माधुर्यातिशयात् तोषितहरिणं गीतध्वनिं गेयस्वरं यवगोपिका खे भ्रमयति अतितारत्वाद् अम्बरे उल्लासयति प्रोषितसार्थं भ्रमयति च उद्दीपनविभावत्वाद् मोहयति ॥

तोसविअ । तोसिअ । " गुर्वादेरविर्वा " ॥ [ १५० ॥

भमाडेइ । भ्रमेराडो वा [ १५१ ] । पक्षे भामइ ॥

७६. कारितः विधापितः अलिकुलस्य । रोल इति देश्यः । कोलाहलो यया सा तथा कारिताक्षिक्षणा हरितवर्णत्वात् जनितनेत्रानन्दा मरुवकमाला अस्ति उअ पश्य । सास्ति यया अनङ्गः कार्यते कामिभिः क्रियमाणः अनङ्गो यया प्रयुज्यते । तथा अनङ्गो जयं कार्यते जगत् स्ववशं कुर्वन् प्रयुज्यते ॥

७७. यत् तेषां कुन्दलवलपुष्पाणां परिमलवहः सौरभधारको गन्धवहो वायुः प्रोषितान् पान्थान् मारयति मारणाख्यां दशमीम

१ BCD कराविअ. २ BC कुंदलवल°.

कारेइ कं न हरिसं कारावेइ अ न कं रउच्छाहं।
हासाविअ-जुव-गोवा जुव-गोवी कारिआणङ्गा ॥ ७८ ॥
जाणामि न हि न जाणामि नारङ्ग-फलाइँ वन्निउं देव।
वण-सिरि-वहूएँ घट्टंसुआइँ सोहन्ति एआइं ॥ ७९ ॥

अवस्थां प्रापयति तत् कुन्दैः पुष्पजातिविशेषैः कार्यते विधाप्यते। तथा तत् नवैर्लवलैः लवलीकुसुमै कार्यते। तत् कुन्दलवलकर्तृकं विधापनम् इति भावः। यत्तदोर्नित्याभिसंबन्धात् तद् इति पूर्वार्धे ज्ञेयम्। यत्तदी क्रियाविशेषणे ॥

कारिअ। कराविअ। कारीअइ। करावीअइ। [कराविज्जइ।] कारिज्जइ। "लुगावी क्तभावकर्मसु" [१५२] ॥

७८. हासिताः कुतुककुजल्पनेन स्मापिता युवगोपास्तरुणवल्लवा यया सा तथा कारितः मनोहरतया जनितः अनङ्गो यया सा तथा युवगोपी कं न हर्षं कारयति कं च न रतोत्साहं कारयति। अपि तु सर्वमपि दृप्तलोकं प्रमोदं च सुरतप्रयत्नं च कुर्वन्तं मनोभिप्रेतत्वात् प्रयुङ्क्ते इति भावः ॥

कारिज्जइ। मारइ। कारेइ। कारिआ। "अदेल्लुक्यादेरत आः" [१५३]। अदेल्लुकीति किम्। करावीअइ। आदेरिति किम्। कारिअ। इह अन्त्यस्य मा भूत्। आवेआव्यादेशयोरपि आदेरत आत्वम् इच्छन्ति। कारावेइ। हासाविअ॥

७९. हे देव कुमारपाल भूपाल नारङ्गफलानि वर्णयितुं श्लाघितुं जानामि अवगच्छामि। न हि न पुनर्न जानामि। वर्णनमेवाह। वनस्य श्रीरेव रागजननाद् वधूस्तस्या एतानि समीपवर्तिनारङ्ग-फलानि। घट्टंसुआइं इति देश्यः। प्रान्तस्यूतपट्टांशुकघटीनि कौसुम्भ-वस्त्राणीव शोभन्ते। उत्प्रेक्षाद्योतक इवशब्दो ज्ञेयः ॥

---

१ B कुंदललयलक°, C कुददलल्यक°. २ C विधान. ३ BC Omit आ. ४ BC कारा°.

पउमसिरि तं भणामो भणिमो तं लच्छि भणिमु तं गउरि।
भणमु तमिले भणाम य तं गङ्गे तं भणामु कमलच्छि ॥८०॥
तं सिरि भणमो भणिम तमुमे जए तं च भणम कुन्द-वणं।
उच्चिणह गहिअ-नामं लवन्ति विलया इअन्नोन्नं ॥ ८१ ॥
फलिणि-कुसुमं विहसिउं विहसेउं लोद्धं[1] पयट्टइ ।
हसिऊणं विहसेऊण निअ इमं अणहसेअव्वं ॥ ८२ ॥

जाणामि । जाणमि । "मो वा" [ १५४ ] इति अत आ वा ॥

८०. युग्मम् । वनिता परस्परप्रेमप्रतिबद्धा योषितो गृहीतनाम[2] नामग्रहणपूर्वकम् इति एवम् अन्योन्यं मिथो लपन्ति जल्पन्ति । तदेवाह । हे पद्मश्रीस्त्वा भवन्तीं[3] भणाम. आदिशाम. । हे लक्ष्मि त्वां भणामः । हे गौरि त्वा भणाम । हे इले त्वां भणाम । हे गङ्गे त्वां भणाम. । हे कमलाक्षि त्वा च भणाम ।

८१. तथा हे श्रीस्त्वा भणाम । हे उमे त्वां भणामः । हे जये त्वां च भणाम । किं तद् इत्याह । कुन्दवनम् उच्चिनुत । एतत्कुसुमानि गृह्णीतेति भाव. । अत्र युग्मे आद्या आर्यागीतिः ॥

भणामो । भणिमो । भणिमु । भणाम । भणामु । भणिम । "इच्च मोमुमे वा" [१५५] इति अत इत्त्व चाद् आत्व वा । पक्षे भणमु । भणमो । भणम ॥

गहिअ । "क्ते" [ १५६] ॥

८२. फलिनीकुसुमं प्रियङ्गुलतापुष्पं विहसितुं विकसितुं लोध्रं मार्जनाभ्यङ्गमूलं च विहसितुं प्रवर्तते । इदम् एतत् अहसनीयं श्लाघ्यम् । हसित्वा सपत्नीविषयम् स्मित्वा विहस्य च सशब्दहसनं कृत्वा हे सखि पश्य ॥

---

१ BC लोद्दं. २ BC °नामा ३ D भवन्ती.

गन्धेण अहसिअव्वं विहसेहिइ इममिमं च विहसिहिइ ।
विहसेइ इमं विहसइ इमं च वारुणि-वणे पुप्फं ॥ ८३ ॥
इह हसउ पहिअ-लोओ हसेउ उज्जाण-वालिआ-लोओ ।
विहसन्त-हिओ विहसेन्त-लोअणो फलिअ-बोरीहि ॥८४॥
जयइ अणङ्गो कह पहु सुणाउ विहसेज्ज जइ न पुंनागो ।
न य विहसेज्जा लवली होईअइ न वि अ कुन्देहि ॥ ८५ ॥

८३. गन्धेन अहसितव्यम् अनुपहसनीयम् । श्लाघ्यम् इति यावत् । इदम् एतत् प्रत्यक्षवर्ति विहसिष्यति विकचं भविष्यति । इदं च विहसिष्यति । तथा इदं विहसति । इदं च वारुणीवने पुष्पं विहसति ॥

विहसिउं । विहसेउ । हसिऊणं । विहसेऊण । अणहसेअव्वं । अहसिअव्वं । विहसेहिइ । विहसिहिइ । "एच्च क्त्वातुम्तव्यभविष्यत्सु" [१५७] इति एत् । चकाराद् इत्वं च ॥

८४. फलिताश्च ता बदर्यश्च ताभिर्हेतुभूताभिः विहसद्धृदय. तुष्यचेता विहसल्लोचनः विकसन्नयन. इह अस्मिन्नुद्यानप्रदेशे पथिकलोको हसतु स्मितपरो भवतु । वाटिकाऽविनाभूत उद्यानपालिकालोकश्च हसतु । यथा एताः संप्रत्युपभोगयोग्या एवं यूयमपि इत्यभिसंधिना उद्यानपालिकालोकमुद्दिश्य पथिकलोको हसतु । तदभिप्रायं च ज्ञात्वा उद्यानपालिकालोको[3] हसतु । हसने प्राप्तावसर इति भावः ॥ हसउ इति "प्रैषानुज्ञावसरे कृत्यपञ्चम्यौ" [हे० ५४] इत्यनेन अवसरे पञ्चमी ॥

८५. प्रभु कुमारपालस्वामी शृणोतु अवधारयतु । किम् । यदि पुंनागो[1] न विहसेत् विकसेत् न च लवली विहसेत् नापि च कुन्दैर्भूयते

१ D पुनामो. २ C संत्युप°. ३ D ° लोकश्च

होइज्जइ फलिणी-कुसुमेहि लहिज्जेज्ज केहि नच्छि-सुहं ।
केहि न लहिज्ज हरिसो जह दीसइ वुच्चइ तहेअ ॥ ८६ ॥
इअ राया उज्जाणं तं कासी नयण-गोअरं सव्वं ।
काही सउहे गमणं संझा-कम्मं च काहीअ ॥ ८७ ॥

उत्पद्यते तदा कथम् अनङ्गो जयति सर्वोत्कर्षेण वर्तते । पुंनागपुष्पादिभिरेव पुष्पशरः सर्वं स्ववशम् आयत्त इति भावः ॥

विहसेइ । विहसइ । हसउ । हसेउ । विहसन्त । विहसेन्त । "वर्तमानपञ्चमीशतृषु वा" [१५८] इति एर्वा ॥ कचिन्न । जयइ ॥ कचिद् आत्वमपि । सुणाउ ।
विहसेज्ज । विहसेज्जा । "ज्जा" [१५९] इति ए ॥

८६. भूयते उत्पद्यते फलिनीकुसुमैः । तथा तैः कृत्वा कैर्न अक्षिसुखं लभ्येत कैश्च न हर्षो लभ्येत । अपि तु सर्वैः फुल्लदक्षैः स हर्षैश्च भूयत इति यावत् । ननु न भविष्यत्येवम् इत्याह । यथा दृश्यते तथैव उच्यते । स्वानुभूतमेव भण्यत इति भाव ॥

होईअइ । होइज्जइ । लहिज्जेज्ज । "ईअ इज्जौ क्यस्य" [१६०] ॥
बाहुलकात् कचित् क्योपि विभाषया । लहिज्ज ॥

दीसइ । वुच्चइ । "दृशिवचेर्डीसडुच्चम्" [१६१] इति क्यस्य डीसडुच्चौ॥

८७. अथ उद्यानवर्णनम् उपसंहर्तुम् आह । इति पूर्वोक्तरीत्या तत् शासनदेवताप्रसादप्रादुर्भूतसर्वर्तुकपुष्पादिसमृद्धिसंपन्नम् उद्यानं राजा श्रीकुमारपालदेव सर्वम् अखिलं नयनगोचरं चकार । ददर्शेत्यर्थः । ततः सौधे गमनम् अकार्षीत् । तत्र च संध्याकर्म देवपूजादिकं च अकार्षीत् ॥

कासी । काही । काहीअ । "सी ही हीअ भूतार्थस्य" [१६२] इति भूतार्थविहितात्प्रत्ययादेः सी ही हीअ ॥

---

१ D आरामिकोक्त°. २ D °पालभूपालः.

अह पढिअं सूएहिं हुवीअ संझा अहेसि अत्थमणं ।
अम्ह खणो आसि तमो हुज्जइ ममि-उग्गमो हुज्ज ॥ ८८ ॥
होस्सामि दुही होहिमि दीणो होहामि असरणो इण्हिं ।
इअ चिन्तन्तो विरहं महइ रहङ्गो रहङ्गीए ॥ ८९ ॥
वायव्व-ण्हाण-ण्हाया होस्सामो होहिमो अणज्झयणा ।
होहामो कय गेड्डी-खेड्डा होस्साम विगय-भया ॥ ९० ॥

८८. अथ संध्याकर्मानन्तरं सूतैः मागधैः पठितं राज्ञः पुरः प्रतिपादितम् । किं तद् इत्याह । हे देव संध्या अभूत् अभवन् बभूव वा समपद्यत । अस्तमनं सूर्यस्य अस्ताचलेन तिरोधानम् अभूत् । अस्माकं क्षणः पठनाय अवसरः अभूत् । तथा तमः अन्धकारः अभूत् । शश्युद्गमः अभूत् । अधुना एतयोर्भवने प्राप्तः कालः ॥

हुवीअ । " व्यञ्जनाद् ईअः [ १६३ ] ॥

अहेसि । आसि । " तेनास्तेरास्यहेसी " [ १६४ ] ॥

हुज्जइ । हुज्ज ।[1] " ज्जात् सप्तम्या इर्वा " [१६५] इति सप्तम्यादेशात् ज्जात् पर इर्वा ॥

८९. अथ सूता एव संध्यादिकालभाविचक्रादिचेष्टितं सप्तदशभिर्गाथाभी राज्ञे निवेदयन्ति । इदानीं सांप्रतम् अहं दुःखी सकष्टो भविष्यामि भविता वा । एवम् अग्रेपि यत्र भविष्यन्ती दर्शिता तत्र श्वस्तन्यपि ज्ञेया । दीनः करुणापात्रं भविष्यामि । असरणो निर्नाथो भविष्यामि इति एवं चिन्तयन् पर्यालोचयन् रथाङ्गश्चक्रवाकः रथाङ्ग्या सह विरहं मिथो वियोगं महते तितिक्षते ॥

होहिमि । " भविष्यति हिरादिः "[१६६] इति भविष्यदर्थविहिते प्रत्यये परे तस्यैव आदिर्हिः प्रयोक्तव्यः ॥

९०. त्रिभिर्विशेषकम् । गवां धेनूनां संमुखम् आत्मीयात्मीय-

[1] BC हुज्जा.

होहाम मुक्क-मेरा होहिम गोवाल-गुज्जरी-गाया ।
होस्सामु मित्त-मिलिआ होहामु तहेअ कय-नट्टा ॥ ९१ ॥
होहिमु रमिरा भमिरा होहिस्सा निव्वुआ य होहित्था ।
इअ मुणि-वडुआ जम्पन्ति गावि-समुहं वणे जन्ता ॥ ९२ ॥

गव्यानयनार्थम् अभिमुखं वने यान्तो गच्छन्तः मुनिबटुकास्तापसकुमारका इति एवं कथयन्ति। किं तद् इत्याह । "वायव्यं तु गवीरजः" इति वचनाद् वायव्यस्नानं सुरभिखुरोत्खातपवनोल्लासितपांशुस्नानं तेन स्नाताः शुचयो भविष्यामः संपत्स्यामहे । अनध्ययनाः विकालत्वाद् पठनगुणनरहिता भविष्यामः । कुतः । गेड्डीति देश्यः । शङ्कुलाख्या वक्राग्रा यष्टिः तया आरामः क्रीडा येषां ते तथा भविष्यामः । विगतभयाः पठनगुणनायोग्यकाले रमणाद् उपाध्यायविगोपनोत्थदरवर्जिता भविष्यामः ॥

९१. मुक्का निर्जनत्वात् त्यक्ता मेरा मर्यादा यैस्ते तथा । निःशङ्का इत्यर्थः । भविष्यामः ॥ [1]गोपालगूर्जरीं भैरवरागप्रियां भाषाविशेषं गायन्ति ते गोपालगूर्जरीगायका भविष्यामः । "कचग० [१.१७७] इति कलुकि क्वचिद् एकत्वेऽपि सन्धौ दीर्घत्वे गाया इति रूपम् । मित्रमिलिताः क्रीडावसरत्वात् सखियुक्ता भविष्यामः । तथैवेति निपातसमुदायः समुच्चये । कृतनाट्याः रचितनर्तनाश्च भविष्यामः । मित्रैर्मिलित्वा नाट्यं करिष्याम इत्यर्थः ॥

९२. रन्तारः नानाक्रीडनकैः क्रीडनशीला भविष्यामः । भ्रमितारः इतस्ततः पर्यटनशीला भविष्यामः । एवं च निर्वृताश्च सुखिताश्च भविष्यामः ॥

होस्सामि । होहामि । होस्सामो । होहामो । होस्साम । होहाम । होस्सामु । होहामु । " मिमोमुमे स्सा हा न वा " । [१६७] पक्षे होहिमि । होहिमो । होहिम । होहिमु ॥

---

1 B omits from गोपाल...भविष्यामः.

होस्सं कय-नेवच्छा काहिमि कुरले णडालिअं काहं ।
दाहिमि वासं केसेसु दाहमलिअम्मि तिलयं च ॥ ९३ ॥
पिअ-संमुहं च गच्छं सोच्छं गीअं च हरिसओ रोच्छं ।
तारुन्न-फलं वेच्छं[1] देच्छं मोच्छं च संतावं ॥ ९४ ॥

होहिस्सा । होहित्था । "मोमुमाना हिस्सा हित्था" [ १६८ ] । पक्षे होस्सामो । होहिमो । होहामो इत्यादि ॥

९३–९७. पञ्चभि: कुलकम् । वासकसज्जा नायिकाविशेषः । तदुक्तम्

परिपाट्या फलर्थे[2] वा नवे प्रसव एव वा ।
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृता ॥ १ ॥
उचिते वासके स्त्रीणामृतुकालेपि वा बुधैः ।
द्वेष्याणामथ वेश्मा[3]नां कर्तव्यमुपसर्पणम् ॥ २ ॥

इति नयेन वासके रतिसंभोगलालसतया अङ्गरागादिना सज्जा वासकसज्जा इति चिन्तयन्ती परिभावयन्ती प्रियार्थं शय्या प्रियशय्या तां सज्जति प्रगुणीकरोति । चिन्तामेवाह । अहं कृतनेपथ्या विरचितवेषा भविष्यामि । कुरलान् केशविच्छित्तिविशेषान् करिष्यामि । ललाटिकां चन्दनादिभिर्ललाटमण्डनं करिष्यामि । केशेषु आर्द्रालकेषु वासं दन्दह्यमानकालागुरुकर्पूरादिसुरभिद्रव्यभावना दास्यामि । अलिके ललाटे तिलकं च कस्तूर्या विशेषं[4] दास्यामि निवेशयिष्यामि ॥

९४. प्रिये संमुखं गृहं प्रविशति प्रियाभ्युपगमनदानाद्यर्थं[5] तदभिमुखं च गमिष्यामि[6] । गीतं च प्रियेण गीयमानं श्रोष्यामि आकर्णयिष्यामि । हर्षतो रोदिष्यामि[7] । प्रियप्राप्तेरानन्दाश्रुवर्षं विधास्यामी-

१ BC देच्छ　२ So BC, should we not read फलेर्थे ? ३ C वे°, ४ D विशेषक. ५ B drops from here up to रोदिष्यामि in the commentary on the next couplet. ६ C लक्षण *for* °गमन°. ७ C रोदषि°.

छेच्छं भेच्छं नक्खेहि पिअं वोच्छं च तेण मोच्छं च ।
सोच्छिस्सं पिअयम-चाडुआइँ मोहं च गच्छिस्सं ॥ ९५ ॥
हसउ अ रमउ अ तुह सहि-अणो हसामु अ रमामु अ अहं पि ।
हससु अ रमसु अ तं पि हु इअ भणिही मह पिओ इण्हि ॥९६
सहिमेवं च भणिस्सं तम्बोलं देहि देसु पुप्फं च ।
इअ चिन्तन्ती नामय-मञ्जा सज्जेइ पिअ-सेज्जं ॥ ९७ ॥

त्यर्थः । तारुण्यफलं वेदिष्यामि । प्रियपरिरम्भादि अनुभविष्यामि । द्रक्ष्यामि प्रियं सप्रेम वीक्षिष्ये । संतापं च मनःखेदं मोक्ष्यामि यौवनमाननात् त्यक्ष्यामि ॥

९५. नखैः करजैः कृत्वा प्रियं छेत्स्यामि भेत्स्यामि । पाटयिष्यामीत्युभयार्थः । प्रियेण सह वक्ष्यामि रहसि वदिष्यामि । तेन प्रियेण सह भोक्ष्ये च संभोगसुखं मानयिष्यामि । प्रियतमस्य वल्लभस्य चाटुकानि प्रियवचनानि श्रोष्यामि । मोहं च रतिसातास्वादवशात् किंकर्तव्यतामूढता गमिष्यामि ॥

९६. तव सखीजनः हसतु च रमतां च । वहिर्गच्छत्वित्यर्थः । अहमपि हसामि च रमे च । त्वमपि हस रमस्व च । आवां तु इतो विजने सहासं रमणं कुर्वे इत्यर्थः । इति एवम् इदानीं मम प्रियो भणिष्यति विजनकरणार्थं विदग्धत्वाद् इत्थं प्रतिपादयिष्यति । अथ च प्रियोऽप्यागतो युष्मान् वहिः प्रेषयिष्यति तस्मात् स्वयमेव गच्छतेति वैदग्ध्येन सैव सखीर्वक्ति ॥

९७. ताम्बूलं पूगीफलनागवल्लीदलादिरूपं देहि मह्यं वितर । पुष्पं च । जातावेकवचनम् । कुसुमानि देहि । अहं च एवम् इति सखीं स्वपरिचारिकां प्रति भणिष्यामि ॥

---

१ BC पुप्फ. २ D प्रिय वक्ष्यामि वक्षसि धरिष्यामि. ३ BCD om. वि°. ४ C अथ च प्रियेऽप्यागतो युष्मान्वहि प्रेषयिष्यामि तस्मात्. ५ BCD प्रति for °परि°.

तं रमसु तं रमेज्जसु तुमं रमेज्जे रमिज्जहि तुमं पि ।
रम तं पि वयं रमिमो रमन्तु एआ रमह तुब्भे ॥ ९८ ॥
एआ हसन्तु तुम्हे हसह हसामो वयं पि नीसङ्कं ।
दइएण रमिज्ज इमा इमा रमेज्जा इमा रमइ ॥ ९९ ॥

होस्सं । "मेः स्सं" [ १६९ ] इति स्सं वा ॥

काहं । दाहं । "कृदो हं" [ १७० ] । पक्षे काहिमि । दाहिमि ॥

गच्छं । सोच्छं । रोच्छं । वेच्छं । दच्छं । मोच्छं । छेच्छं । भेच्छं । वोच्छं । मोच्छं । "श्रुगमि० [ १७१ ] इत्यादिना श्रादीनां सोच्छमादयः ॥

सोच्छिस्सं । गच्छिस्सं । "सोच्छादयः°"[१७२] इत्यादिना श्रादीनां स्थाने इजादिषु भविष्यदादेशेषु यथासंख्यं सोच्छादयः त एव आदेशा अन्त्यस्वराद्यवयववर्जा हिलुक् च वा ॥

हसउ । रमउ । हसामु । रमामु । हससु । रमसु । "दु सु मु विध्यादिष्वेकस्मिंस्त्रयाणाम्" [१७३] । विध्याद्यर्थोत्पन्नानाम् एकत्वेऽर्थे वर्तमानानां त्रयाणामपि त्रिकाणां यथासंख्यं दु सु मु आदेशाः ॥

देहि । देसु । "सोर्हिर्वा" [ १७४ ] इति पूर्वसूत्रविहितस्य सोर्हिर्वा ॥

९८–१०५. अष्टभिः कुलकम् । पांसुलानां स्वैरिणीनाम् इति एवं संप्रति आलापो मिथो भाषणम् । कोसावित्याह । हे सखि त्वं रमस्व । त्वं रमस्व । त्वं रमस्व । त्वमपि रमस्व । वयं रमामहे[1] । एता रमन्ताम् । यूयं रमध्वम् । सांप्रतं स्वेच्छया रमणे प्राप्तोऽवसर[2] इत्यर्थः ॥

९९. हे हले एता हसन्तु । यूयं हसत । वयमपि निःशङ्कं स्वैरित्वान्निर्भयं हसामः । तथा दयितेन सह इयं रमते । इयं रमते । इयं रमते ॥

---

१ BC रमामहे. २ BC प्राप्तेऽवस°.

एसा रमिहिइ एसा रमिज्ज एसा वि संपइ रमेज्जा ।[१]

एसा रमिज्ज एसा रमउ रमेज्जा य एसा वि ॥ १०० ॥

होज्जम्हाणं समओ होज्जा स-च्छन्द-गो जणो एस[२]।

ण हु होज्ज जइ पओसो ता एस जणो कहं होज्जा ॥१०१॥

होज्जइ अङ्ग-त्थम्भो सेओ होज्जाइ होज्ज रोमञ्चो ।

होज्जा कम्पो होइ अ वेवण्णं एँण्हिमभिसरणे ॥ १०२ ॥

१००. हे वयस्ये संप्रति इदानीम् एषा रमिष्यते स्वेच्छया क्रीडा करिष्यति । एषा रमिष्यते । एषापि रमिष्यते । तथा एषा रमताम् । [ एषा रमताम् । ] एषापि रमता च ॥

१०१. हे आलि अस्माकं समयः स्वेच्छया विचरणावसरः अभवत् । अभूत् बभूव । जज्ञे । अत एष जनो मल्लक्षण स्वच्छन्दग स्वेच्छाचारी भवति भवेत् भवतु भूयात् भविता भविष्यति । तथा हु निश्चितं यदि प्रदोषो रजनीमुख नाभविष्यत् तर्हि एष जन अस्मल्लक्षण कथम् अभविष्यत् । प्रदोषाभावे प्रियविरहवह्निना भस्मसात समपत्स्यतेत्यर्थः ॥

१०२. हे सध्रीचि इदानीम् अभिसरणे प्रियसमीपगमने अङ्गस्तम्भ हर्षादिवशाद् यत्नेपि अङ्गानियत्या भवति सपद्यते । स्वेद. श्रमादिना रोमजलस्रावो भवति । रोमाञ्च. प्रियदर्शनादे रोमहर्ष । कम्प मा मा कश्चिद् अभिसरन्तीं द्राक्षीद् इति भयादिना गात्रस्पन्दो भवति । वैवर्ण्यं सपत्न्यादिक्षेपादिना छायाविपर्यासश्च भवति । इदानीम् अस्मा कम् अभिसरणं कुर्वतीनाम् अङ्गस्तम्भादि वर्तत इत्यर्थ ॥

---

१ C होज्जो. २ BC एण्हि°. ३ C यथा ४ BC तथा ५ C मह्लक्षणः

होज्जहिइ इट्ठ-गोट्ठी होज्जा पिअ-मेलओ दिही होज्ज ।
होहिइ परमाणन्दो होज्जाहिइ चित्त-वीसामो ॥ १०३ ॥
होज्ज किलकिंचिअं विव्वोओ होज्जाउ विब्भमो होउ ।
मोट्टाइअं च होज्जउ होज्जा ललिअं च अम्हाणं ॥ १०४ ॥
होज्ज न संझा होज्जा न निसा तिमिरं पि जइ न होमाणं ।
ता होन्ता कह अम्हे इअ संपइ पंसुलालावो ॥ १०५ ॥

१०३. हे सखि इष्टगोष्ठी प्रेमवैदग्ध्यगर्भपरस्परालापपूर्वं प्रियेण सह एकत्र अवस्थानं भविष्यति । प्रियेण सह मेलक संबन्ध । अन्योन्याश्लेष इत्यर्थ. । भविष्यति । धृति. सतोषो भविष्यति । परमानन्द हर्षातिरेको भविष्यति । चित्तविश्राम विपक्षाभावाच्चेतोदार्ढ्यं च भविष्यति ॥

१०४. हञ्जे अस्माक किलकिंचित भवतु भवेद् वा संपद्यताम् । विव्वोको भवतु । विभ्रमो भवतु । मोट्टायितं भवतु । ललित च भवतु। किलकिंचितादिलक्षणानि च अमूनि । स्मितहसितरुदितभयरोषदुःखगर्वश्रमाभिलापसंकर किलकिंचितम् । इष्टेप्यवज्ञा विव्वोक । वागङ्गभूषणाना व्यत्यासो विभ्रम. । प्रियकथादौ तद्भावभावनोत्था चेष्टा मोट्टायितम् । मसृणोङ्गन्यासो ललितम् ॥

१०५. हे सखि संध्या यदि नाभविष्यत् निशा यदि नाभविष्यन् तिमिरमपि यदि नाभविष्यत् तदा कथं वयमभविष्याम । अभीष्टमेलक. संध्यादिसद्भाव एवास्माकं जीवितप्रद संपन्न इति भाव ॥

रमेज्जसु । रमेज्जे । रमिज्जहि । रम । "अत इज्जस्विज्जहीज्जे लुको वा"[१७५]। पक्षे रमसु ॥

---

१ BCD किलि°. २ C स्टे°.

विहसन्त-पहा-हसन्तओ अह उइओ चन्दो कुणन्तओ ।
उवहसमाणिं सरोरुहं विहसन्ति हसइं व कुमुइणिं ॥१०६॥

रमिमो । रम तु । रमइ । हसन्तु । हसइ । हसामो । "बहुषु न्तु ह मो" [ १७६ ] ॥

रमिज्ज ३ । रमेज्जा ३ । "वर्तमाना भविष्यन्त्योश्च ज्ज ज्जा वा" [ १७७ ] पक्षे रमइ । रमिहिइ । रमउ ॥ अन्ये त्वन्यासामपीच्छन्ति । होज्ज । होज्जा ॥

होज्जइ । होज्जाइ । होज्ज । होज्जा । होज्जाहिइ । होज्जा । होज्ज । होज्जाहिइ । होज्ज । होज्जाउ । होज्जउ । होज्जा । "मध्ये च स्वरान्ताद् वा" [ १७८ ] इति स्वरान्ताद्धातो प्रकृतिप्रत्यययोर्मध्ये चकाराद् वर्तमानाभविष्यन्तीविध्यादिप्रत्ययानां च ज्ज ज्जा वा । पक्षे होइ । होहिइ । होउ ॥

होज्ज । होज्जा । "क्रियातिपत्तेः" [ १७९ ] ॥

होमाण । होन्ता । "न्त-माणौ" [ १८० ] इति क्रियातिपत्ते न्तमाणौ ॥

१०६. अथ तिमिरविलसनानन्तरं सरोरुहं कमलम् उपहसन्तीम् । मर्शाकत्वात् तद् विद्रवयन्तीम् इत्यर्थः । विहसन्तीं विकासम् आसादयन्तीं हसन्तीमिव विकसद्विशददलत्वात् स्मयमानामिव कुमुदिनीं कैरविणीं कुर्वन् । विहसन्ती चासौ प्रभा च तया समुच्छलचन्द्रिकया कृत्या हसन्निव हसन् हास्यं कुर्वाणश्चन्द्र उदित उदयाचलचूलावलम्बिबिम्ब मयूख । अनेन उत्तरसर्गार्थसूचनम् ॥ मागधी छन्द । तल्लक्षण चेदम् । ओजे चौ युजि पचौ लदलदन्तौ मागधी ॥ विषमे चौ चतुर्मात्रौ द्वौ गणौ लदलदन्तौ । समे पचौ पण्मात्रचतुर्मात्रौ च लदलदन्तौ मागधी ॥

विहसन्त । हसन्तओ । कुणन्तओ । "शत्रानशः" [ १८१ ] इति प्रत्येकं न्तमाणौ ॥

---

१ D विकसन्ती २ BO शत्रानशः

उवहसमाणि । विहसन्ति । हसइ । " ई च स्त्रियाम् " [१८२]इति ई ।
चकारात् न्तमाणौ ॥

इत्याचार्यश्रीहेमचन्द्रप्राकृतद्याश्रये अष्टमस्याध्यायस्य उदाहरणप्रति-
पादनद्वारेण तृतीयः पादः संपूर्णः ॥

इत्याचार्यश्रीहेमचन्द्रविरचितश्रीकुमारपालचरितप्राकृतद्याश्रय-
महाकाव्यवृत्तौ पञ्चमः सर्गः समाप्तः ॥

---

वज्जर थक्को सि कहिं पज्जर कत्तो अ एण्हिमाओ सि।
जम्पसु विम्हरिआ हं सीससु अणुसासणिज्जो सि ॥ १ ॥
साहसु कीए रत्तो गोह्लसु अन्ना वि किं पिआ तुज्झं।
मह्लसु किमहं मुक्का चवसु मए किं कयं विलिअं ॥ २ ॥
पिसुणसु किं जुत्तमिणं उप्पालसु किं चिराउ दिट्ठो सि।
इअ भमर-गुञ्जिएहिं ससिणं पुच्छीअ कइरविणी ॥ ३ ॥

१ अथैकविंशत्या गाथाभिश्चन्द्रोदयं वर्णयति। त्रिभिर्विशेषकम्। भ्रमराणा गुञ्जितानि झंकाररवास्तै कृत्वा शशिनम् इति एवम् कैरविणी अपृच्छत्। अत्र उत्प्रेक्षार्थ इवशब्दो ज्ञेय.। ततश्चावार्तय-दिन। पृच्छामेवाह। हे प्रिय कथय प्रतिपादय कस्मिन् कुत्र प्रदेशे असि त्वं स्थित उषित। कथय कस्माच्च कुतः प्रदेशाद् इदानीम् आगतोसि। कथय विस्मृता गतानन्तं कालं स्मृतिपथं न गताहम्। येन चिरम अन्यत्रावस्थितोसीति भाव.। एतत् सर्वं कथय। येन अनुशासनीय इयच्चिरम् अन्यत्रावस्थानेन शिक्षणीयोसि ॥

२. कथय कस्यां कान्ताया रक्त' सानुरागः। किं क्षेपे। कथय किम् अन्यापि मद्व्यतिरिक्तापि तव प्रिया वल्लभा। कथय किम् अहं मुक्ता परित्यक्ता। कथय किं मया व्यलीकम् अपराधः कृतम् ॥

३. कथय किमिदं भवदनुष्ठितं युक्तम्। कथय किं चियत् प्रभूत-कालाद् दृष्टो वीक्षितोसि ॥

---

१ C इत्थ. २ C कम

णिव्वरही चक्क-वहू दूरत्थ-पिए जुगुच्छिअत्ताणा ।
झुणिअ-रवेहिँ अदुगुच्छिअं पि भिसिणिं दुगुन्छन्ती ॥४॥
न वुहुक्खिओ वि चक्को निय-छाहिँ निअवि णीरवीअ विसं ।
निअ-पक्ख-वीजणेहिँ वोज्जन्तो घरणि-सङ्काए ॥ ५ ॥

"इदितो वा" [१] इत्यधिकारसूत्रेण अग्रेतनसूत्रेषु ये इदितो धातवस्तेषा वक्ष्यमाणा आदेशा वा भवन्ति इति एतदुदाहरणानि तत्तत्सूत्रसंबन्धीन्येव ॥

वज्जरपज्जरेत्यादय आदेशाः "कथेर्वज्जर°" [२] इत्यादिसूत्रेण भवन्ति ॥

४. जुगुप्सितः प्रियविप्रयोगेपि अवस्थानाद् निन्दितः आत्मा यया सा । तथा जुगुप्सिताः दैन्यसूचनाद् अप्रशस्यास्ते च ते रवाश्च तैः कृत्वा अजुगुप्सितामपि स्वस्य लीलागृहत्वेन अनिन्द्यामपि बिसिनीं पद्मिनीं जुगुप्समाना विकत्थमाना चक्रवधूश्चक्रवाकवल्लभा दूरस्थः अनिकटवर्ती स चासौ प्रियश्च रथाङ्गस्तस्मिन् दुःखं कथयामास ॥

णिव्वरही । "दुःखे णिव्वरः" [३] दुःखविषयस्य कथेर्णिव्वरो वा ॥

झुणिअ । अदुगुच्छिअं । दुगुन्छन्ती । जुगुप्सेर्झुण-दुगुच्छ दुगुन्छाः [४] । पक्षे जुगुच्छिअ ॥

५. निजच्छायां दृष्ट्वा निजच्छायामेव गृहिणीशङ्कया प्रियाभ्रमेण निजपक्षावेव व्यजने संतापापहरणात् तालवृन्ते ताभ्यां कृत्वा वीजयन् सन् बुभुक्षितोपि बुभुक्षाक्रान्तोपि चक्रः कोकः न विसं मृणालम् अबुभुक्षत प्रियासंगमसुखनिमग्नतया न भोक्तुम् ऐच्छत् । न कवलीचकारेति भावः ॥

वुहुक्खिओ । णीरवीअ ॥ वीजणेहिँ । वोज्जन्तो । "बुभुक्षि-वीज्योर्णीरव-वोज्जौ" [५] ॥

---

१ B नियवि. २ B om. ते रवाश्च. ३ B वहु; C वहु°.

गायन्ता सज्झायं झायन्ता धम्म-झाणमकलङ्कं ।
जाणन्ता मुणिअव्वं मुणिणो आवस्सए लग्गा ॥ ६ ॥
दिण-ताव-उद्धुमाओ सद्दहिउं दाह-पसमिणिं जुण्हं ।
को अमय-पिअणिज्जं अच्छीहि न घोट्टिउं लग्गो ॥ ७ ॥
पट्टीअ चन्दिम-रसं चन्दिम-रस-डल्लिरं चओर-कुलं ।
पिअइ म्ह अलि-कुलमणोरुम्मिअ-सेहालिअ-परायं ॥ ८ ॥

६. स्वाध्यायं गायन्तः मधुरध्वनिना पूर्वपठितस्वाध्यायपरावर्तनं कुर्वन्तः । अकलङ्कम् आर्तरौद्रपरिणामपरिहारान्निर्दोषं धर्मध्यानं शुभाध्यवसायविशेषं ध्यायन्तः अभ्यस्यन्तः । ज्ञातव्यं जीवाजीवादितत्त्वनवकं बोद्धव्यं जानन्तः अर्हत्प्रणीतप्रकारेण अवगच्छन्तः आवश्यकम् अवश्यकृत्यं सामायिकादिधर्मानुष्ठानं तस्मिन् मुनयः साधवो लग्नाः व्यापृताः ॥

गायन्ता । झायन्ता । "ध्या गोर्झा-गौ" [ ६ ] ॥

जाणन्ता । मुणिअव्वं । "ज्ञो जाण-मुणौ" [ ७ ] ॥

७. दाहप्रशमिनीं[1] वपुःसंतापनिर्वापजननीम् अमृतवत् पानीयां पातव्यां ज्योत्स्नां श्रद्धाय निश्चित्य । तापः देदीप्यमानमार्तण्डमण्डलोष्मा । तेन उद्ध्मातः संतापितः सन् कः अक्षिभ्यां कृत्वा न पातुं लग्नः अपि तु सर्वोपि संतापिताङ्गः सन् चन्द्रिकां सतर्षम् ईक्षितुं प्रवृत्त इति भावः ॥

उद्धुमाओ । "उदो ध्मो धुमा [ ८ ] ॥

सद्दहिउं । "श्रदो धो दहः ॥ [ ९ ] ॥

८. चन्द्रिकारसं पिबतीत्येवंशीलं चन्द्रिकारसपातृ ज्योत्स्नाद्रवपानशीलं चकोराः ज्योत्स्नाप्रियास्तेषां कुलं निकुरम्बं कर्तृ चन्द्रिका-

१ BC °पसमिणिं २ C °शमनीं. ३ D गतमाङ्गः. ४ B drops from here upto दहः in the next line.

पवणेणोव्वाय-विलेवणाउ वसुअन्त-सम-जला कुलडा ।
उद्घन्ते ससुर-जणे ओहीरन्ते पिए य गया ॥ ९ ॥
निद्दायन्तं कमलं भमरो नाइग्घिउं पि ओच्छरिओ ।
अग्घायन्तो कुमुअं अब्भुत्तन्तो व्व मयरन्दे ॥ १० ॥
न्हाउं उदय-ट्ठिअ-ससि-संखायाथक्क-जुण्ह-जल-वरिसे ।
निअ-ठाणे चिट्ठन्तो वि को न सुहिओ निरप्पीअ ॥ ११ ॥

रसम् अपिबत् । तथा अलिकुलं कर्तृ । अनुद्धानः सरसो यः शेफालिकापरागः निर्गुण्डीपुष्परजः तं पिबति स्म ॥

पिज्जणिज्जं । घोट्टिउं । पट्टीअ । डल्लिरं । पिअइ । "पिबेः पिज्ज-डल्ल-पट्ट घोट्टाः ।" [ १० ] ॥

९. पवनेन उद्धानं शुष्कं विलेपनं यासां तास्तथा । उद्धात् शुष्यत् श्रमजलं साशङ्कगमनखेदोद्भवघर्माम्बु यासां तास्तथा कुलटाः स्वैरिण्यः श्वशुरजने पतिपित्रादिके निद्राति स्वपति सति प्रिये च निद्राति सति गताः विटपार्श्वं प्राप्ताः ॥

अणोवम्मिअ । उव्वाय । वसुअन्त । "उद्वाकेरोव्वा वसुआ" [११] ॥

१०. निद्रात् मुकुलीभवत् कमलम् आघ्रातुमपि आस्तां स्थातुं शिङ्घितुमपि भ्रमरो नावसृतः उपस्थितः । अत्रोत्प्रेक्ष्यते । आजिघ्रन् कुमुदं मकरन्दे तद्रसे स्नात् इव स्नानव्याप्टत इव ॥

उङ्घन्ते । ओहीरन्ते । निद्दायन्तं । " निद्राकेरोहीरोङ्घौ " [ १२ ] ॥
आइग्घिउं । अग्घायन्तो । " आघ्रेराइग्घः " [ १३ ] ॥

११. उदयस्थितः उदयशिखरिशिखरारूढः स चासौ शशी च तस्य संस्त्याना सान्द्रा अस्थिता सर्वत्रप्रसरणशीला यासौ ज्योत्स्ना चन्द्रिका सैव संतापापहरणाज्जलं तस्य वर्षो निरन्तरं निपात-

१ C कुडला. २ B उघंते; C ओघते. ३ BC उघते. ४ B °शिखर°.

उदयुंद्विअस्स ससिणो समुद्दोकुकुरिअ-किंनरीहि कओ ।
अमिलाण-पारिजायापव्वाइअ-कप्प-कुसुमग्घो ॥ १२ ॥
वाय-मुह-विहिअ-कमलो निम्मविआझिज्जमाण-कुमुअ-सिरी।
निम्माणिअ-हरिसमणिज्झरन्त-रुइ-णुमिअ-सव्व-दिसो ॥१३

रतस्मिन स्नात्वा अङ्गं धौत्वा निजस्थाने स्वावासे स्थितोपि सुखसाधन-विषयप्रयत्नरहितोपि को न मुखितस्तस्थौ । अपि तु सर्वोपि निर्वृतो जात इति भावः ॥

अब्भुत्तन्तो । न्हाउ । स्नातेरब्भुत्तः " [ १४ ]

संखाय । " समः स्त्यः खा " [ १५ ] ॥

अथक । ठाणे । चिट्ठन्तो । निरप्पीअ । "स्थष्ठा थक-चिट्ठ-निरप्पाः "[१६]॥ बाहुलकात् क्वचिन्न । थिअ ॥

१२. उदयोत्थितस्य उदयाचले प्राप्तोद्गमस्य शशिनः अम्लानानि निरसितानि यानि पारिजातानि पारिजातप्रसूतानि अम्लानानि कल्पस्य कल्पद्रुमस्य कुसुमानि च । तेषाम् अर्घः अञ्जलिना क्षेपः संमुखोत्थिता भक्तिवशाद् अभिमुखीभूताः या किंनर्यः किंपुरुषाङ्गनास्ताभिः कृतः ॥

उद्विअस्स । उक्कुरिअ । " उदघ-कुक्कुरौ [ १७ ] ॥

१३–२१. नवभिः कुलकम् । तं गगनतलं शशी आरूढः अध्या-सीनः । एवंभूत इत्यादि । म्लानमुखानि विच्छायप्राणि विहितानि कमलानि येन स तथा । निर्मिता कल्मषा अक्षीयमाणा अध्रश्यमाना कुमुदश्रीर्येन स तथा । निर्मितः दर्पो यत्रेति छादनक्रियाविशेषणम् । अक्षयन्ती क्षामम अनुपगच्छन्ती या रुचिर्ज्योत्स्ना तया छादिता व्याप्ता दिशो येन स तथा ॥

---

१ BO उदय°. २ O °रर. ३ B om. पारिजातानि. ४ BOD om. उ°.

नूमिअ-गयणो सन्नुमिअ-महि-अलो ढक्किओडु-पह-पसरो ।
ओम्बालिअ-दीव-रुई पच्चालिअ-माणिणी-माणो ॥ १४ ॥
छाइअ-जणच्छि-पसरं तम-पुञ्जं सव्वओ णिहोडन्तो ।
अणिवारिअ-पह-पसरो पाडिअ-दूमिअ-पउत्थ-कुलो ॥१५॥
किरणेहिँ खं दुमन्तो धवलण-कुचय-सिरिं तुलन्तेहि ।
ओहामन्तो अमओलुण्डिर-नव-रुप्पमय-कुम्भं ॥ १६ ॥
जलमुल्लुण्डावन्तो ससि-कन्ताउ अमयं विरेअन्तो ।
पल्हत्थाविअ-गुज्झो रइ-वावड-मिहुण-हिअआओ ॥ १७ ॥

१४. छादितं कान्त्या व्याप्तं गगनं येन स तथा । छादितमहीतलः रोचिरावृतपृथ्वीपृष्ठः । छादितोडुप्रभाप्रसरः तिरोहितनक्षत्रद्युतिविस्तारः । छादितदीपरुचिः अपह्नुतप्रदीपप्रभः । छादितः रणरणकजननाद् गोपितः मानिनीमानो[3] येन स तथा ॥

१५. छादितजनाक्षिप्रसरं निरुद्धलोकलोचनव्यापारं तमःपुञ्जं ध्वान्तस्तोमं सर्वतः समन्तात् निवारयन् निषेधन् निपातयन् विनाशयन् वा यतोऽनिवारितः मेघादिभिरनिरुद्धः प्रभाप्रसरो यस्य स तथा । पातितं मूर्छाजननाद् अधःक्षिप्तं दावितं विरहानलोद्दीपनात् तापितं धवलितं वा पाण्डुवर्णं कृतं प्रोषितकुलं पान्थसार्थो येन स तथा ॥

१६. धवलनाय अभ्रकादिना प्रासादश्वेतीकरणाय कूर्चको मुञ्जादिमयं धवलनोपकरणम् । तस्य श्रियं तोलयद्भिः अनुकुर्वाणैः किरणैः कृत्वा खं व्योमाङ्गणं धवलयन् मण्डयन् । अमृतं विरेचयतीत्येवंशीलः अमृतविरेचयिता नवस्तत्कालोद्भवो रूप्यमयो दुर्वर्णनिर्मितो योसौ कुम्भस्तं तोलयन् अनुविदधत् ॥

१७. शशिकान्तात् जलं विरेचयन् क्षारयन् अमृतं विरेचयन्

१ B उमालिअ°; C ओमालिअ.° २ BC पउ°. ३ D °मानो कामिजनाभिमानो येन. ४ BC °मयधर.° ५ BC कान्तान्.

आहोडिअ-घणुह-गुणे सर-ताडिअ-तिहुअणम्मि रइ-नाहे ।
दूर-विहोडिअ-सज्झस-असईणं दइअ-मेलवणो ॥ १८ ॥
नीहार-मीसिआहि व छुह-रस-वीसालिआहि व पहाहि ।
तिमिरोद्धूलिअ-भुवणं गुण्ठन्तो भामिआहि नहे ॥ १९ ॥
कामि-मण-तालिअण्टिर-वम्मह-आणं जगे तमाडन्तो ।
नासविअ-भओ अहिसारिआण हारविअ-लज्जाण ॥ २० ॥

स्रवन् । रतौ संभोगे व्यापृतानि यानि मिथुनानि तेषां हृदयेभ्य विरेचितगुह्यः बहिःकृतान्तरङ्गाभिप्रायः । सर्वत्र रिचिर्बहिर्निःसारणमात्रे । ततश्च णिग्यपि विरेचनार्थ एव भवति । विरेचनं बहिर्निःसारणम् ॥

१८. ताडितः आस्फालितः धनुर्गुणः[1] कोदण्डप्रत्यञ्चा येन स तथा तस्मिन् । शरैः मदनोन्मादनमोहनतापनशोषणाख्यबाणैस्ताडितं निधुवनोन्मादादिभावजननाद् उपद्रुतं त्रिभुवनं त्रैलोक्यं येन स तथा तस्मिन् रतिनाथे सति दूरादेव ताडितम् अपास्तं साध्वसं पतिपित्रादिभयं यासा तास्तथा ताश्च ता असत्यश्च कुलटास्तासां दयिता नटविटादिका वल्लभास्तेषां मिश्रणः संपर्कजनकः । त्रिभुवनास्खलिताज्ञे मन्मथे गृहीतधनुषि पित्रादीन् अवगणय्य स्ववल्लभान् अभिसस्रुरित्यर्थः । राजभये पित्रादिभयं न किंचिद् इत्युक्तिलेशः ॥

१९. नीहारमिश्रिताभिरिव शैत्यशैत्याभ्यां प्रालेययुक्ताभिरिव सुधारसमिश्रिताभिरिव अमन्दानन्दजननात् पीयूषद्रवसंपृक्ताभिरिव नभसि भ्रमिताभिः व्योमाङ्गणे प्रसारिताभिः प्रभाभिः कृत्वा तिमिरोद्धूलितभुवनं ध्वान्तावगुण्ठितविश्वम् उद्धूलयन् व्याप्नुवन् ॥

२०. कामिमनो भ्रमयति चालयति इत्येवंशीलः कामिमनोभ्रमयिता स कामो मन्मथश्च तस्य आज्ञा जगति भ्रमयन् विस्तारयन् ।

---

[1] BCD °धनुगु°.

विउडिअ-चओर-तण्हो जुण्हाए विप्पगालिअ-दिणोम्हो।
नासिअ-चक्को विरहिणि-पलावणो खं ससी चडिओ ॥२१॥

नाशिता कामार्तत्वात् त्यक्ता लज्जा यकाभिस्तास्तथा तासाम् अभिसारिकाणां स्वैरिणीनां नाशितं लज्जापनोदाद् अपनीतं भयं येन स तथा ॥

२१. [ज्योत्स्नया] नाशितचकोरतृष्णः अपनीतज्योत्स्नाप्रियपिपासः। तथैव च नाशितो विद्रावितो दिनोष्मा वासरसंतापो येन स तथा। नाशितः प्रियतमाया विघटितश्चक्रो येन स तथा। विरहिणीनां प्रोपितप्रियाणां नाशनः कथाशेषताकारी ॥

अमिलाण। पव्वाइअ। वाय। "म्लेर्वा पव्वायौ" [१८]

निम्मविआ। निम्माणिअ। "निर्मो निम्माण-निम्मवौ" [१९]

झिज्जमाण। अणिज्झरन्त। "क्षेर्णिज्झरो वा" [२०]॥

णुमिअ। नूमिअ। सणुमिअ। ढक्किओ। ओम्बालिअ। पव्वालिअ। छाइअ। "छदेर्णेर्णुम-नूम सणुम-ढक्कौम्बाल-पव्वालाः" [२१]॥

णिहोडन्तो। अणिवारिअ। पाडिअ। "निवृ पत्योर्णिहोडः" [२२]॥

दूमिअ। "दूङो दूमः" [२३]॥

दुमन्तो। धवलण। "धवलेर्दुमः" [२४]॥ "स्वराणां स्वराः" [४.२३८] बहुलम् इति दीर्घत्वमपि। दूमिअ॥

तुलन्तेहि। ओहामन्तो। "तुलेरोहामः" [२५]॥

ओलुण्डिर। उल्लुण्डावन्तो। विरेअन्तो। पल्हत्थाविअ। "विरिचेरोलुण्डोल्लुण्ड-पल्हत्था" [२६]॥

आहोडिअ। विहोडिअ। [ताडिअ]। "तडेराहोड-विहोडौ" [२७]॥

मेलवणो। मीसिआहि। वीसालिआहि। "मिश्रेर्वीसाल-मेलवौ" [२८]॥

---

१ BCD °ढक्कोम्बाल°.

अह दोवारिअ-दाविअ-नरवइ-दंसिअ-अणेग-पाहुडओ ।
आभरण-कन्ति-दक्खविअ-सुरघणू दरिसिएभ-गई ॥ २२ ॥
उदउग्गिअ-रवि-तेओ उग्घाडिअ-ससिह-जण-मणाणन्दो ।
संभाविओ उविन्दो इन्दो आसंघिओ अह वा ॥ २३ ॥
उल्लालिअ-णेवत्थणमुत्थंघिअ-कर-पुडं नमन्त-निवे ।
गुलुगुञ्छिअच्छि उप्पेलिअच्छिणो सणिअमिक्खन्तो ॥ २४

उद्गूलिअ । गुण्ठन्तो । "उद्धूलेर्गुण्ठः" [२९] ॥
भामिआहि । तालिअण्टिर । तमाडन्तो। "भ्रमेस्तालिअण्ट-तमाडौ"[३०]॥
नासविअ । हारविअ । विउडिअ । निप्पगालिअ । नासिअ । पलावणो ।
"नशेर्विउड-नासव-हारव-विप्पगाल-पलावाः" [३१] ॥

२२-२६. पञ्चभिः कुलकम् । [अथ] नृपः कुमारपालनरपतिः कनकमण्डपिकां सुवर्णनिर्मितह्रस्वमण्डपम् अधिष्ठितः अध्यासीनः । कथंभूतोसौ इत्याह । दौवारिकेण दर्शिता निवेदिता ये नरपतयस्तैर्दर्शितानि पुरो धरणात् प्रत्यक्षीकारितानि [अनेकानि] प्राभृतानि सुवर्णरत्नादिढौकनानि यस्य स तथा । आभरणानाम् उत्तमाङ्गश्रवणभुजादिदेशसंस्थकोटीरकुण्डलकेयूराद्यलंकाराणां कान्त्या दर्शितं जनानां प्रत्यक्षं विधापितं सुरधनुर्येन स तथा । दर्शिता साक्षात्कारिता इभगतिः गजपदन्यासो येन स तथा । हस्तिलीलया गच्छन्नित्यर्थः ॥

२३. उदये उद्घटितं निःशेषाशिष्टवैरिवारनिक्षणात् सर्वत्र उल्लासितं रविवत् तेजो येन स तथा । उद्घटितो विस्तारितः सस्पृहा धनाद्यभिलाषुका ये जनास्तेषां मनांसि तेषाम् आनन्दः समीहितवस्तुदानात् प्रमोदो येन स तथा। एवंविधः सन् उपेन्द्रः कृष्णः संभावितः उद्दितः। वेति पक्षान्तरे । इन्द्रो वा संभावितः ॥

२४. नम्रभितम् ऊर्ध्वीकृत्य एकपार्श्वाद् अपरपार्श्वं नीतम् ।

उन्नामिअ-भुमयाए चण्डारे पाहुडाइँ पेण्डविरो।
नरवइ-पट्ठविआइं देवय-पट्ठाविआइं च॥ २५॥
वोकन्त-महामचो निवो अवुक्कन्त-पणइ-मण्डलिओ।
विण्णत्ति-दिन्न-कण्णो अहिट्ठिओ कणय-मण्डविअं॥ २६॥

उत्तारितम् इति यावत्। नेवत्थणमिति देश्यः। निरुञ्छनं यत्र नमने तत्तथा। सम्राट्स्वान्ततोपाय विहितोत्तरीयचेलस्फोरणम् इति यावत्। उन्नमितकरपुटम् ऊर्ध्वीकृत्य योजितपाणिसंपुटं च यथा भवति एवम् उन्नमिताक्षान् भयाद्दरपरीतचेतस्त्वाद् विस्फारितेक्षणान् नमतो नृपान् उन्नमिताक्षं तद्भक्त्या प्रसन्नतया कीदृशोयम् इति ज्ञातुं विस्तारितनेत्रं शनैर्मन्दम्। लीलयेति यावत्। ईक्षमाणः॥ गुल्गुञ्छिअच्छीत्यत्र समासान्तविधेरनित्यत्वाद् न समासान्तः॥

२५. नरपतिभिः कुङ्कुणमालवकदेशादिदेशभूपतिभिः प्रस्थापितानि मनःप्रसादनाय मुत्कलितानि देवताप्रस्थापितानि मन्त्रादिवशीकृतदेव-प्रेषितानि च प्राभृतानि ढौकनानि उन्नमितभ्रुवा। भ्रूक्षेपेण कृत्वेत्यर्थः। भाण्डागारे प्रस्थापयिता न्यसनशीलः॥

२६. विज्ञपयन्तः कार्यं निवेदयन्तो महामात्या यस्य स तथा। विज्ञपयन्तः प्रणयिनः प्रीतियुक्ता मण्डलिकाः कतिपयदेशस्वामिनृपा यस्य स तथा। विज्ञप्तौ[3] महामन्त्रिमण्डलिककार्याकर्णने दत्तो वितीर्णः कर्णो येन स तथा॥

दाविअ। दंसिअ। दक्खविअ। दरिसिए। "दृशेर्दाव-दंस-दक्खवाः"[३२]॥
उग्गिअ। उग्घाडिअ। "उद्घटेरुग्गः" [३३]॥
सचिह। "स्पृहः सिहः" [३४]॥
संभाविओ। आसङ्घिओ। "संभावेरासङ्घः" [३५]॥

---

१ C निरुञ्छनं. २ BD °स्फेरण°; C °स्फुरण°. ३ BC विज्ञप्तिनो.

पणमिर-पणइ-पणामिअ-दिट्ठी सो तत्थ अल्लिविअ हरिसो।
अणचचुप्पिअ-हिअओ अप्पिअ-निव-खोहमासीणो ॥ २७॥
जाविअ मुहुत्तमेगं पुरोहिओ जविअ-दुट्ठ-कलि-ललिओ।
दन्त-रुई ओम्बालिअ-गयणो उच्चारही मन्तं ॥ २८ ॥

उल्लालिअ। उत्थङ्घिअ। गुलगुञ्छिअ। उप्पेलिअ। उच्चामिअ। उन्न मेरुत्थङ्घोल्लाल-गुलुगुञ्छोप्पेला " [ ३६ ] ॥
पेण्डविरो। पट्ठविआइ। पट्ठाविआइ। "प्रस्थापे पट्ठव पेण्डवौ" [३७]॥
वोकन्त। अवुकन्त। विण्णत्ति। "विज्ञपेर्वोक्कावुक्कौ" [ ३८ ] ॥

२७ प्रणम्रप्रणतौ सेवार्थसमागतवन्दारुसकलभूपालकृतपादपतने प्रणम्रप्रणयिपु प्रह्वप्रार्थकलोकेपु वा अर्पिता प्रसन्नतासूचनाय मनाग् न्यस्ता दृष्टि चक्षुर्विन्यासो येन स तथा। अर्पितहर्षे स्वदर्शनप्रदान सपादितसभाजनसतोष । अनर्पितहृदय गम्भीरत्वाद् अनवतीर्ण स्वामिप्राय स कुमारपालावनिप। अर्पितनृपक्षोभ किम् एषोधुना नो विधास्यतीति उत्पादितप्रत्यर्थिनृपतिततिचित्तसभ्रम यथा भवति एव तत्र कनकमण्डपिकायाम् आसीन उपविष्ट ॥

पणामिअ। अल्लिविअ। अणचचुप्पिअ। अप्पिअ। "अर्पेरल्लिव-चचुप्प पणामा [ ३९ ] ॥

२८ एक मुहूर्तं यापयित्वा उपवेशनान्तर स्वावसरप्राप्त्यर्थं नृपस्य सावधानार्थं च क्षणमात्र प्रतीक्ष्य यापित स्वमहिम्ना गमित दुष्टस्य लोकदु खदायित्वाद् अप्रियस्य कले कलिकालस्य ललित विलासो येन स तथा। दन्तरुचिभि शशधरकरकल्पदशनरश्मिभि प्लावित व्याप्त गगन येन स तथा। पुरोहित पृथ्वीशश्रेयोर्थं मन्त्रम् उदचारीद् अभणत् ॥

जाविअ। जविअ। "यापेर्जव " [ ४० ] ॥

---

१ B उम्बा°, C उचा°.

हार-प्पह-पव्वालिअ-हिओ निवो पाविओ व्व अमएण ।
पक्खोडिअ-चमराहिं विकोसिअच्छीहि उवसरिओ ॥ २९ ॥

ओग्गालिर-वसहाणं वग्गोलिर-करहयाण वारम्मि ।
रोमन्थ-भङ्ग-जणणो अहासि गम्भीर-तूर रवो ॥ ३० ॥

णुव्वन्तो मिरि-णिहुवय-सिरिमुम-कामय-सिरिं पयासन्तो ।
विच्छोलिअ-भुमयाहिं राया विलयाहि परिअरिओ ॥३१॥

२९. हाराणां नानाविधमुक्ताकलापानां प्रभाभिः प्लावितं हृदयं वक्षःस्थलं यस्य स तथा । अतः उत्प्रेक्ष्यते । अमृतेन प्लावित इव व्याप्त इव । विकोशितानि वारंवारं चालनेन स्फारीकृतानि चामराणि यकाभिस्ताम्तथा ताभिः । विकोशिताक्षीभिः निकमितनेत्राभिः नृपः उपसृतः चामरव्यग्रकरवनिताभिः शोभार्थं पार्श्वतः सेवित इत्यर्थः ॥

ओग्गालिअ । पव्वालिअ । पाविओ । "अनेरोग्गाल-पव्वालौ" [४१] ॥
पक्खोडिअ । विकोसिअ । "विकोशेः पक्खोडः" [ ४२ ] ॥

३०. रोमन्थं कुर्वन्ति "णिज् बहुल नाम्नः°" [हे० ३.४] इति णिजि रोमन्थयन्ति इत्येवंशीला रोमन्थयितारः उद्गीर्य चर्वणकारिण्यावो ये वृषभा बलीवर्दास्तेषां रोमन्थयितृकरभाणां च वारे समूहे । रोमन्थयनं भावे घञि रोमन्थस्तस्य भङ्गः प्रतिरवसंवलिततादृग्ध्वानश्रवणेन संजातक्षोभत्वाद् निच्छेदस्तस्य जनकस्तूर्यरवो नान्दीनिनादः अथ स्वर्णमण्डपिकायां सिंहासनोपनिष्टे नृपे पुरोहितमन्त्रोच्चारणचामरिकीचामरग्रहणानन्तरम आसीत् ॥

ओग्गालिर । वग्गोलिर । रोमन्थ । "रोमन्थेरोग्गाल-वग्गोलौ" [४३] ॥

३१. श्रियं कामयते "शीलिकामि"[हे० ५.१] इति णे श्रीकामः स एव

---

१ BD भुमयाए. २ उपश्रित.. ३ B रोमंथयमं. ४ B स च for स एव.

अणकम्पिर-कर-वलिअ-त्थाले आरोविउं अदोलि-सिहं ।
रङ्खोलिर-ताडङ्का वर-विलयारत्तिअं काही ॥ ३२ ॥
जण-रञ्जणेहि राविउमुव्वीसं तत्थ पणमिर-निवेहि ।
परिवाडिअञ्जलीहिं से घडिआ कमल-कोस व्व ॥ ३३ ॥

श्रीकामकस्तस्य श्रियं प्रकाशयन् उमाकामकश्रियं प्रकाशयन् । संप्रत्यपि स्वविभूत्या माधवपार्वतीपतिलक्ष्मीं प्रकटयन्नित्यर्थः । कम्पिता अभीष्टकामिनाम् अर्थाक्षनिरीक्षणार्थं चालिता भ्रुवो यकाभिस्तास्तथा ताभिर्वनिताभी राजा कुमारपालनृपः परिवृतः स्वस्वकृत्यकरणाय उपसृतः ॥

णिहुवय । कामय । " कमेर्णिहुवः " [ ४४ ] ॥

गुव्वन्तो । पयासन्तो । " प्रकाशेर्णुव्वः " [ ४५ ] ॥

३२. अकम्प्रौ अकम्पनशीलौ । निश्चलावित्यर्थः । यौ करौ हस्तौ तयोरारोपितं धृतं यत् स्थालं रत्नखचितकाञ्चनपात्रं तस्मिन् आरोप्य संस्थाप्य आरत्रिकं नीराजनाय दीपकमण्डलम् । न दोलयतीति ग्रहादिभ्यो णिनि अदोलिनी स्थिरा शिखा कलिका यस्य तत्तथा तद् दोलिनौ लीलावशात् चलनशीलौ ताडङ्कौ कुण्डले यस्याः सा तथा । वरवनिता वारविलासिनी अकार्षीत् । उत्तारयदित्यर्थः ॥

विच्छोलिअ । अणकम्पिर । " कम्पेर्विच्छोलः " [ ४६ ] ॥

वलिअ । आरोविउं । " आरोपेर्वलः " [ ४७ ] ॥

अदोलि । रङ्खोलिर । " दोले रङ्खोलः " [ ४८ ] ॥

३३. जनरञ्जनैः नीतिशालितया लोकावर्जकैः प्रणम्रनृपैः घटिताञ्जलिभिः योजितैः करसंपुटैः कृत्वा तस्यां कनकमण्डपिकायां नृपं कुमारपालनृनाथं रञ्जयितुम् आत्मनि सानुरागं कर्तुं से शीर्षोपरिदेशे कमलकोशा इव कमलकुड्मलानीव घटिता विरचिताः ॥

रञ्जणेहि । राविउं । " रञ्जे रावः " [ ४९ ] ॥

परिवाडिअ । घडिआ । " घटेः परिवाडः " [ ५० ] ॥

कणय-परिआलिएहिँ रयणाहरणेहि वेढिअङ्गुलिआ।
विकिणण-किणण-छइल्ला पुरो निविट्ठा महाजणिआ॥ ३४॥
विकेन्तोद्धरिआ इव भायन्ता अवि अबीहिरा निचं ।
भीएहि सहचरेहिँ निव-दूआ दूरमल्लीणा ॥ ३५ ॥

३४. कनकेन वेष्टितैर्नियमितै रत्नाभरणैर्मरकतपद्मरागादिमुद्रिकाभिः कृत्वा वेष्टिताङ्गुलयः व्याप्तानामिकाद्यङ्गुल्यः । विक्रयणक्रयणयोश्छेकाः महार्घप्रवालमौक्तिकमाणिक्यादिवस्तुनो मूल्येन प्रदानोपादानयोर्विचक्षणा महाजनिकाः श्रेष्ठिसार्थवाहप्रमुखपौरलोकाः पुरः युष्मत्प्रसादाद् वयं सुखिन इत्यादिनिजवार्ताप्रतिपादनाय राज्ञोऽग्रे निविष्टा आसीनाः ॥

परिआलिएहिँ । वेढिअ । " वेष्टेः परिआलः " [ ५१ ] ॥

३५. नृपदूताः प्रत्यर्थिपृथ्वीशसंदेशहारिणो भीता अपि प्रतापपराभूततपनमण्डलश्रीकुमारपालभूपालालंकृततथाविधसभादर्शनात् चकिता अपि अभीताः स्वप्रभुसामर्थ्यचिन्तनात् सावष्टम्भा भीतैः सहचरैः सभादर्शनादेव क्षुब्धैः स्वानुचरैः सह दूरम् आलीनाः । प्रस्तावे सति संदेष्टव्यं विज्ञपयिष्याम इति सभाया दूरदेशे स्थिताः । एवंविधाः सन्तो विज्ञायन्ते विक्रीणदुद्धरिता इव विक्रीणत्सु सत्सु उद्धरिताः केनापि अगृहीतास्त इव । यत् किल विक्रीणताम् उद्धरति तत् पृथग् भवति ॥

, विकिणण । किणण । विकेन्तो । " क्रियः किणो वेस्तु के च " [५२] इति क्रीणाते. किणो वा वेः परस्य तु द्विरुक्तः के । चकारात् किणश्च । णेरिति निवृत्तम् ॥
भायन्तो । अबीहिरा । "भियो भा-बीहौ"[५३]॥ बाहुलकात् क्वचिन्न । भीएहि॥
अल्लीणा । " आलीङोऽल्ली " [ ५४ ]

---

१ BC विकिणिण°. २ BC विक्कतो°. ३ C विक्रयक्रयण°. ४ B °मदन°. ५ B एव. ६ BC विकिणिण. ७ BC किणिण. ८ BC विक्कतो ९ BC णे इति १० BC भाअंता.

भत्ति-णिरिग्घिअ-हिअआ मउलि-णिलीअन्त-पाणि-संपुडया
निव-पय-कमले-णिलुक्कन्त-लोअणा सा सहा आसि ॥ ३६ ॥
आसि मणि-वेइआसुं लुकन्तो मणि-महीएँ लिक्कन्तो ।
लिहक्कन्तो मणि-थम्भेसु सय-गुणो पडिकिदीइ जणो ॥ ३७ ॥
निवइ-निलीइर-नयणा अविराय-सिरी विलीइर-जुआणा ।
अलि-रुञ्जिअ-जइ-रुण्टिअ-किङ्किणि-नीवीउ आसीणा ॥ ३८ ॥

३६. भक्तौ नृपाराधने निलीनम् आसक्तं हृदयं यस्या. सा तथा। मौलौ मस्तके निलीयमानम् आश्लिष्यत् पाणिसपुटं यस्या सा तथा। राजानम् उद्दिश्य योजितहस्तेत्यर्थ । नृपपदकमले निलीयमानलोचना संश्लिष्यन्नयना सा सर्वोत्कृष्टा सभा आसीत्। अपरव्यापारं परित्यज्य सेवैकताना संवृत्तेति भाव ॥

३७. मणिवेदिकासु रत्ननिर्मितवितर्दिषु निलीयमान. । मणिमह्या निलीयमान मणिस्तम्भेषु च निलीयमान । प्रतिकृत्या प्रतिबिम्बेन तत्र तत्र संक्रामन् शतगुण प्रभूतो जन. आसीत् संपन्न ॥

३८. नृपतौ निलेतृ सञ्जनशीलम्। वीक्षणपरम् इति यावत्। नयन यासां तास्तथा। अविलीनश्रिय अभ्रष्टशरीरशोभा. विलेतार. धैर्य ध्वंसाद् द्रवणशीला युवानो यकाभ्यस्तास्तथा । अलिरुतजयि रुतं यासा तास्तथा एवविधा. किङ्किण्य. क्षुद्रघण्टिका यासु तथाभूता नीवयो यासा तास्तथा नार्य आसीना. आरत्रिकादि कृत्वा वारवनिता कुमारपालनृपपार्श्वे उपविष्टा. ॥

णिरिग्घिअ। णिलीअन्त। णिउक्कन्त। लुक्कन्तो। लिक्कन्तो। लिहक्कन्तो। निलीइर। "निलीङेर्णिलीअ णिलुक्क-णिरिग्घ-लुक्क-लिक्क लिहक्का" [५५] ॥

अविराय। विलीइर। "विलीङेर्विरा" [५६] ॥

रुञ्जिअ। रुण्टिअ। "रुके रुञ्ज रुण्टौ" [५७] ॥

१ BC °कम°. २ BC °रुञ्जिअ°.

सग्गे वि हुणिअ-विहवा असुणिअ-दोसा तिलोअ-सिरि-धुवणी ।
कुमर-नरिन्द-सहा सा धुणिआरि-मणोरहा हूआ ॥ ३९ ॥
हुन्ताणन्दो अहुवन्त-संसओ निवइमुब्भुअन्त-मई ।
पहवन्तो अपरिहवो विण्णविही संधिविग्गहिओ ॥ ४० ॥
देव विवक्खीहुन्तो णिव्वडिअ-बलेण सो पहुप्पन्तो ।
हूओ कुङ्कुण-नाहो जहा तहा कुणसु अवहाणं ॥ ४१ ॥

३९. स्वर्गेपि । आस्तां मर्त्यलोके । श्रुतविभवा विख्यातसमृद्धिः अश्रुतदोषा स्वपरदेशानाकर्णितास्थितिः । त्रैलोक्यश्रीर्धूयते स्ववैभवेन अभिभूयते अनयेति करणे अनटि त्रैलोक्यश्रीधवनी सा प्राग्व्यावर्णित-स्वरूपा "ते ळुग् वा" [हे० ३.२] इति कुमारपालेत्यत्र उत्तरपदलोपे कुमारः । स चासौ नरेन्द्रश्च तस्य सभा धुतारिमनोरथा विष्वगवस्थितप्रास-निस्त्रिंशशक्तिशूलचक्राद्यस्त्रकलितानेकसुभटविसंकटत्वात् परास्तप्रत्यर्थि-सार्थविरूपकाभिप्राया भूता संजाता ॥

हुणिअ । असुणिअ । " श्रुटेर्हणः " [ ५८ ] ॥
धुवणी । धुणिअ । " धूगेर्धुवः " [ ५९ ] ॥

४०. भवदानन्दः नृपाग्रतोऽभिप्रेतनिवेदनात् संपद्यमानप्रमोदः । अभवत्संशयः विज्ञातस्वपरसैन्यवृत्तान्तत्वाद् अविद्यमानप्रतिपाद्य-विषयसंदेहः । उद्भवन्मतिः सप्रतिभत्वाद् उल्लसद्बुद्धिः । प्रभवन् स्व-वचनचातुर्येण इतरविज्ञपकेभ्यः समर्थः संजायमानः । अपरिभवः कुत्रापि असंपन्नतिरस्कारः । सांधिविग्रहिकः संधानविग्रहविनियुक्त-प्रधानपुरुषः व्यजिज्ञपत् वक्ष्यमाणं न्यवीविदत् ॥
हूआ । होन्त । अहुवन्त । अपरिहवो । " भुवेर्हो हुव-हवाः " [६०] ॥
क्वचिद् अन्यदपि । उब्भुअन्त ॥

४१. विज्ञप्तिकामेव गाथापदषट्या आह । हे देव महाराज

दूर-ट्ठिआहि करिउं णिआरिअं सुर-वहूहि दीसन्ता ।
संदाणन्ता अइनिट्टहावणा वेरि-सुहडाण ॥ ४२ ॥
वावम्फिरा कलासुं अमोघ-णिव्वोलणं पयासन्ता ।
अपयल्लिर-असि फलया णीलुञ्छन्ता रिउ-दलम्मि ॥ ४३ ॥

पृथग्भूतम् इतरोर्वीशसैन्यतो विशिष्टं स्पष्टभूतं सर्वत्र प्रकटं वा यद् बलं चतुरङ्गवाहनं तेन कृत्वा विपक्षीभवन् बलावलेपेन संपद्यमान. प्रभवन् शत्रुतिरस्कारेण समर्थः संजायमानः स लोगविख्यात. कुङ्कुणानां नाथ. कुङ्कुणदेशाधीश. यथा यादृशो भूतः संपन्नस्तथा अवधानं कुरु । तद्वृत्तान्तनिशमनपरो भवेति भावः ॥

हुन्तो । " अविति हुः " [ ६१ ] ॥
[ णिव्वडिअ । " पृथक्स्पष्टे णिव्वडः " [ ६२ ] ॥ ]
पहुप्पन्तो । " प्रभौ हुप्पो वा " [ ६३ ] । पक्षे पहवन्तो ॥
हूओ । " क्ते हूः " [ ६४ ] ॥

४२. पङ्क्ति. कुलकम् । हे महाराज तव योधाः कुङ्कुणं प्राप्ताः । कीदृशाः । काणेक्षितकृतम् अर्धाक्षनिरीक्षणकरणं कृत्वा दूरस्थिताभि गगनाङ्गणगताभिः सुरवधूभि अप्सरोभिर्दृश्यमानाः एते रणाजिरे वैरिभिरदृष्टपृष्ठा वैकुण्ठस्वर्गम् आसाद्य नः पतयो भविष्यन्तीति सस्पृहं विलोक्यमाना अवष्टम्भं कुर्वन्तः चित्तधैर्यम् आदधाना वैरिसुभटानां च अतिविष्टम्भकरणाः " बहुलम् एतन्निदर्शनम् " इति चुरादिवचनाद् रामो राज्यम् अकारयद् इतिवत् स्वार्थे णिचि निश्चेष्टताजनकाः ॥

४३. कलासु शस्त्रादिशिक्षासु श्रमं करिष्णवः अभ्यासं विधातारः । अमोघं वैरिविजयेन सफलं मन्युना ओष्ठमालिन्यकरणं वत् प्रकाशयन्तः दर्शयन्त. । अशिथिलीभवनम् अलम्बनं च करिष्णवः । सम्यक्सन्नग्रहणाद् निश्चलाः सुस्थानस्थाश्चेत्यर्थः । एवंभूता असयश्च

१ BO वैकुंठ°.

कम्मन्तमेत्तं-मन्निअ-रिउणो गुललन्त-सामिणो विजये ।
दाउं वसुमझ़रन्ता पहु-आदेसं च झूरन्ता ॥ ४४ ॥
जुद्धेण भरावन्ता राम-कहं भारहं भलावन्ता ।
निअ-कुल-कमं लढन्ता सुमरन्ता खत्तिआचारं ॥ ४५ ॥
वीर-वरणं सरन्ता पयरन्ता सामिणो पसायं च ।
वावण्ण वीर-कह-विम्हरावणा वइर-पम्हुहणा ॥ ४६ ॥

फलकाः खेटकाश्च येषां ते तथा । दल इति देश्यः सैन्यार्थे । रिपुसैन्ये निःपतनम् आच्छोटनं वा कुर्वन्तः ॥

४४. क्षुरं कुर्वाणा एव क्षुरकुर्वाणमात्राणि । अत्र च क्षुरशब्देन क्षुरविधेयं शिरस्तुण्डमुण्डनादि कर्मोच्यते । अतो नापितमात्राणि मनिता रिपवो यैस्ते तथा । स्वामिनः स्वप्रभोर्विजये विजयनिमित्तं स्वकुलदेवतादि प्रति चाटु कुर्वाणाः । वसु विभूतिं दत्त्वा वर्णनापर-वन्दिजनाय वितीर्य अस्मरन्तः दानशौण्डत्वाद् अजानानाः प्रभ्वादेशं स्वामिप्रदत्तशिक्षां च स्मरन्तः मनसि धारयन्तः ॥

४५. युद्धेन तादृक्संग्रामेण कृत्वा रामकथां रामरावणयुद्धवृत्तान्तं स्मरयन्तो ज्ञापयन्तः । भारतं च कौरवपाण्डवयुद्धप्रतिपादकग्रन्थ-विशेषम् । कौरवपाण्डवयुद्धमित्यर्थः । स्मरयन्तः निजकुलक्रमं रणाङ्गण-भङ्गपराङ्मुखस्वपूर्वपुरुषसमाचारं स्मरन्तः । क्षत्रियाचारं नष्टदृष्टानुसरण-पतितप्रहारपरिहाररूपं वीरव्रतं स्मरन्तः ॥

४६. वीरवरणम् अनेन सह मया योद्धव्यमिति प्राकृतप्रतिसुभट-युद्धाङ्गीकारं स्मरन्तः अयुध्यमानाः स्वामिनः प्रसादं च स्मरन्तः । द्विपञ्चाशद्वीरकथायाः शूद्रकादिवीरचरित्रस्य विस्मरणाः तत्कथां विस्म-रतो लोकान् प्रयुञ्जानाः । वैरस्य स्मरणाः एतैः सह अस्मद्वर्तुर्विरोध इति स्मर्तारः ॥

१ BD °मत.° २ B सरा.° ३ BC शूद्रकावीरादिचरि°.

पम्हुसिअ-अन्न-कज्जा विम्हारिअ-वाणरिन्द-वल-ललिआ ।
वीसारिअ-रिउ-मन्ता तुह जोहा कुकुणं पत्ता ॥ ४७ ॥
सीह-रव-पोक्कणा ते कोक्कन्ता किं पि सच्च-वाहरणा ।
उव्वेल्लिर-तुरय-पयल्लिरेभ-चडिआ पसरिआ अ ॥ ४८ ॥

४७. विस्मृतान्यकार्या. । रणरसिकतया त्यक्तापरप्रयोजना इति भाव । विस्मारितं निजानुपमपराक्रमेण लोकानां स्मृतिपथम् अवतरत् निषिद्धं वानरेन्द्रवलस्य सुग्रीवशौण्डीर्यस्य ललितं स्फूर्तिर्यैस्ते तथा । विस्मारितः धिस्मरन् स्मृतिपथाद् उत्तरन् प्रमुक्तः रिपुमन्त्रः अस्माभिरेवमेवं योद्धव्यम् इत्यादिशत्रुपर्यालोचो यैस्ते तथा । अस्मद्भटारब्धानां प्रतिभटानां सर्वं युद्धकरणं विस्मृतम् इति भावः ॥

कुणसु । करिउं । "कृगेः कुणः" [६५] । कृगेरित्यधिकारः उत्तरसूत्राष्टके ज्ञेय ॥
णिआरिअ । " काणेक्षिते णिआरः " [६६] ॥
संदाणन्ता । अहनिट्ठुहावणा । " निष्टम्भावष्टम्भे णिट्ठुह संदाणं " [६७]"
वावम्फिरा । " श्रमे वावम्फः " [६८] ॥
णिव्वोलण । " मन्युनौष्ठमालिन्ये णिव्वोलः " [६९] ॥
अपयल्लिर । शैथिल्यलम्बने पयल्लः " [७०] ॥
णीलुञ्छन्ता । " निष्पाताच्छोटे णीलुञ्छः" [७१] ॥
कम्मन्त । " क्षुरे कम्म " [७२] ॥
गुल्लन्त । " चाटौ गुल्ल." [७३] ॥
अज्झरन्ता । झूरन्ता । भरायन्ता । भलावन्ता । लढन्ता । सुमरन्ता । परन्ता । पयरन्ता । विम्हरावणा । पम्हुहणा । " स्मरेर्झर झूर-भर-भल-लढ विम्हर सुमर-पयर पम्हुहा." [७४] ॥
पम्हुसिअ । विम्हारिअ । वीसारिअ । "विस्मुः पम्हुस विम्हर-वीसराः" [७५] ॥
४८. सिंहरवस्य व्याहरणा. प्रतिभटान् प्रति सिंहनादान्

अह महमहन्त-णीहरिअ-मद-जले सिन्धुरम्मि चडिऊण ।
ठाणाओ नीलिओ कुङ्कुणाहिवो नीसरन्त-बलो ॥ ४९ ॥
वरहाडिआ गढाओ रण-धाडिअ-रक्खणा भडा तस्स ।
जग्गिअ-खग्गा रण-जागरा य आअड्डिआ तत्तो ॥ ५० ॥

मुञ्चन्तः । किम् अपरे मृता इदानीम् इत्यादि व्याहरन्तो जल्पन्तः । सत्यव्याहरणाः स्ववचनप्रतिपन्नार्थनिर्वाहकत्वाद् अवितथभापकाः । प्रसृत्वराः सत्वरं गमनशीला ये तुरंगमाः प्रसृमराश्च य इभाः कुञ्जरास्तेपु आरूढाः स्थिताः । प्रसृताः परबलमनु प्रचलिताश्च ॥

पोक्कणा । कोक्कन्ता । वाहरणा । " व्याहृगेः कोक्क-पोक्कौ " [ ७६ ] ॥

उव्वेल्लिर । पयल्लिर । पसरिआ । " प्रसरेः पयल्लोवेल्लौ " [ ७७ ] ॥

४९. अथ युष्मद्योधप्रसरणानन्तरं प्रसरद्गन्धं निःसृतं गण्डादिस्थानसप्तकाद् निर्गतं मदजलं यस्य स तथा तस्मिन् सिन्धुरे कुञ्जरे आरुह्य स्थानात् स्वपत्तनमध्याद् निःसरत् पृष्ठतो निर्गच्छद् बलं सैन्यं यस्य स तथा कुङ्कुणाधिपो मल्लिकार्जुनाख्यनृपः निसृतः ॥

महमहन्त । " महमहो गन्धे " [ ७८ ] ॥

५०. गढेति देश्यो दुर्गे । तस्माद् निसृताः । रणान्निःसृतानां कातरतया संग्रामाङ्गणान्निर्गतानां रक्षणाः तद्व्याघातपरापरसुभटनिवारकत्वेन त्रायकाः । जागरिताः शत्रुप्रहाराय कोशेभ्यो निःकासिता इत्यर्थः । खड्गा यैस्ते तथा । जाग्रतीत्यचि जागराः रणाय जागराः सावधानाश्च तस्य कुङ्कुणाधिपस्य भटास्ततः दुर्गनिर्गमानन्तरं व्यापृताः परस्परं युद्धाय प्रवृत्ताः ॥

णीहरिअ । नीलिओ । नीसरन्त । वरहाडिआ । धाडिअ । " निःसरेर्णीहर-नील धाड-वरहाडाः " [ ७९ ] ॥

जग्गिअ । जागरा । " जाग्रेर्जग्गः " [ ८० ] ॥

---

१ BO पयल्लोवेल्लौ.

समरम्मि वावरन्ता साहट्टिअ-पर-बला असंवरिआ ।
अणसाहरिअ-प्पेम्मामरीहि सन्नामिआ वरिउं ॥ ५१ ॥
आदरिअ-वीर-वरणा मारन्ते पहरिउं पयट्टा व ।
अणओहिअ-भड-माणा ओरसिआ इव सिवस्स गणा ॥५२॥
ओअरिअ दीहिआओ अचयन्तीकय-तरन्त-सुहडेहिं ।
तीरन्ताण वि पारन्तएहिं तेहिं कयं जुज्झं ॥ ५३ ॥

५१. समरे व्याप्रियमाणाः प्रवर्तमानाः संवृतं युगपद् अभिघात-प्रवृत्तत्वेन भयजननात् पिण्डीकृतं परबलं यैस्ते तथा । असंवृताः भयाभावाद् यथेच्छं विचरिताः । असंवृतम् उच्छलत् प्रेम यासां ताः असंवृतप्रेमाणस्ताश्च ता अमर्यश्च ताभिर्वरितुं वरणं कर्तुम् आदृताः अङ्गीकृताः ॥

आअड्डिआ । वावरन्ता । "व्याप्रेराअड्डः" [ ८१ ] ॥

साहट्टिअ । असंवरिआ । अणसाहरिअ । "संवृगेः साहर-साहट्टौ"[८२]॥

५२. आदृतवीरवरणाः । अनेन परबलवीरेण सह मया योद्धव्यम् इति कृतप्रतिज्ञा इत्यर्थः । अनवतीर्णः अभ्रष्टः भटमानः सुभटाभिमानो येषां ते तथा । प्रहरतः प्रहारान् ददतः प्रहर्तुं प्रवृत्ताः । एवं च मर्त्यासंभाव्यतथाविधयुद्धविधानाद् मन्यन्ते शिवस्य गणा इव अवतीर्णाः स्वर्गलोकाद् आयाताः ॥

सन्नामिआ । आदरिअ । "आदृगेः सन्नामः" [ ८३ ] ॥

मारन्ते । पहरिउं । "प्रहृगेः सारः" [ ८४ ] ॥

५३. अचयन्तीकृताः असमर्थीकृताः शक्नुवत्सुभटा यैस्ते तथा तैः शक्नुवतामपि मध्ये शक्नुवद्भिस्तैः कुङ्कुणाधिपभटैः दीर्घिकातः

सक्कन्तो अणथक्किअ-सलहिअ-सर-वरिसणो निवो ताण ।
मणि-खचिअ-कणय-वेअडिअ-माढिओ पहरिउं लग्गो ॥ ५४
दिन्नमसोल्लिअ-मंसासणाण अणपउलिअं तओ मंसं ।
अरि-पयण-पयावेणं तेणं सर-मिल्लिरेण रणे ॥ ५५ ॥

अवतीर्य युद्धं कृतम् । समरतूर्यनिर्घोषश्रवणप्रवृद्धोत्साहत्वेन तदैव स्थानाद्यपहाय संग्रामः प्रारब्ध इति भावः ॥

अणओहिअ । ओरसिआ । ओअरिअ । "अवतरेरोह ओरसौ" [८५] ॥

५४. शक्नुवन् इतरसुभटापेक्षया समर्थः । अफक्कितम् अनीचैर्गतम् । सर्वोत्कृष्टमित्यर्थः । अत एव श्लाघितं शरवर्षणं यस्य स तथा । मणिभिः खचितः कनकेन खचितो माढिर्यस्य स तथा । मणिस्वर्णनिर्मितसंनाह इत्यर्थः । [नृपः] ताण इति द्वितीयायाः षष्ठी [ ३.१३४ ] इति तान् गूर्जरसुभटान् प्रहर्तुं लग्नः ॥

अचयन्तीकय । तरन्त । तीरन्ताण । पारन्तएहिं । सक्कन्तो । "शकेश्चयतर तीर-पाराः" [ ८६ ] ॥

अणथक्किअ । "फक्कस्थक्कः" [ ८७ ] ॥

सलहिअ । "श्लाघः सलहः" [ ८८ ] ॥

खचिअ । वेअडिअ । "खचेर्वेअडः" [ ८९ ] ॥

५५. अरीणां पचनो दाहकः प्रतापो यस्य स तथा तेन शरमोक्षणशीलेन रणे तेन नृपेण अपक्कमांसस्य अशनानां भक्षकाणां गृध्रादीनाम् अपक्वं मांसं ततः शरमोक्षणानन्तरं दत्तम् । अनेके सुभटास्तेन व्यापादिताः मन्तो गृध्रादिभक्ष्या अभूवन्निति भावः ॥

असोल्लिअ । अणपउलिअं । पयण । "पचेः सोल्ल-पउलौ" [ ९० ] ॥

१ B समरतूर्यनिघो°; C ममतूर्यनिर्घो°. २ BC °पउलो.

उस्सिक्किअ-सङ्केणं पच्छा अवहेडिउं निअं पि दलं ।
अणछड्डिअ-कुल-धम्मं सीह-झुणी तेण रेअविओ ॥ ५६ ॥
णिल्लुञ्छिअ-भय-पसरो धंसाडिअ-भयमिभं समारूढो ।
मुञ्चन्तो बाणे णिच्चलीअ सो कोह-दुहिअप्पा ॥ ५७ ॥
जूरवणेहि उमच्छन्तेसुं जय-सिरि-अवञ्चिओ समरे ।
नाह अवेहविरेहिं पाइक्केहिं न चेलविओ ॥ ५८ ॥

५६. मुक्तशङ्केन अवगणितपरपक्षभयेन तेन नृपेण अमुक्तकुल-धर्मम् अत्यक्तक्षत्रियाचारं निजमपि । दलेति देश्यः सैन्ये । तत् पश्चाद् मुक्त्वा । अतिवीर्यात् स्वबलस्य अग्रे भूत्वेत्यर्थः । सिंहध्वनिर्मुक्तः । अयम् अहं युष्माकं कृतान्त इह आगत इति अस्मद्बलस्य निकटीभूय रणे जगर्जेत्यर्थः ॥

५७. मुक्तभयप्रसरः मुक्तभयं तथाविधानेकास्त्रपातेपि निर्भीकम् इभं समारूढः क्रोधदुःखितात्मा रोषाग्निसंतप्तगात्रः स नृपः बाणान् मुञ्चन् दुःखम् अमुञ्चत् ॥

मिल्लिरेण । उस्सिक्किअ । अवहेडिउं । अणछड्डिअ । रेअविओ । णिल्लुञ्छिअ । धंसाडिअ । मुञ्चन्तो । "मुचेश्छड्डावहेड-मेल्लोस्सिक्क-रेअव-णिल्लुञ्छ-धंसाडाः" [ ९१ ] ॥

णिच्चलीअ । "दुःखे णिच्चलः" [ ९२ ] ॥

५८. त्रिभिर्विशेषकम् । हे नाथ कुमारपाल नृप कुङ्कुणाधीशः रचितव्यूहे विहितरचनाविशेषे गूर्जरसैन्ये प्रदेशम् अरचयत् । प्रतिभटपरासनेन आत्मसैन्यस्य अवकाशं चकारेत्यर्थः । तथा निजां यशोलक्ष्मीं समारचयत् । कीदृशः । वञ्चयत्सु विप्रतारकेषु वञ्चकैः । अनिच्छन्त्ययुद्धघुणटैरित्यर्थः । तैः सह समरे सति जयश्रिया

१ B निर्लुंछिअ. २ C पायरे°. ३ CD add रान. ४ B निर्लुछिअ. ५ D °पाल म कु°.

उग्गहिअ-जय-पइन्नो अवहिअ-वूहम्मि गुज्जर-दलम्मि।
विडविड्डीअ पएसं तकालं रइअ-रोमञ्चो ॥ ५९ ॥
सारविए रण-छेत्ते उवहत्थिअ-आउहेहिँ जुज्झन्तो।
केलाइआउहो सो निअं समारीअ जस-लच्छि ॥ ६०
पहु-कज्ज-समारंचणेण सिञ्चिओ तुह वलेण वाणेहिँ।
सीभर-सिम्पिअ-वसुहो भय-सेअणओ इभो तस्स ॥ ६१ ॥

अवञ्चितः। अवञ्चयितृभिः अवञ्चनाशीलैः पदातिभिः न वञ्चितः न विप्रलब्धः। छलयुद्धे प्रकटयुद्धे च अस्यैव जयोभूदित्यर्थः ॥

५९. रचितजयप्रतिज्ञः कृतपरबलभङ्गाङ्गीकारः। तत्कालं युद्धावसरे रचितरोमाञ्चः विहितपुलकः ॥

६०. रणक्षेत्रे समारचिते काष्ठकण्टकपाषाणाद्यपनयनेन समीकृते समारचितायुधैः उत्तेजितास्त्रैः सह समारचितायुधो युध्यमानः संप्रहरन् ॥

जूरवणेहि। उमच्छन्तेसु। अवञ्चिओ। अवेहविरेहिँ। वेलविओ। "वञ्चेर्वेहव-वेलव-जूरवोमच्छाः" [ ९३ ] ॥

उग्गहिअ। अवहिअ। विडविड्डीअ। रइअ। "रचेरुग्गहावह विडविड्डाः" [ ९४ ] ॥

६१. हे महाराज प्रभुकार्यसमारचनेन स्वामिकार्यविधायकेन तव बलेन बाणैः कृत्वा तस्य कुङ्कुणाधीशस्य शीकरैर्नासाप्रमुक्तपृषत्कैः सिक्ता वसुधा येन स तथा मदेन सप्तस्थानक्षरन्मदजलेन सेचकः भूतलस्य उक्षकः इभः सिक्तः। प्रोत इति भावः ॥

सारविए। उवहत्थिअ। केलाइअ। समारीअ। समारचंणेण। "समारचेरुवहत्थ-सारव-समार-केलायाः" [ ९५ ] ॥

सिञ्चिओ। सिम्पिअ। सेअणओ। "सिचेः सिञ्च-सिम्पौ" [ ९६ ] ॥

---

१ BC समाचरणेण. २ BD add सति. ३ BC समाचरणेण.

पडिसुहडे पुच्छन्ता गज्जन्ता ढिक्कमाण-वसह व्व ।
अह धुंक्किआ तुह भडा कुङ्कण-देसाहिवं दट्ठुं ॥ ६२ ॥
अग्घिअ-चम्मा छज्जिअ-सिरक्कया मण्डलग्ग-सहिअ-करा ।
रेहिअ-सेन्ना रीरिअ-रणङ्गणा राइआ ते अ ॥ ६३ ॥
आउड्डिअ-रह-चक्कं खुप्पन्त-हयं णिउड्डमाणेभं ।
वुड्डन्त-भडं करि-रुहिर-मज्जणे ताण आसि रणं । ६४ ॥

६२. गर्जद्वृषभा इव सदर्पनिनदद्वृषेन्द्रा यथा गर्जन्तो निनादं कुर्वाणाः सन्तः प्रतिसुभटान् पृच्छन्तः अथ हस्तिनि शरवर्षानन्तरं तव भटाः कुङ्कुणदेशाधिपं दृष्ट्वा अयमसाविहास्त इति विज्ञाय गर्जिताः हतोयं जितमस्माभिरित्यादि सदर्पं निनदिताः ॥

पुच्छन्ता । " प्रच्छः पुच्छः " [ ९७ ] ॥
गज्जन्ता । धुंक्किआ[3] । " गर्जेर्बुक्कः " [ ९८ ] ॥
ढिक्कमाण । " वृषे[4] ढिक्कः " [ ९९ ] ॥

६३. राजितवर्माणः प्रदीप्तसंनाहा राजितशिरस्काः शोभितशिरस्त्राणा मण्डलाग्रराजितकराः खड्गविभ्राजितहस्ता राजितं सैन्यं यैस्ते तथा राजितरणाङ्गणास्ते तव भटा राजिताश्च[5] ॥
अग्घिअ । छज्जिअ । सहिअ । रेहिअ । रीरिअ । राइआ । " राजेरग्घ-छज्ज-सह-रीर रेहाः " [ १०० ] ॥

६४. मज्ज्यते अस्मिन् इति मज्जनं करिरुधिरं च तद् मज्जनं च[6] तस्मिन् । यावति करिरुधिरे मज्ज्यते तावतीत्यर्थः । करिणा रुधिराणि तेषु मज्जने बुडने सति वा । मग्नरथचक्रं ब्रुडितरथपादं मज्जद्धयं मज्जदिभं मज्जद्भटं रणं तेषां गूर्जरकुङ्कणभटानाम् आसीत् जातम् ॥

१ C घुंक्किआ. २ C छज्जि°. ३ C बुक्किआ. ४ So BC and A too, though the vrtti appears to consider वृषे· as the reading. ५ D राजिताश्च शोभिताश्च. ६ B om. तद् मज्जनं च.

आरोलिअ-सर-माला-वमालणो मल्लिअज्जुणो राया ।
पुञ्जिअ-पहु-लज्जिर-गुज्जरेहि जीहाविओ तेहि ॥ ६५ ॥
ओसुक्कन्तो तेअण-गिराहि सो खत्त-धम्म-लुहण-भडे ।
उग्घुसिअ-सेल्ल रोसाणिआसिणो के वि सिक्खविही ॥६६॥
लुञ्छन्ता घम्म-जलं कज्जल-पुञ्छिअ-मुह व्व तेण भडा ।
पर-तेअ पुंसणेणं फुसिअ-जसा हक्किआ के वि ॥ ६७ ॥

आउड्डिअ । खुप्पन्त । णिउड्डमाण । वुड्डन्त । मज्जणे । " मस्जेराउड्ड-णिउड्ड बुड्ड-खुप्पाः " [ १०१ ] ॥

६५. पुञ्जिता राशीकृता या. शरमालास्तासा पुञ्जको विस्तारकः मल्लिकार्जुनो राजा पुञ्जिता भयवशात् पिण्डीभूता अत एव प्रभोः स्वस्वामिनो लज्जितार कथं वयम् एवंविधा मुखं दर्शयिष्याम इति लज्जनशीला ये गूर्जरास्तैः लज्जित कथम् एतैर्भृत्यमात्रैर्युध्ये इति लज्जमान. तैस्तथाभूतैर्लज्जितो लज्जां प्रापित. ॥

आरोलिअ । वमालणो । पुंञ्जिअ । " पुञ्जेरारोल वमालौ " [ १०२ ] ॥

लज्जिर । जीहाविओ । " लस्जेर्जीहः " [ १०३ ] ॥

६६. तेजन्य. अमर्षजनिका या गिर. उक्तयस्ताभि. रे रे क्षत्रिया मा पलायध्वम् इत्यादिवाग्भि' । संस्कृते सनम् अन्तरेण शुसिजादीनाम् अप्रयोग इति ओसुक्कन्तो इत्यस्य धात्वन्तरेण अर्थः कथ्यते । दीपयन् । यन्मते सनम् अन्तरेणापि प्रयोगस्तन्मते तेजमान इत्यपि भवति । स मल्लिकार्जुननृपो मृष्टाः उत्तेजिताः । सेल्लेति देश्य. । कुन्ता यैस्ते तथा । ते च मृष्टासयश्च ते तथा तान क्षत्रधर्ममार्जनभटान् क्षत्रियाचारनिर्मलीकारकसुभटान् कानपि अशिक्षयत् शस्त्रैरताडयत् ॥

ओसुक्कन्तो । तेअण । " तिजेरोसुक्क. " [ १०४ ] ॥

६७. घर्मजलं स्वेदोदबिन्दून् मृजन्तः वस्त्रादिना उत्पुंसयन्तः ।

१ BC om. °णिउड्ड°, though they give the example णिउड्डमाण. २ BC मदावशात. ३ B om. पुञ्जिअ.

पहु-नामापुसणो धम्माहुलणो वेरि-नाम-मज्जणओ ।
तं मूरीअ गइन्दं गुज्जर-लोओ अवेमइओ ॥ ६८ ॥
खुडिअ-सुहडो खुरिअ-तुरंगमो विरिअ-बाण-पसरो य ।
मुसुंमूरिअ-सिरताणो करञ्जिओ कुङ्कुणाहिवई ॥ ६९ ॥
पविरञ्जिआतवत्तो नीरञ्जिअ-विजय-वेजयन्तीओ ।
सो लूण-सीस-कमलो कओ तुहाभञ्जिअ-भडेहि ॥ ७० ॥

जेष्यत्यधुनास्मान् असाविति विच्छायवदनत्वाद् उत्प्रेक्ष्यन्ते । कज्जल-मृष्टमुखा इव अञ्जनलिप्तानना इव । मृष्टयशसः अपासितकीर्तयो भटाः परतेजोमार्जनेन शत्रुप्रतापविध्वंसकेन तेन मल्लिकार्जुननृपेण निषिद्धाः अग्रतो विचरन्तः सिंहनादेन निरस्ताः ॥

६८. प्रभुनाम्नः अमार्जनः तादृश्यपि संग्रामे संमुखीनत्वाद् अनुत्पुंसकः । प्रकटीकारक इत्यर्थः । धर्मामार्जनः क्षत्रधर्मानपासकः । वैरिनाममार्जक· वैरिविनाशेन तन्नाम्नोपि ध्वंसकः । अभग्नो गूर्जर-लोकः असमद्कुलवीरजनः तं प्राग्व्यावर्णितस्वरूपं गजेन्द्रं मल्लिकार्जुन-नृपहस्तिनम् अभाङ्क्षीत् शस्त्रैरभैत्सीत् ॥

लुहण । उग्घुसिअ । रोसाणिअ । लुञ्छन्ता । पुञ्छिअ । पुंसणेणं । पुसिअ । अपुसणो । अहुलणो । मज्जणओ । "मृजेरुग्घुस-लुञ्छ-पुञ्छ-पुंस-फुस-पुस-लुह-हुल-रोसाणाः" [ १०५ ] ॥

६९. भग्नसुभटः रणाङ्गणनष्टपदातिवर्गो भग्नतुरंगः ध्वस्तहयो भग्न-बाणप्रसरः खण्डितशरप्रपञ्चो भग्नशिरस्त्राणः लूनशिरस्कश्च कुङ्कुणाधि-पतिर्भग्नः शस्त्रैर्भिन्नः ॥

७०. भग्नातपत्रः छिन्नच्छत्रो भग्नविजयवैजयन्तीकः छिन्नविजय-सूचकोर्ध्वीकृतपताकः स मल्लिकार्जुननृपः लूनशीर्षकमलः तव

१ BC °पुसणो though they have °पुसणो in the commentary.
२ B मुसमू°. ३ BD °सूचार्यो, C °सूचको°.

नय-पडिअग्गिर अणुवच्चिंओ सि दाहिण-दिसाइ तुमामिणिंह।
विढविअ-कुङ्कुण-सत्तङ्ग-संपओ अज्जिअ-जसोह ॥ ७१ ॥
पहु सिरि-नयर-सिरीए जुञ्जसि जुप्पसि तिलङ्ग-लच्छीए।
जुञ्जसि कञ्चि-सिरीए भुञ्जन्तो दाहिणिं इण्हिं ॥ ७२ ॥
सिन्धु-वई तुह चमढण-वेलिल्लो तुमइ दिन्न-चड्डुणओ ।
न जिमइ दिवसे जेमइ निसाइ पच्छिम-दिसाइ तह॥७३॥

अभग्नभटैः महासंग्रामविमर्देपि अपराङ्मुखैर्वीरैः कृतः विहितः । व्यापादित इत्यर्थः ॥

मूरीअ । अवेमइओ । सूडिज । सूरिअ । विरिअ । मुसुमूरिअ । करञ्जिओ । पविरञ्जिअ । नीरञ्जिअ । अमञ्जिअ । " भञ्जेर्वेमय-मुसुमूर-मूर-सूर-सूड विर-पविरञ्ज-करञ्ज-नीरञ्जाः " [१०६]॥

७१. हे नयानुव्रजितः नीत्यनुगमनशील अर्जिता आत्मसात्कृता कुङ्कुणानां सप्ताङ्गसंपत् स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गवलरूपलक्ष्मीर्येन स तथा । अत एव अर्जितयशओघ, असि त्वं दक्षिणदिशा अनुव्रजितः अनुगत. । दक्षिणदिक्स्वामी संवृत्त इत्यर्थः ॥

पडिअग्गिर । अणुवच्चिंओ । " अनुव्रजेः पडिअग्गः " [१०७] ॥
विढविअ । अज्जिअ । " अर्जेर्विढवः " [१०८] ॥

७२. हे प्रभो कुमारपालनृप दक्षिणाम् अवाचीं दिशम् इदानीं भुञ्जानः उपभोगयन् श्रीनगरश्रिया युनक्षि युक्तो वर्तसे । तिलङ्गलक्ष्म्या युनक्षि । काञ्चीश्रिया च युनक्षि । दक्षिणदिग्विजयात् तदन्तर्वर्तिदिश-स्वामित्वम् आप्नोसीति भावः ॥

जुञ्जसि । जुप्पसि । जुञ्जसि । " युजो जुञ्ज-जुज्ज-जुप्पाः " [१०९] ॥

७३. तथा तव भोजनस्य वेला विद्यते यस्य स भोजनवेलावान् ।

१ B °वव्विओ २ So BC, A has मुसमू°. ३ B om. this example.

तम्बोलं न समाणइ कम्मण-काले वि नण्हए जवणो ।
विसए अ नोवभुञ्जइ भएण तुह वसुह-कम्मवण ॥ ७४ ॥
मणि-गढिअ-कणय-घडिआहरणे उव्वेसरो वर-तुरङ्गे ।
संगलिअ लक्ख-सड्ढे पेसइ तुह रिउ-असंघडिओ ॥७५ ॥
हरिस मुरिआणणो सो महि-मण्डण कासि-रीडणो राया ।
टिविडिकइ तुह वारं हय-चिञ्चिअ-हत्थि-चिश्चइअं ॥ ७६॥

भवतो वेलावर इत्यर्थः । त्वया दत्तभोजनः जीवत्वसौ वराक इत्यनुकम्पया वितीर्णग्रासमात्रजनकदेशः पश्चिमदिशः सिन्धुपतिः प्रतीचीदिक्संबन्धिस्वामी दिवसे न भुङ्क्ते निशायां भुङ्क्ते । स्वाम्यसाक्षात्कारे वेलावरा रात्रौ भुञ्जत इति स्थितिः ॥

७४. हे वसुधोपभोजक पृथ्वीपालक तव भयेन हेतुना जवनः जवनदेशाधीशः ताम्बूलं न भुङ्क्ते । भोजनकालेपि न भुङ्क्ते । विषयांश्च शब्दादीन् देशान् वा नोपभुङ्क्ते । सर्वं ताम्बूलास्वादनादि मुक्त्वा केवलस्वदारावनोपायान् अधीत इत्यर्थः ॥

मुञ्जन्तो । चमढण । चड्डणओ । जिमइ । जेमइ । समाणइ । कम्मण । अण्हए । "भुजो भुञ्ज-जिम जेम-कम्माण्ह-समाण-चमढ-चड्डाः" [११०] ॥

उवभुञ्जइ । कम्मवण । "वोपेन कम्मवः" [१११] ॥

७५. रिपुभिः असंघटितः भवद्विपक्षैपृथग्भूतः सन् उव्वेईश्वरः मणिघटितकनकघटिताभरणानि संघट्य मेलयित्वा लक्षसंख्यान् । प्रभूतान् इत्यर्थः । वरतुरंगमांश्च तव प्रेषयति भवन्निमित्तम् उपढौकयति ॥

गढिअ । घडिअ । "घटेर्गढ." [११२] ॥

संगलिअ । असंघडिओ । "समो गलः" [११३] ॥

७६. हे महीमण्डन धरित्रीभूषक हर्षेण प्रसन्नो मयि महाराज

१ C उव्वेसरो. २ B om. °क°. ३ B om. from भुङ्क्ते to रात्रौ. ४ C °त्कारे वेला°. ५ C °विपक्षे. ६ C उव्वेधरः. ७ B °वनि°.

चिञ्चिल्लिओ अखुट्टिअ-भत्तीइ तुमम्मि मगह-देस-निवो ।
उक्खुडिअ-पुव्व-गव्वो अतुट्टिअं पाहुडं देइ ॥ ७७ ॥
अखुडिअ-गमणमतोडिअ-मदमतुडिअ-लक्खणं महेभ-कुलं ।
अणिलुक्कन्त सिणेहो गउडो पेसीअ तुज्झ कए ॥ ७८ ॥
लुक्किअ-जसमुल्लूरिअ-पयावमुल्लुक्किअ-मेइणिं काही ।
घोलन्ती तुह सेणा भय-घुलिअं कन्नउज्जेसं ॥ ७९ ॥

इति प्रमोदेन स्फुटिताननः विकसितमुखः काशेर्मण्डनः शोभाजनकः । वाराणसीस्वामीत्यर्थः । स सर्वप्रसिद्धः तव हयैर्मण्डितं शोभितं तत्तथा तच्च तद्धस्तिमण्डितं च तत्तथाभूतं द्वारं मण्डयति । मध्यम् आविशन् प्रत्यहं दौवारिकेण निषिद्धः प्रायः सिंहद्वारमेव अलंकरोतीत्यर्थः ॥

मुरिअ । "हासेन स्फुटेर्मुरः" [ ११४ ] ॥

७७. त्वयि अतुडितभक्त्या अखण्डितबहुमानेन मण्डितो भूपितः तुडितपूर्वगर्वः गलितप्राच्याभिमानो मगधदेशनृपः अतुडितं निरन्तरं प्राभृतं रत्नादिढौकनं ददाति तुभ्यं प्रयच्छति ॥

मण्डण । रीडणो । टिविडिक्कइ । चिञ्चिअ । चिञ्चइअं । चिञ्चिल्लिओ । "मण्डेश्चिञ्च-चिञ्चअ-चिञ्चिल्ल-रीड टिविडिक्काः" [ ११५ ] ॥

७८. अतुडितस्नेहः अनपगतप्रीतिः गौडः गौडदेशाधिपतिस्तव कृते अतुडितगमनम् अखण्डितपादन्यासम् अतुडितमदं निरन्तरा-निवृत्तदानप्रवाहम् अतुडितलक्षणं संपूर्णलक्षणोपेतं महेभकुलं प्रैषीत् प्राहिणोत् ॥

७९. हे नृप तव सेना घूर्णमाना चलन्ती सती तुडितयशसं विगलितकीर्तिं तुडितप्रतापं गततेजसं तुडितमेदिनीकं भग्नावनिम् ।

तुज्झ पहल्लिर-सिविरे घुम्माविअ ढंसमाण-कुम्मम्मि ।
दिट्ठे वि दसण्ण-वई विवट्टमाणो भए मरही ॥ ८० ॥
अणकढिअ-दुद्ध सुइ-जस पयाव-घम्मट्टिआरि-जस-कुसुम ।
तुह गण्ठिअ-वूहेण विरोलिओ तस्स पुर-जलही ॥ ८१ ॥

बाहुल्याद् अत्र कप्रत्ययाभाव । भयघूर्णित साध्वसचकित कन्यकुब्जे शम् अकार्षीत् ॥

अखुट्टिअ । उक्खुडिअ । अतुट्टिअ । अखुडिअ । अतोडिअ । अतुडिअ । अणिल्लक्त । लुक्किअ । उल्लूरिअ । उल्लुक्किअ । " तुडेस्तोड-तुट्ट-खुट्ट खुडो-क्खुडोल्लुक्क-णिल्लुक्क लुक्कोल्लूरा " [ ११६ ] ॥

८० हे भूपते तव घूर्णितश्चलितो विवर्तमान धराधस्तिष्ठन् कूर्मो येन स तथा तस्मिन् घूर्णयितृ विचरणशील यच्छिबिर स्कन्धावार स्तस्मिन् दृष्टेपि । आस्ता युध्यमाने । दशार्णपति भये विवर्तमान सन् अम्रियत प्राणान् अमुचत् ॥

घोलन्ती । घुलिअ । पहल्लिर । घुम्माविअ । "घूर्णो घुल घोल घुम्म-पहल्ला " [ ११७ ] ॥

ढसमाण । विवट्टमाणो । " विवृतेर्ढंस " [ ११८ ] ॥

८१ हे अक्वथितदुग्धशुचियश अग्न्यनावर्तितक्षीरनिर्मलकीर्ते प्रतापघर्मक्वथितारियश कुसुम तेजस्तापग्लापितरिपुकीर्तिपुष्प तव मथित-व्यूहेन दब्धेन सेनानिवेशेन कर्त्रा तस्य दशार्णपते पुरमेव अति विस्तीर्णत्वात् जलधि मथित रत्नाश्वगजादिलिप्सया विलोडित । तन्नगर विलुण्टितम् इत्यर्थ ॥

अणकढिअ । अट्टिअ । " क्वथेरट्ट " [ ११९ ] ॥

गण्ठिअ । " ग्रन्थो गण्ठ " [ १२० ] ॥

---

१ D लुण्टितम

मन्थिअ-दहिणो तुप्पं व घुसलिआ तस्स नयरओ कणयं ।
गिण्हन्तेहिं तुह सेणिएहिं अवअच्छिआ अम्हे ॥ ८२ ॥
तस्स चमूवा समरे णुमज्जिआ तुह भडेहि णिव्वरिआ ।
णिज्झोडणेहि णिल्लूरणा वि अणलूरिअ-पयावा ॥ ८३ ॥
छिन्दिअ-छत्त-दुहाविअ-सिरक्क-णिच्छल्लिउत्तमङ्गाण ।
उद्दालिआ दसण्णाण सिरी चालुक्क-सुहडेहिं ॥ ८४ ॥

८२. हे धराधीश मथितदध्नः तुप्प इति देश्यत्वाद् नवनीतं तदिव तस्य दशार्णपतेः मथिताद् नगरात् कनकं तव सैनिकैस्तै प्रसिद्धैर्गृह्णद्भिः आदानैर्वयं ह्लादिता हर्षिताः ॥

विरोलिओ । मन्थिअ । घुसलिओ । " मन्थेर्घुसल विरोलौ " [१२१] ॥
अवअच्छिओ । " ह्लादेरवअच्छः " [१२२] ॥

८३. हे महाराज तस्य दशार्णपतेः छेदना शस्त्रैः प्रतिभटानां विदारकाः अत एव अच्छिन्नप्रतापा अखण्डिततेजसोपि । चमूपा सैनिकास्तव छेदनैर्विदारकैर्भटैश्छिन्नाः सन्तः समरे निषण्णाः स्थिताः । मृता इत्यर्थः । ये छेदना अच्छिन्नप्रतापाश्च ते कथं छिन्ना इति विरोधाभासः अपिशब्दार्थः ॥

णुमज्जिआ । " नेः सदो मज्जः " [१२३] ॥

८४. छिन्नानि विदारितानि छत्राणि येषां ते च छिन्नाः शिरस्का येषां ते च छिन्नानि उत्तमाङ्गानि येषां ते च तथा । तेषां दशार्णानां दशार्णदेशक्षत्रियाणां श्रीः समाङ्गसंपत् चौलुक्यसुभटैः आच्छिन्ना गृहीता ॥

णिव्वरिआ । णिज्झोडणेहि । णिल्लूरणा । अणलूरिअ । छिन्दिअ । दुहाविअ । णिच्छल्लिअ । " छिदेर्दुहाव णिच्छल्ल णिज्झोड णिव्वर णिल्लूर-लूराः " [१२४] ॥

१ C सिणिएहिं. २ BCD णिच्छो°. ३ BC छदिअ°. ४ BCD °सिरि°.
५ BC घुसलिअं. ६ BCD अवअच्छइ.

तिहुअण-जस-ओअन्दण-रिउ-अच्छेदण-चमूइ पहु तुज्झ ।
मलिऊण वलं तिउरीसरस्स परिहट्टिओ माणो ॥ ८५ ॥
चड्डिअ-नक्का मड्डिअ-महा-तडा खड्डिआखिलारामा ।
पन्नाडिअ-द्रह-पङ्का तुज्झ चमूए कया रेवा ॥ ८६ ॥
पय-मढिअ-पंसु-मसिणे चुलुचुलेमाणाणिलेण कय-फन्दे ।
रेवा-तड-लय-गहणे निव्वलिओ तुह बल-निवेसो ॥ ८७ ॥

८५. हे प्रभो तव । त्रिभुवनयशस आच्छेदना शत्रुभ्यो हठाद् ग्राहिका अत एव रिपूणाम् आच्छेदना ध्वंसिका या चमू सेना तया त्रिपुरीश्वरस्य चेदिनगरीशस्य वलं सैन्यं मृदित्वा मानो मृदित भग्नः ॥

उद्दालिआ । ओअन्दण । अच्छेदण । "आछा ओअन्दोद्दालौ" [१२५]॥

८६. मृदितनक्रा पिष्टजलचरजीवविशेषा मृदितमहातटा विदारितबृहत्कूला मृदिताखिलारामा भग्नानेकोद्याना मृदितह्रदपङ्का विलोडितान्तःस्थितनदकर्दमा रेवा नर्मदा तव चम्वा कृता ॥

८७. पादाभ्यां मृदितो यः पांसुस्तद्वद् मसृणे कोमले स्पन्दमानानिलेन किंचिद्वहद्वातेन कृत्वा कृतस्पन्दे विहितमनाक्कम्पे रेवातटलतागहने तव बलनिवेश स्कन्धावारो निष्पन्न. संजात ॥

मलिऊण । परिहट्टिओ । चड्डिअ । मड्डिअ । खड्डिअं । पन्नाडिअ । मढिअ । "मृदो मल मढ-परिहट्ट खड्ड चड्ड मड्ड-पन्नाडा." [१२६] ॥

चुलुचुलेमाण । फन्दे । "स्पन्देश्चुलुचुल " [१२७] ॥

---

१ BOदर्प. २ DO चुलुचुलु°. ३ O °वारोपि. ४ B चढिअ ५B चुलचुल°, O चुलचल°.

नीपाइअ-जयं-कज्जं अविअट्टिअ-विक्कमं बलं तुज्झ।
अविलोट्टिअ-जय-महुराहिवस्स फंसावेही विजयं ॥ ८८ ॥
अविसंवाइ-परिक्खा तणु-पक्खोडण-झडन्त-पंसु-कणा।
णीहरिअ-नक्क-चक्कं तुह तुरया जँउणँमुत्तिन्ना ॥ ८९ ॥
*रिउ-अक्कन्दावणयं अखिज्जमाणं-हयमजूरिएभकुलं।*
अविसूरन्त-चमूवं पत्तं महुराइ तुह सेन्नं ॥ ९० ॥

८८. निष्पादितजयकार्यं प्रसाधितप्रत्यर्थिभङ्गप्रयोजनम्। अविसंवदितः समरसंमर्देपि निर्व्यूढो विक्रमः शौर्यं यस्य तत् तथा [ तव ] बलम्। अविसंवदितः अतिपराक्रमित्वाद् निश्चितो जयो यस्य स तथा। स चासौ मथुराधिपश्च तस्य विजयं विसमवादयत्। त्वत्सैन्यं तं जिगायेत्यर्थः॥

निव्वलिओ। नीपाइअ। "निरः पदेर्वलः" [ १२८ ]॥

८९. हे नृप तव अविसंवादिनी अविघटनशीला परीक्षा एते शस्त्रैर्भिन्ना अपि सुभटान् रणाङ्गणे न पातयन्तीति विचारो येषां ते तथा। तनुशदनेन वपुर्धूननेन शीयमानाः पतन्तः पांसुकणा येभ्यस्ते तथा तुरगाः। आक्रन्दितम् उपरिष्टात् तुरगगमनेन सकरुणं शब्दितं नक्राणां चक्रं समूहो यस्यां सा तथा यमुनां कालिन्दीम् उत्तीर्णाः परं पारं प्राप्ताः॥

अविअट्टिअ। अविलोट्टिअ। फंसावेही। अविसंवाइ। "विसंवदेर्विअट्ट-विलोट्टफंसाः" [ १२९ ]॥

पक्खोडण। झडन्त। "शदो झड-पक्खोडौ" [ १३० ]॥

९०. हे क्षोणीपते तव रिपूणाम् आक्रन्दनकम् आक्रन्दविधायकम्

---

१ BD °जइ°. २ BC फंसाविही. ३ BC जउण°. ४ B अखिज्जमाहय-मजूरि; C अखिज्जमणेहयमजूरि°; it would be admissible to read अखिज्जमाणहयजूरि° ( = अखिज्जमाणहय + अजूरि°. ) ५ C निव्यूढो. ६ B मधुरा°. ७ BCD फंसाविही.

उत्थङ्घिअ-सारेहिं रुन्धिअ-मग्गेहि हक्कमाणेहिं ।
कुज्झन्तेहिं तुह सेणिएहिं ज़ूराविआ रिउणो ॥ ९१ ॥
तुह जायन्त-पवेसे सिन्ने जम्मन्त-परिहवो तत्तो ।
तडिअ-भओ महुरेसो न तड्डवीआजि संरम्भं ॥ ९२ ॥
लड्डिअ-रुणय-चएणं विरहिअं थिप्पिऊण तुह सेन्नं ।
महुरेसो तणिअ दिही रक्खीअ निअं पुरिं महुरं ॥ ९३ ॥

अखिद्यमानहयम् अखिन्नेभकुलम् अखिद्यमानचमूप सैन्य मथुराया प्राप्तम् । सुखसुखेन तत् तस्या गतम् इत्यर्थ ॥

णीहरिअ । अक्कन्दावणय । " आक्रन्देर्णीहर । [ १३१ ] ॥

अखिज्जमाण । अजूरिए । अविसूरन्त । " खिदेर्जूर विसूरौ " [ १३२ ]॥

९१ हे नरेन्द्र तव रुद्धद्वारै वेष्टितप्रतोल्यादिनगरमुखै अत एव रुद्धमार्ग निषिद्धवर्त्मभि । निवारितलोकप्रचारैरित्यर्थ । निषेधद्भि प्रतिभटान् निवारयद्भि क्रुध्यद्भि सकोपै सैनिकै रिपव क्रोधिता क्रोधं प्रापिता ॥

उत्थङ्घिअ । रुन्धिअ । " रुधेरुत्थङ्घ " [ १३३ ] ॥

हक्कमाणेहिं । " निषेधेर्हक्क " [ १३४ ] ॥

कुज्झन्तेहिं । जूराविआ । " क्रुधेर्जूर [ १३५ ] ॥

९२ हे महीपाल तव जायमानप्रवेशे सैन्ये सति तत सैन्यात् जायमानपरिभव अल्पमानित्वाद् उत्पद्यमानतिरस्कार । अत एव ततभय प्रभूतमाध्यम मथुरेश आजिसरम्भ समराटोप नातनिष्ट न चकार ॥

जायन्त । जम्मन्त । " जनो जा जम्मौ " [ १३६ ] ॥

९३. नहि किं चकारेत्याह । हे नरेन्द्र ततघनचयेन कृत्वा

१ BD आक्कंदेणीहर २ B om this example ३ BO जूराविअ B मधु°

सग्गाल्लिअन्त-जस-भर जङ्गल-वइणोवसप्पिउं दिण्णा ।
तुह रिउ-झङ्खावण-घण-पयाव-संतप्पिएण गया ॥ ९४ ॥
जस-ओअग्गिअ-तिहुअण तेण कया भत्ति-वाविअ-मणेण ।
असमाणिअ-गुण वइरं समाविउं तुज्झ विन्नत्ती ॥ ९५ ॥

तेतं तव सैन्यं तृप्त्वा संतोष्य मथुरेशस्ततधृतिः विहितचित्तसौख्यः सन् निजां पुरीं मथुराम् अरक्षत् ॥

तड्डिअ । तड्डविअ । तड्डिअ । विरल्लिअ । तणिअ । "तनेस्तड-तड्ड-तड्डव-विरल्लाः" [ १३७ ] ॥
थिप्पिऊण । "तृपस्थिप्पः" [ १३८ ] ॥

९४. हे स्वर्गोपसर्पयशोभर त्रिदिवोल्लसत्कीर्तिनिकर उपसर्पितुं त्वाम् आश्रयितुं जङ्गलपतिना सपादलक्षाधिपेन रिपूणां संतापको यो घन-प्रतापः प्राज्यं त्वदाज्ञानङ्गीकारेण विरोधकं यत् तेजस्तेन संतप्तेन सता तव गजा दत्ताः ॥

अल्लिअन्त । उवसप्पिउं । "उपसर्पेरल्लिअः" [ १३९ ]
झङ्खावण । संतप्पिएण । "संतपेर्झङ्खः" [ १४० ] ॥

९५. हे यशोव्याप्तत्रिभुवन असमाप्ताः अनिष्ठिताः । असंख्याता इत्यर्थः । गुणा यस्य स तथा तस्य संबोधनम् । तव वैरं समाप्य त्वदाज्ञाङ्गीकारेण विरोधं निष्ठां नीत्वा वैरं समाप्तुं निष्ठां नेतुं वा भक्ति-व्याप्तमनसा तेन जङ्गलपतिना विज्ञप्तिः कृता ॥

ओअग्गिअ । वाविअ । "व्याप्तेरोअग्गः" [ १४१ ] ॥
असमाणिअ । समाविउं । "समापेः समाणः" [ १४२ ] ॥

---

१ BCD तं for तत. २ B मधु°. ३ BCD om. °न°. ४ BC विरोध. ५ So emended from संतपे झंख. of B, and संतपे झंखः of C, A संतापेर्झंख; See Pischel, foot-note *ad loc.*

तइ पेल्लिओ तुरुक्को ढिल्ली-नाहो गलत्थिओ तह य ।
अड्डक्खिओ अ कासी रिउ-घत्तण छुह महाएसं ॥ ९६ ॥
सोल्लिज्जइ जह लुद्धो तह म णोल्लेसु रिउ हुलेण-कज्जे ।
क कं परीसि न तुमं किणा वि रिविआ न तुज्झाणा ॥९७॥
गुलगुञ्छिऊण हत्थं उत्थङ्घिअ तज्जणिं भणामि इम ।
हक्खुविअ तुमए चिअ मह दुग्गं वेरि-उक्खिवण ॥ ९८ ॥

९६ एकादशभिर्गाथाभिर्विज्ञप्तिकामेवाह । हे रिपुक्षेपण वैरिनिरासक त्वया तुरुष्को म्लेच्छाधिपति क्षिप्त । तथा ढिल्लीनाथ योगिनीपुरेश्वरश्च क्षिप्त । काशि वाराणसीशश्च क्षिप्त । य कश्चिद् आत्ममानी नृप स सर्वस्त्वया तिरस्कृत इत्यर्थ । मम जङ्गलपतेरादेश क्षिप विसृज । मम निरोप ददस्वेत्यर्थ ॥

९७ हे क्षोणीपते यथा लुब्ध स्वसेवक क्षिप्यते सर्वस्मिन् कार्ये नियुज्यते तथा रिपुक्षेपणकार्ये स्वशत्रुतिरस्कारप्रयोजने मा क्षिप नियुङ्क्ष्व । तथा क क त्व न क्षिपसि । अपि तु सर्वमपि शत्रुवर्गं निरस्यसि । अत एव केनापि तवाज्ञा न क्षिप्ता । सर्वोपि त्वन्निरोपपर सवृत्त इत्यर्थ ॥

पेल्लिओ । गलत्थिओ । अड्डक्खिओ । घत्तण । छुह । सोल्लिज्जइ । णोल्लेसु । हुलण । परीसि । रिविआ । "क्षिपेर्गलत्थाड्डक्ख-सोल्ल पेल णोल्ल छुह-हुल-परी-घत्ता " [ १४३ ]॥

९८ हे पैर्युत्क्षेपण अरातिनिरासक त्वयैव मम दुर्गं कोट्ट उत्क्षिप्तम् उत्पाटितम् । नान्योस्य समुन्नमपि निरीक्षितु क्षम इत्यर्थ । इदम् मतम् हस्तम् उत्क्षिप्य ऊर्ध्वीकृत्य तर्जनीं प्रदेशिन्यङ्गुलीं च उत्क्षिप्य भणामि सकलभूपालमण्डलप्रत्यक्ष प्रतिपादयामि ॥

---

१ B क्षि° २ B°ङ्गु°. ३ BD गुट्ट°.

अच्छत्थिअ-विजय-धजा उम्भुत्तिअ-गुरु करा तुहं करिणो ।
उस्सिकन्ति गिरिं पि हु रिउ-णीरवं कं न अक्खिवसि ॥९८॥
कमवसइ जुण्ण-कोलो लुट्टइ सेसो सुअन्ति दिक्करिणो ।
कुम्मो वि लिसइ अणवेविरम्मि तइ पहु मही-धरणे ॥१००॥
आयम्बमाण-हिअया आयज्झन्तीउ विलविरा रण्णे ।
ग्रह्वन्त-सिम्र तुह रिउ-वहूउ दइए वडवडन्ति ॥ १०१ ॥

९९. रिपून् आक्षिपति तिरस्करोतीति । " कर्मणोऽण् " [ हे० ५.१ ] इत्यणि रिप्वाक्षेपस्तत्संबोधनम् । तव उत्क्षिप्तविजयध्वजाः ऊर्ध्वीकृतविजयवैजयन्तीकाः । उत्क्षिप्तगुरुकराः उच्छालितबृहच्छुण्डादण्डाः करिणः । हु इति संभावयामि । गिरिमपि उत्क्षिपन्ति उत्पाटयन्ति । अतस्त्वं कं नाक्षिपसि । यस्य तव एवंविधा दन्तिनः स त्वं सर्वमपि विजयसे इत्यर्थः ॥

गुलुगुच्छिऊण । उत्थङ्घिअ । इक्खुविअं । उक्खिवण । अच्छत्थिअ । उम्भुत्तिअ । उस्सिकन्ति । "उत्क्षिपेर्गुलुगुच्छोत्थङ्घाल्लत्थोन्भुत्तोस्सिक्क हक्खुवाः" [ १४४ ] ॥

णीरव । अक्खिवसि । " आक्षिपेर्णीरवः " [ १४५ ] ॥

१००. हे प्रभो अवेपितरि अकम्प्रे निश्चले महीधरणे पृथ्वीप्राग्भारधारके त्वयि सति जीर्णकोलः आद्यवराहः स्वपिति । शेषः फणिपतिः स्वपिति । दिक्करिणो दिग्गजाः स्वपन्ति । कूर्मः कमठः स्वपिति । एतत्कार्यस्य भवता करणाद् एते निश्चिन्ताः संवृत्ता इत्यर्थः ॥

कमवसइ । लोट्टइ । सुअन्ति । लिसइ । " स्वपेः कमवस लिस लोट्टाः " [ १४६ ] ॥

१०१. हे नरेन्द्र तव वेपमानहृदयाः साध्वसवशात् कम्पमानमानसाः

१ BCD अन्भु°. २ B°णीवर. ३ B लमइ. ४ B गुलु°. ५ BC अम्भु.

मय-लिम्पिअ-वसुहा तुह न णडन्ति गया विरन्ति न य तुरया
अणगुप्पन्त-परक्कम अवहावसु को तुह दुइज्जो ॥ १०२ ॥
संदुमइ घरं संधुक्कइ पुरमब्भुत्तए तहोज्जाणं ।
तुज्झ पयावग्गि-पलीविआण सव्वं पि तेअविअं ॥ १०३ ॥

वेपमाना कायेपि वेपथुभृत । विलपित्र्यो विलपनशीला । विलप च्छिशवो रुदद्बालका रिपुवध्व अरण्ये दयिते विलपन्ति । हा नाथा युष्मान् विना कथ वय प्राणान् धरिष्याम इति दयितविपयान् विलापान् कुर्वन्तीत्यर्थ ॥

अणवेविरम्मि । आयम्बमाण । आयज्झन्तीउ । "वेपेरायम्बायज्झौ" [ १४७ ]॥

विल्विरा । झङ्खन्त । वडवडन्ति । "विलपेर्झङ्ख-वडवडौ" [ १४८ ]॥

१०२. हे अगुप्यत्पराक्रम स्थिरशौण्डीर्य तव मदलिप्तवसुधा दान-सिक्तभूमयो गजा न गुप्यन्ति प्रधानत्वाद् रणसंमर्देपि न व्याकुली-भवन्ति । तुरगाश्च न गुप्यन्ति अत कृपस्व । मयि प्रसीदेत्यर्थ । यस्मात् कस्तव द्वितीय । न कश्चित् तव प्रतिपक्षभूतोस्तीति भाव ॥

लिम्पिअ । "लिपो लिम्प" [ १४९ ]

णडन्ति । विरन्ति । अणगुप्पन्त । "गुप्येर्विर-णडौ" [ १५० ]

अवहावसु । "क्रपोऽवहो णि" [ १५१ ]

१०३. हे महीश तव प्रतापाग्निना प्रदीप्तानां प्रज्वलितानां गृहं प्रदीप्यते तथा पुरं प्रदीप्यते तथा उद्यानं प्रदीप्यते । किं बहुना । सर्व-मपि प्रदीप्तम् । त्वच्छत्रूणां चन्दनविलेपनचन्द्रिकाद्यपि संतापहेतु सं-वृत्तम् इत्यर्थः ॥

१ B °रायम्बायज्झौ, C °रायम्बायम्मौ २ C हयन ३ C °ङ्खन्त°. ४ B °शौण्डीर्य ५ B om तथा पुरं प्रदीप्यते. ६ C नवत्त°.

मय-लिम्पिअ-वसुहा तुह न णडन्ति गया विरन्ति न य तुरया
अणगुप्पन्त-परक्कम अवहावसु को तुह दुइज्जो ॥ १०२ ॥
संदुमइ घरं संधुक्कइ पुरमब्भुत्तए तहोज्जाणं ।
तुज्झ पयावग्गि-पलीविआण सव्वं पि तेअविअं ॥ १०३ ॥

वेपमानाः कायेपि वेपथुभृतः । विलपिरयो विलपनशीलाः । विलप च्छिशवो रुदद्बालका रिपुवध्वः अरण्ये दयिते विलपन्ति । हा नाथा युष्मान् विना कथं वयं प्राणान् धरिष्याम इति दयितविषयान् विलापान् कुर्वन्तीत्यर्थः ॥

अणवेविरम्मि । आयम्बमाण । आयज्झन्तीउ । "वेपेरायम्बायज्झौ" [ १४७ ] ॥

विलविरा । झङ्खन्त । वडवडन्ति । "विलपेर्झङ्ख-वडवडौ" [ १४८ ]॥

१०२. हे अगुप्यत्पराक्रम स्थिरशौण्डीर्य तव मदलिप्तवसुधाः दान-सिक्तभूमयो गजा न गुप्यन्ति प्रधानत्वाद् रणसंमर्देपि न व्याकुली-भवन्ति । तुरगाश्च न गुप्यन्ति अतः कृपस्व । मयि प्रसीदेत्यर्थः । यस्मात् कस्तव द्वितीयः । न कश्चित् तव प्रतिपक्षभूतोस्तीति भावः ॥

लिम्पिअ । "लिपो लिम्पः" [ १४९ ]

णडन्ति । विरन्ति । अणगुप्पन्त । "गुप्येर्विर-णडौ" [ १५० ]

अवहावसु । "कृपोऽवहो णिः" [ १५१ ]

१०३. हे महीश तव प्रतापाग्निना प्रदीप्ताना प्रज्वलिताना गृहं प्रदीप्यते तथा पुरं प्रदीप्यते तथा उद्यानं प्रदीप्यते । किं बहुना । सर्व-मपि प्रदीप्तम् । त्वच्छत्रूणां चन्दनविलेपनचन्द्रिकाद्यपि संतापहेतुः सं-वृत्तम् इत्यर्थः ॥

---

१ B °रायम्बायज्झो, C °रायम्बायज्झो. २ C झयत. ३ C °झंख°. ४ B °शौर्डीर्य. ५ B om. तथा पुरं प्रदीप्यते. ६ C नच्छ°.

मय-लिम्पिअ-वसुहा तुह न णडन्ति गया विरन्ति न य तुरया
अणगुप्पन्त-परक्कम अवहावसु को तुह दुइज्जो ॥ १०२ ॥
मंदुमइ घरं संधुक्कइ पुरमब्भुत्तए तहोज्जाणं ।
तुज्झ पयावग्गि-पलीविआण सव्वं पि तेअविअं ॥ १०३ ॥

वेपमाना. कायेपि वेपथुभृत. । विलपिन्यो विलपनशीलाः । विलपच्छिशवो रुदद्बालका रिपुवध्वः अरण्ये दयिते विलपन्ति । हा नाथा युष्मान् विना कथं वयं प्राणान् धरिष्याम इति दयितविषयान् विलापान् कुर्वन्तीत्यर्थः ॥

अणवेविरम्मि । आयम्बमाण । आयज्झन्तीउ । " वेपेरायम्बायज्झौ " [ १४७ ]॥

विलविरा । झङ्खन्त । वडवडन्ति । " विलपेर्झङ्ख-वडवडौ " [ १४८ ]॥

१०२. हे अगुप्यत्पराक्रम स्थिरशौण्डीर्य तव मदलिप्तवसुधा. दानसिक्तभूमयो गजा न गुप्यन्ति प्रधानत्वाद् रणसंमर्देपि न व्याकुलीभवन्ति । तुरगाश्च न गुप्यन्ति अतः कृपस्व । मयि प्रसीदेत्यर्थः । यस्मात् कस्तव द्वितीय. । न कश्चित् तव प्रतिपक्षभूतोस्तीति भाव. ॥

लिम्पिअ । " लिपो लिम्प " [ १४९ ]
णडन्ति । विरन्ति । अणगुप्पन्त । " गुप्येर्विर-णडौ " [ १५० ]
अवहावसु । " कृपोऽवहो णिः " [ १५१ ]

१०३. हे महीश तव प्रतापाग्निना प्रदीप्तानां प्रज्वलितानां गृहं प्रदीप्यते तथा पुरं प्रदीप्यते तथा उद्यानं प्रदीप्यते । किं बहुना । सर्वमपि प्रदीप्तम् । त्वच्छत्रूणां चन्दनविलेपनचन्द्रिकाद्यपि संतापहेतु. संवृत्तम् इत्यर्थः ॥

१ B °रायम्बायज्झौ, C °रायम्बायज्झौ. २ C झङ्खत. ३ C °झंख°. ४ B °शौण्डीर्य. ५ B om. तथा पुरं प्रदीप्यते. ६ C तच्छ°.

जइ संभावसि सग्गे लुब्भसि अह वा अहिन्द-लोगम्मि ।
खउरइ इन्दो पड्डुहइ वासुगी ता खु अक्खोह ॥ १०४ ॥
आरभिअ मए भत्ति आढविअं पहु तुमम्मि दासत्तं ।
आरम्भिअं खु निव्वाहिस्सं कत्तो उवालम्भो ॥ १०५ ॥
पचारन्ति न गरुआ झङ्खण-जोग्गो वि मारिसम्मि जणे ।
जइ कह वि अभत्तो हं वेलवणिज्जो तुह अहं ता ॥ १०६ ॥

संदुमइ । संधुकइ । अब्भुत्तए । पलीविआण । तेअविअ । " प्रदीपेस्तेअव-संदुम-संधुक्काब्भुत्ताः " [ १५२ ] ॥

१०४. हे अक्षोभ निःप्रकम्प यदि त्वं स्वर्गे स्वर्गनिमित्तं लुभ्यसि गार्ध्यं करोपि । अथवा अहीन्द्रलोके नागलोकनिमित्तं लुभ्यसि तदा । खु इति संभावयामि । इन्द्रः क्षुभ्यति । वासुकिः शेषः क्षुभ्यति । किमयम् अत्रापि न स्थातुं दास्यतीत्यसावसौ क्षोभं वहतीत्यर्थः ॥

संभावसि । लुब्भसि । " लुभेः संभावः " [ १५३ ] ॥
खउरइ । पड्डुहइ । अक्खोह । " क्षुभेः खउर-पड्डुहौ " [ १५४ ]॥

१०५. हे प्रभो भक्तिं सेवाम् आरभ्य त्वयि दासत्वम् आरब्धम् । ननु आरब्धमपि न निर्वाहयिष्यसीत्याह । आरब्धम् अङ्गीकृतं च दासत्वम् । खु इति निश्चितम् । निर्वाहयिष्यामि । ततः कुत उपालम्भः । न कथमपि एवं मम वचनीयता भविष्यतीति भावः ॥

आरभिअ । आढविअं । आरम्भिअ । " आङो रभे रम्भ-ढवौ "[१५५]

१०६. किंच हे नराधिप गुरुका युष्मत्सदृशा महीयांसः उपालम्भ-

१ C तो. २ B न । स्था°, CD न स्था°. ३ C om. न.

इअ विन्नत्ति सोउं राया जम्भायन्त-जणम्मि निसीहे ।
लच्छि-विअम्भिअ[1]-णिसुढिर-सयणे णिव्वाओ लोअण-वीसामे[2] ॥

योग्येपि निर्भर्त्सनार्हेपि मादृशे जने नोपालम्भन्ते[3] न विरूपकं प्रतिपादयन्ति । परं यद्यहं तव कथमपि अभक्तः अवज्ञापरस्तदा उपालम्भनीयः शिक्षणीयः[4] ॥

उवालम्भो । पच्चारन्ति । झङ्खण । वेलवणिज्जो । "उपालम्भेर्झङ्ख-पच्चार-वेलवाः" [ १५६ ] ॥

१०७. इति पूर्वोक्तप्रकारेण विज्ञप्तिं सांधिविग्रहिकोक्तविज्ञपनं श्रुत्वा निशम्य जृम्भमाणः निद्रालुकामत्वात्[5] जृम्भां गृह्णन् जनो यत्र तस्मिन् निशीथे अर्धरात्रे लक्ष्म्या विजृम्भितं यत्र तत्तथा । महार्घम्[6] इत्यर्थः । तच्च तन्नम्रं च निम्नमध्यं यच्छयनं शय्या तस्मिन् राजा कुमारपालभूपो लोचनयोर्विश्रामे खेदापनोदनिमित्तं विश्रान्तः । सुप्वापेत्यर्थः । पादाकुलकं छन्दः ॥

जम्भायन्त । "अवेर्जृम्भो जम्भा" [ १५७ ] ॥ अवेरिति किम् । विअम्भिअ ।

णिसुढिर । "भाराक्रान्ते नमेर्णिसुढः" [ १५८ ] ॥

णिव्वाओ । वीसामे । "विश्रमेर्णिव्वा" [ १५९ ] ॥

इत्याचार्यश्रीहेमचन्द्रविरचितश्रीकुमारपालचरितप्राकृतद्व्याश्रय-
महाकाव्यवृत्तौ षष्ठः सर्गः समाप्तः ॥

— —

१ C °विअंभणिअ°. २ BC °वीसामो. ३ BC °लं.° ४ BC शिष्य°. ५ C निद्रानुकारित्वात्. ६ C °र्थं°; D महर्घ्यं.

ओहाविअ-सयल-बलो उत्थारिअ-अन्तरङ्ग-रिउ-वग्गो ।
छुंन्दिअ-करणो राया निद्दन्ते चिन्तमिअ काही ॥ १ ॥
अक्कमिआ विसएहिं टिरिटिल्लन्ता पुरन्धि-सेवाए ।
ही दुण्दुल्लन्ति भवे चक्कम्मविआ कुकम्मेहिं ॥ २ ॥

१. अथ प्रबोधकाले परमश्रावकसमुचितां स्त्रीविरक्त्यासक्त्युग-दोषस्त्रीजुगुप्सास्थूलभद्रादिमहर्षिजिनवचनबहुमानानुष्ठाननिरतप्रशंसापञ्चपरमेष्ठिस्तवस्तुतदेवताप्रभावव्यावर्णनरूपां चिन्तामेव चतुरशीत्या गाथाभिराह । आक्रान्तानि स्वबलेन पराभूतानि सकलबलानि समस्तप्रत्यर्थिपार्थिवसैन्यानि येन स तथा । आक्रान्तान्तरङ्गरिपुवर्गः विजितमदमानमनोभवसंमदक्रोधलोभरूपान्तरारातिसमूहः । आक्रान्तकरणः वशीकृतेन्द्रियो राजा कुमारपालनृपो निद्रान्ते स्वापविरामे इति वक्ष्यमाणां चिन्ताम् अकार्षीत् ॥

२. कथंकथं चिन्ताम् अकरोद् इत्याह । विषयैः शब्दरूपरसगन्धस्पर्शैराक्रान्ताः वशीकृताः पुरंध्रिसेवया सीमन्तिनीसंभोगेन हेतुना भ्राम्यन्तः पर्यटन्तः कुकर्मभिः ज्ञानावरणीयादिभिर्भ्रमिताः भ्रमं प्रापिता जीवाः । हीति खेदे । भवे चातुर्गतिकसंसारे भ्रमन्ति विचरन्ति ॥

ओहाविअ । उत्थारिअ । छुंन्दिअ । अक्कमिआ । " आक्रमेरोहावोत्थारच्छुंन्दाः " [ १६० ] ॥

---

१ BC छिंदि°. २ C °तिरिता. ३ BC छुदिअ. ४ BC °च्छुंदाः or °च्दा..

काम-गह-भमडिएहिँ भमाडिओ भम्मडेइ को न भवे ।
गय-काम-झण्टणो पुण तलेअण्टइ सिद्ध-भूमीसु ॥ ३ ॥
ढण्ढल्लिअ-भुमयं भुमिअ-धणू जग-झम्पणो गुमिअ-आणो ।
जं न फुमावइ मयणो अफुसिअ-बुद्धी खु सो धन्नो ॥ ४ ॥
ढुमइ पुरे ढुसइ वणे परइ थलीसुं परीइ जल-मज्झे ।
अभमिअ-चित्तो इत्थीहि णीइ धन्नो पसम-रज्जं ॥ ५ ॥

३. कामग्रहेण भ्रान्तैः भ्रान्तिम् आसैर्नीलपटादिदर्शनिकैः कृत्वा भ्रान्तः मोहम् उपगतः को भवे न भ्राम्यति अपि तु तादृशः प्राणी सर्वोपि संसारे सरतीत्यर्थः । गतं कामभ्रमणं मन्मथमोहो यस्य स तथाविधः पुन. सिद्धभूमिषु सिद्धक्षेत्रेषु भ्रमति गच्छति ॥

४. भ्रान्तभ्रु चलितनेत्रोर्ध्वरोमपद्धति यथा भवति एवं भ्रमितं विश्ववशीकरणाय चलितं धनुर्येन स तथा । अत एव जगद्भ्रमणः भुवनभ्रान्तिकारको भ्रमिताज्ञश्च सर्वत्र विलसितशासनो मदनो यं कमपि पुरुषं न भ्रमयति न चालयति स. अभ्रमितबुद्धि निश्चलमतिः खु निश्चितं धन्यः प्रशस्यः ॥

५. स्त्रीभिरभ्रान्तचित्त. अमूढमनाः सन् पुरे भ्राम्यति वने भ्राम्यति स्थलीषु भ्राम्यति जलमध्ये च भ्राम्यति । शीलप्रभावाद् कापि देवतादिकृतं स्खलितं संपद्यत इत्यर्थः । किं बहुना । सकलानर्थहेतुस्त्री-व्यावृत्तमनस्त्वाद् वनं परमपदं लब्ध्वा धन्य प्रशमराज्यं गच्छति । निरुपमसुखहेतूपशमैकतानः संपद्यत इति भावः ॥

टिरिटिल्लन्ता । ढुण्ढुल्लन्ति । चक्कम्मविआ । भमडिएहिँ । भमाडिओ । भम्मडेइ । झण्टणो । तलअण्टइ । ढण्ढल्लिअ । भुमिअ । झम्पणो । गुमिअ । फुमावइ ।

---

1 B तण°, C तणअतइ, D तणअटइ. 2 C अच्छीहि. 3 D गसारे गमर°. 4 B om. स्थलीषु भ्राम्यति.

सो च्चिअ सोक्खमइच्छइ पसमं उक्कसइ अक्कसइ सग्गं ।
मोक्खं पि हु अणुवजइ अईइ न हु जो जुवइ-सङ्गं ॥ ६ ॥
तारुण्णे णिम्महिए अवज्जसन्तेसु हाणिमक्खेसु ।
ही पचड्डइ वुड्ढो वि न पसमं काम-पच्छन्दी ॥ ७ ॥
णीणन्ति मित्त-भज्जं रम्भन्ति सुअं वहुं पि पदअन्ति ।
णीलुक्कन्ति च गुरु-गेहिणिं पि काम-वस-परिअलिआ ॥८॥

अकुसिअ । दुमइ । दुसइ । परइ । परीइ । अममिअ । " अमेटिरिटिल्लि-ढुण्ढुल्ल-ढण्ढल्ल-चक्कंम[2]-मम्मड-ममड ममाड-तलअण्ट-झण्ट-झम्प-भुम-गुम-फुम-फुस-ढुम ढुस-परी-पराः " [ १६१ ] ॥

६. हु इति निश्चितं यो युवतिसङ्गं न गच्छति । रमणीं न सेवत इत्यर्थः । स एव सौख्यं गच्छति । प्रशमं गच्छति । स्वर्गं गच्छति । किं वहुना । मोक्षं चिदानन्दरूपपरमपदमपि गच्छति ॥

७. तारुण्ये यौवने गते गलिते सति अक्षेपु इन्द्रियेपु च हानिं ह्रासं गच्छसु प्राप्नुवत्सु सत्सु । हीति खेदे । वृद्धोपि जराजर्जरिततनुः पुरुषोपि कामं विषयाभिलाषं गच्छति याति इत्येवंशीलः कामगामी सन् न प्रशमं गच्छति । तादृशोपि कामविह्वलो न परत्र हितम् आचरतीत्यर्थः ॥

८. कामवशगताः मन्मथपारतन्त्र्यप्राप्ता मित्रभार्यां गच्छन्ति । सुतां स्वपुत्रिकां गच्छन्ति । वधूं स्नुषामपि गच्छन्ति । किं वहुना । गुरोः पितृकल्पस्यात्मोपाध्यायस्य गेहिनीं कलत्रमपि गच्छन्ति च । लोकधर्मविरुद्धं तस्यास्तस्याः सीमन्तिन्याः सेवनं कुर्वन्तीत्यर्थः ॥

---

१ B सोक्ख. २ B° चङ्कम्ममम्मडतलअंट°, omitting ममड and ममाड; C ° चङ्कममम्मडममाडतलअंट° omitting ममड. ३ C परद्दिन. ४ B तस्या for तस्यास्तस्या°.

महिलाण वसे परिअल्लिऊण वोलन्त-हरिअमिह पावा ।
अवसेहन्ति तिरिच्छीउ वि अवहरिउज्जल-विवेआ ॥ ९ ॥
जे णिरिणासिअ-मेरा वम्मह-वस-गा समं न णिवहन्ति ।
अहिपचुइआ नूणं ते मुहिआ कम्म-भूमिम्मि ॥ १० ॥
महिलाण पेम्म-संगयमागच्छन्तीण जो न अभिडइ ।
उम्मत्थइ नाण-सिरी तस्सब्भागच्छइ विवेओ ॥ ११ ॥

९. महिलानां वशे गत्वा । तत्परतन्त्रीभूयेत्यर्थः । गच्छद्रीकं भ्रश्यल्लज्जं यथा भवति एवं गतोज्ज्वलविवेकाः नष्टविशदकृत्याकृत्यविचाराः । अत एव पापाः कुत्सितकर्माचरणाद् अधर्माणः इह जगति तिरश्चीः गोगर्दभ्यादिका अपि । आस्ताम् उभयलोकविरुद्धा मानुषीः । गच्छन्ति कामयन्ते ॥

१०. गतमेराः नष्टमर्यादा मन्मथवशगाः स्त्रीसंभोगपरा ये शमं रागाद्यभावं न गच्छन्ति कर्मभूमौ आर्यक्षेत्रे नूनं निःसंदेहं ते मुधा आर्यक्षेत्रोत्पत्त्येकसाध्यस्य शमस्य असाधनान्निरर्थकम् आगता उत्पन्नाः॥

णीइ । अइच्छइ । उक्कसइ । अक्कसइ । अणुवज्जइ । अईइ । णिम्महिए । अवज्जसन्तेसु । पचड्डुइ । पच्छन्दी । णीणन्ति । रम्भन्ति । पदअन्ति । णीलुक्कन्ति । परिअलिआ । परिअल्लिऊण । वोलन्त । अवसेहन्ति । अवहरिउ । णिरिणासिअ । णिवहन्ति । " गमेरई-अइच्छाणुवज्जावज्जसोक्कुसाक्कस पचड्डु-पच्छन्द-णिम्मह-णी-णीण-णीलुक्क पदअ-रम्भ-परिअल्ल-वोल-परिअल-णिरिणास-णिवहावसेहावहराः " [ १६२ ] ॥

११. प्रेम्णा संगतं सप्रेम यथा भवति एवम् आगच्छन्तीनां रन्तुं

---

१ B °विवेय. २ B °पचुइआ. ३ C आर्या. ४ B °वज्जसोक्कुसाक्कस°; C °वज्जसोक्कुसाकुसु; A °वज्जसोक्कुसपचड्ड° omitting two letters. In the text and the examples both B and C have उक्कसइ and अक्कसइ.

न भवे पच्चागच्छइ अपलोट्टिअ-माणसो जुवइ-सङ्गे ।
पडिसाय-मणो परिसामिएहिँ कहिओवसम-मग्गो ॥ १२ ॥
संखुड्डण-कुसलाणं उब्भावन्तीण के वि रमणीण ।
किलिकिंचिअ-मोट्टाइअ-कोट्टमिएहिँ न खेड्डन्ति ॥ १३ ॥

ढौकमानानां महिलानां यो न संगच्छते न संयुक्तो भवति । महिलासु न रज्यतीत्यर्थः । तस्य ज्ञानश्रीः अभ्यागच्छति संमुखम् आटीकते । विवेकश्च अभ्यागच्छति । सकलसमीहितपदविज्ञानप्रेक्षापूर्वकारितापात्रम् असौ संजायत इत्यर्थः ॥

अहिपच्चुइआ । आगच्छन्तीण । "आङा अहिपच्चुअः" [ १६३ ] ॥

संगय । अब्भिडइ । "समा अब्भिडः" [ १६४ ]"

उम्मत्थइ । अब्भागच्छइ । "अभ्याङोम्मत्थः" [ १६५ ] ॥

१२. युवतिसङ्गे अप्रत्यागतमानसः प्रतिनिवृत्तचित्तः शान्तमनाः कषायानुपप्लुतस्वान्तः शान्तैः शमयुक्तैश्च कथितोपशममार्गः उपदिष्टप्रशमवर्त्मा न भवे प्रत्यागच्छति । रागद्वेषाद्यनर्थहेतुवामाभिष्वङ्गनिवृत्तत्वाज्जरामरणविपर्ययपरमपदम् आसादयतीत्यर्थः ॥

पच्चागच्छइ । अपलोट्टिअ । "प्रत्याङा पलोट्टः" [ १६६ ] ॥

पडिसाय । परिसामिएहिँ । उवसम । शमेः पडिसा परिसामौ"[ १६७]।

१३. रमणकुशलानां सुरतक्रीडानिपुणानां रममाणानां भोगिभिः सह क्रीडन्तीनां रमणीनाम् "निर्विशेषं न सामान्यम्" इति रमिः क्रीडामात्रेप्युक्तो विशेषक्रीडने वर्तते । अतो रतरतरैरिति । कोर्थः । किलिकिंचितमोट्टायितकुट्टमितैः कृत्वा केपि नीरागाः केचन महा

१ BC किलि°. २ C कोड°. ३ BD °प्रद°. ४ D विपय परम°. ५ BC किलि°.

रममाणीओ रामा णीसरणिज्जं अवेल्लणिज्जं च ।
अग्घविअ-चम्महाओ को अग्घाडइ सिणेहेण ॥ १४ ॥
मायाइ उद्धुमाया अहिरोमिअ-तुच्छयाइ अङ्कुमिआ ।
चवलत्त-पूरिआओ को तुवरइ दट्ठुमित्थीओ ॥ १५ ॥

त्मानो न रमन्ते । नानाकामचेष्टाविशिष्टास्ता न सेवन्त इत्यर्थः । तत्र स्मितहसितरुदितभयरोषगर्वदुःखश्रमाभिलापसंकरः किलिंकिंचितम् । प्रियकथादौ तद्भावभावनोत्था चेष्टा मोट्टायितम् । अधरादिग्रहाद् दुःखेपि हर्षः कुट्टमितम् । संस्कृतैरेव किलिंकिंचितादिशब्दैः किलिंकिंचेत्यादिसिद्धौ रमेरेतदादेशविधानम् अनेकधा शब्दव्युत्पत्तिरिति न्यायप्रदर्शनार्थम् । प्राकृते रमणमात्रेपि च एते प्रयुज्यन्त इति ज्ञापनार्थं वेति ॥

१४. रमयतीति " प्रवचनीयादयः " इति [हे० ५.१] कर्तरि अनीये रमणीयं कमनीयरूपपुरुषम् अरमणीयं जराकुष्ठाद्यभिभूतपुरुषं च रममाणाः सेवमानाः पूर्णमन्मथाः आङ्गिकसात्त्विकविकारकरणविचक्षणत्वाद् अन्यूनमनसिजा रामा: कः स्नेहेन पूरयति । गम्यागम्यविचारविकलासु तासु न कोपि विचक्षणोऽनुरागम् आधत्त इति भावः ॥

संखुड्डण । उब्भावन्तीण । किलिंकिंचिअ । मोट्टाइअ । कोट्टुमिएहिं । खेड्डन्ति । रममाणीओ । णीसरणिज्जं । अवेल्लणिज्जं । " रमे संखुड्ड-खेड्डोब्भाव किलिकिंच-कोट्टुम मोट्टाय-णीसर-वेल्लाः " [ १६८ ] ॥

१५. मायया पूर्णा भृताः । पूर्णतुच्छतया समग्रागाम्भीर्येण पूर्णाः । चपलत्वपूर्णाः अस्थैर्यव्याप्ताः स्त्रीर्द्रष्टुं कस्त्वरते । न कोपि विद्वान् मत्तृदम् अवलोकितुम् उद्यच्छत इत्यर्थः ॥

---

१ BC अदो°. २ BC किलि°. ३ BC °कुट्टि°.

तूरन्ति अतूरन्तं पि हु जअडावन्ति तुरिअ-मयणाओ ।
अहह हलिद्दी-राया खिरन्त-सेएहिँ अङ्गेहिं ॥ १६ ॥
पच्चडमाण-सरीरा झरन्त-खाल व्व पज्झरिअ-रमणा ।
धीरा अणिड्डुअन्ते वि णिच्चलावेइ ही महिला ॥ १७ ॥

अग्घविअ । अग्घाडइ । उड्डुमाया । अहिरेमिअ । अङ्गुमिआ । पूरिआओ । " पूरेरग्घाडाग्घवोद्धुमाङ्गुमाहिरेमाः " [१६९] ॥

१६. त्वरितमदनाः उल्लसितमनोभवा हरिद्रावद् रागो यासां तास्तथा । अस्थिरप्रेमानुबन्धाः । अहहेति खेदे । तादृश्योपि कष्टं क्षरत्स्वेदैः सात्त्विकविकारवशात् स्विन्नैरङ्गैः कृत्वा त्वरन्ते स्वयं भोगिसंभोगाय उत्सहन्ते । अत्वरमाणं संभोगानुत्सुकं पुमांसं त्वरयन्ति तथाविधविलासकरणेन प्रेरयन्ति ॥

तुवरइ । जअडावन्ति । " त्वरस्तुवर जअडौ " [१७०] ॥

तूरन्ति । अतूरन्तं । " त्यादिशत्रोस्तूरः " [१७१] ॥

तुरिअ । " तुरोऽत्यादौ " [१७२] ॥

१७. क्षरच्छरीरा निर्गच्छत्स्वेदोदबिन्दुप्रवाहतनुः । क्षरत् वहद् यत् । खालेति देश्यः । अशुचिजलनिर्गमस्थानम् ; तदिव क्षरितं रमणं स्मरकूपिका यस्याः सा तथा । महिला अक्षरतः अनार्द्रहृदयानपि धीरान् । हीति खेदे । क्षारयति आर्द्रहृदयान् करोति । सत्त्वाच्चालयतीति यावत् ॥

खिरन्त । पच्चडमाण । झरन्त । पज्झरिअ । अणिड्डुअन्ते । णिच्चलावेइ । " क्षरः खिर-झर-पज्झर-पच्चड-णिच्चल-णिट्टुआः " [१७३] ॥

---

१ BC अहरे°. २ C °डोग्घ°. ३ BC समोगानुत्सुकं. ४ BC °आ.

उत्थल्लिअ-परिफाडिअ-भेगोवम-रमणि-रमण-रमिराण ।
सत्ती विअलइ थिप्पइ कन्ती बुद्धी अ णिट्टुहइ ॥ १८ ॥
तस्स विसट्टउ हिअयं सयहुत्तं दलउ बुद्धि-कोसल्लं ।
जो लिहइ वलिअ भत्तं व वम्फि-लालं रमणि-अहरं ॥१९॥

१८. पूर्वम् उच्छलितः परिवृत्तः पश्चात् परिस्फाटितः । विदारितोदरदेश इत्यर्थः । यो भेको मण्डूकस्तेन उपमा सादृश्यं यस्य तत् तथा । एवंविधं यद् रमणीरमणं तद्रन्तारो रमणशीलास्तेषाम् । तादृशवराङ्गसक्तानाम् इत्यर्थः । शक्तिर्बलं विलगति भ्रश्यति । कान्तिर्विगलति बुद्धिश्च विगलति । उपलक्षणमात्रम् एतत् । अन्यदपि कम्पादि स्त्यादिसक्तानां संजायते । यदुक्तम् ।

कम्पः स्वेदः श्रमो मूर्छा भ्रमिर्ग्लानिर्बलक्षयः ।
राजयक्ष्मादिरोगाश्च भवेयुर्मैथुनोत्थिताः ॥

उत्थल्लिअ । " उच्छल उत्थल्लः " [१७४] ॥

विअलइ । थिप्पइ । णिट्टुहइ । " विगलेस् थिप्प-णिट्टुहौ " [१७५] ॥

१९. वलितभक्तमिव वान्तभोजनमिव । वम्फिन्यः अधःपतनशीला लाला यत्र तत् तथाविधं रमण्यधरं सुन्दरीदशनच्छदं यो लेढि पिबति । तस्य पुरुषस्य शतकृत्वः शत वारान् हृदयं दलतु भेदम् आप्नोतु । बुद्धिकौशलं च दलतु । तथाविधाकार्यनिरतस्य चैतन्यपाण्डित्यादि विफलम् इत्यर्थः ॥

विसट्टउ । दलउ । वम्फि । वलिअ । " दलि-वल्योर्विसट्ट वम्फौ " [१७६] ॥

---

१ C णिट्टहइ. २ D तादृशवराङ्गनावराङ्ग°.

अणफुडिअ-इन्दवारण-रम्मा रामा अफिट्ट-कडुअत्ता ।
रे हिअय फुट्ट चुक्कसि किं मग्गा ताहि मुल्लविअं ॥ २० ॥
अब्भंसि-दूसिअच्छं अफिडिअ-कंहमाणणं महेलाण ।
रंचइ तत्थ वि मूढो नसिअ-मई णिवहिअ-विवेओ ॥ २१ ॥
सेहइ सीलं पडिसन्ति धी-गुणा संजमो वि अवहरइ ।
णिरणासइ सुअमवसेहइ सच्चं जुवइ-सत्ताण ॥ २२ ॥

२०. अभ्रष्टम् अविदीर्णं यद् इन्द्रवारणं विशालाफलं तद्वद् रम्या बहिर्मनोहराः । अभ्रष्टं कटुकत्वम् अन्तरमधुरपरिणामो यासां तास्तया रामाः । तस्मात् हे हृदय भ्रष्ट दुःशीलस्वभाव ताभिर्भ्रंशितं सत् किं मार्गाद् भ्रंशयसि । तथाभूतासु तासु अनुरागम् उत्सृज्य धर्मध्यानैकतानं हे मनो भवेत्यर्थः ।

२१. अभ्रष्टदूपिकाक्षम् अनपगतमलनेत्रम् अभ्रष्टकफम् अप्रच्युतश्लेष्म महेलानाम् आननम् । परं तत्रापि तादृशेपि आनने नष्टमतिर्नष्टविवेको मूढो रजति । तदवलोकनचुम्बने रागम् आधत्त इत्यर्थः ॥

अणफुडिअ । अफिट्ट । फुट्ट । चुक्कसि । मुल्लविअ । अब्भंसि । अफिडिअ ।
" भ्रंशेः फिड-फिट्ट-फुड-फुट्ट-चुक्क-भुल्लाः " [ १७७ ] ॥

२२. युवतिसक्तानां स्त्रीलम्पटानां शीलं सदाचारो नश्यति प्रयाति ।

शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहापोहोर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥ इति ।

---

१ CD °बहु°. २ C रयइ. ३ C °चीर्ण°. ४ C °डु°. ५ B °ति. ६ BC °चुबन. ७ B om. this example. ८ BC om. फुट्ट. ९ B मुज्ञ. १० D ऊहोपोहो.

ओवासइ न विवेओ थी-सङ्गे इअ गुरूहि संदिसिअं ।
अप्पाहामो ता तत्त-पिच्छिरो ताउ को निअइ ॥ २३ ॥
जे भावि-पुलेअणा भूअ-देक्खणा वट्टमाण-सच्चवणा ।
तेहि निअच्छिअ भणिअं मा इत्थीओ पुलोएह ॥ २४ ॥

ते नश्यन्ति । संयम शुभानुष्ठानमपि नश्यति । श्रुतं सिद्धान्तो नश्यति । सत्यं च नश्यति । न किंचिदपि परत्र परित्राणहेतुः शुभं तेषां संभवतीति भावः ॥

नसिअ । णिवहिअ । सेहइ । पडिसन्ति । अवहरइ । णिरणासइ । अवसेहइ ।
" नशेर्णिरणास णिवहावसेह-पडिसा-सेहावहराः " [ १७८ ] ॥

२३. स्त्रीसङ्गे योषित्संपर्के विवेकः युक्तायुक्तविचारो नावकाशते नावकाशं लभते इति गुरुभि अस्मत्पूर्वाचार्यैः संदिष्टम् अस्माकं पुरः प्रतिपादितम् । तस्मात् तत्त्वद्रष्टा विज्ञातपरमार्थः कस्ताः स्त्रीः पश्यतीति वयमपि संदिशाम मुक्त्यर्थिनं प्रतिपादयामः ॥

ओवासइ । " अवात् काशो वासः " [ १७९ ] ॥

संदिसिअ । अप्पाहामो । " संदिशेरप्पाहः " [ १८० ] ॥

२४. भाविनो भविष्यदर्थस्य दर्शनाः द्रष्टारः । भूतदर्शनाः अतीतार्थवीक्षका । वर्तमानदर्शना विद्यमानार्थविलोकयितारः त्रिकालवेदिन इत्यर्थः । एतैर्महात्मभिर्दृष्ट्वा सकलाकुशलकारणं स्त्रिय इति विज्ञाय भणितम् । किम् । स्त्रीर्मा पश्यत । यदि स्वस्य क्षेमम् अभिलषेत तदा स्त्रीणां विलोकनमपि मा कुरुतेत्यर्थः ॥

---

१ B पुण°. २ BC दक्खणा. ३ BC °लषत.

अवयच्छन्तो वि जणो नोअक्खइ कामिणिं अवक्खन्तो ।
न गुरुं चज्ञइ नन्नं पासइ जं तीइ पासत्थो ॥ २५ ॥
असरीरिणमवअक्खइ अवआसइ सील-जाइ-रहिअं पि ।
अवयज्झिऊण तं पि हु जो इत्थिं छिवइ तस्स नमो ॥२६॥

२५. कामिनीं पश्यन् सस्पृहं वीक्षमाणो जनः पश्यन्नपि
यकृच्छकृन्मलश्लेष्ममज्जास्थिपरिपूरिताः ।
स्नायुस्यूता बहीरम्याः स्त्रियश्चर्मप्रसेविका ॥

इत्यादिकामिनीस्वरूपं जानन्नपि न पश्यति न मनस्यवधारयति । यस्मात् तस्याः कामिन्याः पार्श्वस्थः संभोगाय समीपवर्ती न गुरुं पश्यति । नान्यं मातापित्रादिकं पश्यति । तदेकतानो न गुर्वादिकं गुरुत्वादिना मन्यत इत्यर्थः । यदुक्तम्

न देवान् न गुरून् नापि

इत्यादि ॥

२६. अशरीरिणं गलिताङ्गोपाङ्गं पश्यति सानुरागदृष्ट्या विलोकते । शीलजातिरहितमपि पश्यति । तदपि एवंविधमपि योषिद्सचेष्टितम् हु इति निःसंदेहम् दृष्ट्वा यः स्त्रियं स्पृशति आलिङ्गति तस्मै नमः । उपहासपरोयं नमस्कारः । तेन निर्विवेकचूडामणेस्तस्य धिकारोस्त्वित्यर्थः ॥

पिच्छिरो । निअइ । पुलअणा । दक्खणा । सच्चवणा । निअच्छिअ । पुलोएइ । अवयच्छन्तो । उअक्खइ । अवक्खन्तो । चज्ञइ । पासइ । अवअक्खइ । अवआसइ । अवयज्झिऊण । " दृशो निअच्छ-पेच्छावयच्छावयज्झचज्ञ-सच्चव देक्खोअक्खावक्खावयक्ख-पुलोअ-पुलअ-निआवआस-पासाः " [ १८१ ] ॥

---

१ C अवि°. २ BC °क्ष्य°. ३ C मलि°. ४ B drops from विलोकते to दृष्ट्वा. ५ BC अक्खइ. ६ BC° पुलोपुलअ°.

फंसिज्जइ कविकच्छू फंसिज्जइ अहव कुविअ-वग्घी वि ।
फरिसिज्जइ न उणेथी धम्म सरीरं हणइ छिहिआ ॥ २७ ॥
आलिहइ नरमणालुङ्खणिज्जमवि नीअ-रचणी नारी ।
मूढाण रिअइ सा वि हु हिअए पविसन्त-काममिम ॥२८॥
नारीउ हिअय पम्हुस मा ताओ पम्हुसन्ति पर-लोअं ।
रोच्चेन्ति धम्म-बीजं न य रोहइ चहिअं तं च ॥ २९ ॥

२७ कपिकच्छू स्पृश्यते । अथवा कुपिता व्याघ्री अपि स्पृश्यते । शरीरमात्रानर्थकारिण्योरेतयो स्पर्शो वरम् इत्यर्थ । न पुन स्त्री स्पृश्यते । यतो धर्मशरीरम् अत्रामुत्र अनेककल्याणप्रदसुकृततनु स्पृष्टा सती हन्ति विनाशयति ॥

२८ नीचरञ्जिनी हीनकृतप्रेमानुबन्धा सती नारी अस्पर्शनीय न्यग्जातीयमपि नर स्पृशति । पर मूढानाम् प्रविशन् स्थितिम् आसादयन् कामो यत्र तस्मिन् । कामोद्रेकयुक्त इत्यर्थ । हृदये सापि अगम्य गामुकापि प्रविशति पदम् आदधाति । रचणीत्यत्र " व्रज-नृत मदा च्चः " [ ४ २२५ ] इति बहुवचनाद् रञ्जेर्जस्य चत्वम् ॥

छिवइ । फासिज्जइ । फसिज्जइ । फरिसिज्जइ । छिहिआ । आलिहइ । अणालुङ्खणिज्ज । " स्पृश फास फस फरिस छिव-छिहालुङ्खालिहा " [१८२]।
रिअइ । पविसन्त । " प्रविशे रिअ " [ १८३ ] ॥

२९. रे हृदय स्वान्त नारीर्मा स्पृश मा स्मद्यम् अभिलष । यतस्ता नार्य परलोक प्रमुष्णन्ति । स्पर्शमात्रेण परभवहित पुसा निघ्नन्तीत्यर्थ । तथा ता धर्मबीज पिंषन्ति चूर्णयन्ति । तच्च धर्मबीज पिष्ट सत् न प्ररोहति । न स्वर्गापवर्गफलदायि भवतीत्यर्थ ॥

पम्हुस । पम्हुसन्ति । " प्रा-मृश मुषोर्म्हुस " [ १८४ ] ॥

---

१ B फा° २ BC प° ३ C उण° ४ BC रोच° ५ C च्छिहा, D स्पृष्टा च्छिहा ६ C °रज्जनी ७ B च, C व ८ BC च्चत्वम् ९ B °म्हु°

णिरिणासिअ-मेरं णिरिणज्जिअ-हिरिअं च णिव्वहिअ-गुणं च ।
पीसिअ-सीलं नारिं भुक्किर-सुणइं व को सिहइ ॥ ३० ॥
विलयाहि अरोअङ्घिअ-हिअओ अणकड्ढिओ अ विसएहिं ।
अञ्चिअ-निव्वाण सिरी सो धन्नो थूलभद्द-मुणी ॥ ३१ ॥
कामेण करिसिअ-सरेणावि अणाइञ्छिओ अणच्छेइ ।
मह मणमयञ्छिरेहिं गुणेहिं सिरि-थूलभद्द-मुणी ॥ ३२ ॥

३०. पिष्टमेरां ध्वस्तमर्यादां पिष्टह्रीकां परास्तलज्जां च । पिष्टा गुणा गाम्भीर्यादयो यया सा तथा ताम् । पिष्टशीलां विदारितसदाचारां च नारीं भपित्री भपणशीला याँ शुनकीं कुर्कुरीं तामिव कः काङ्क्षति । न कोपे विवेकी तदङ्गसङ्गम् अभिलषतीति भावः ॥

रोअन्ति । चड्डिअं । णिरिणासिअ । णिरिणज्जिअ । णिव्वहिअ । पीसिअ । "पिषेर्णिवह-णिरिणास णिरिणज्ज-रोञ्च-चड्डाः" [ १८५ ] ॥

भुक्किर । "भषेर्भुक्कः" [ १८६ ] ॥

३१. वनिताभिरकृष्टहृदयः अनावर्जितचित्तः । विषयैश्च शब्दादिभिरकृष्टः । तद्वशं न गत इति यावत् । कृष्टनिर्वाणश्रीः समीपीकृतमोक्षलक्ष्मीः स तथाविधाहारनिवासवेश्यासंप्राप्तावपि मथितमन्मथमौनत्वेन प्रसिद्धः स्थूलभद्रमुनिर्धनं धर्मरूपं लब्धा धन्यः ॥

३२ कृष्टशरेणापि मनोभेदाय आकर्णानीतपुणापि कामेन नाकृष्टः न वशीकृतः श्रीस्थूलभद्रमुनिः कर्ष्टृभिः कर्षणशीलैः । आवर्जकैरिति यावत् । गुणैः कृत्वा मम मनः कर्षति आवर्जयति ॥

---

१ C सिरि°. २ B वलआ°. ३ B °ड्ढिल°; C °ढिअ°. ४ C °हि°. ५ B om. या. ६ B कुक्कारी. ७ BC रोच°. ८ BC अणङ्कट्ट°. ९ C °नि. १० C °च्चा. ११ B कामेनाकृष्टः; C कामनाकृष्ट°.

अक्खोडिआसि-तिक्खं धन्नो वम्हं चरिंसु वइर-रिसी ।
दुण्दुल्लण-कुसला जस्स तुल्लमज्ज वि गमेसन्ति ॥ ३३ ॥
ढण्ढोलिआगमत्थं घत्तिअ तत्तं गवेसिअप्पाणं ।
एक्को चिअ वइर-रिसी परिअन्तिअ-परम-वम्ह-सिरी ॥३४॥
वम्ह-सिरीइ सिलिसिअं तव-सिरि-सामग्गिअं च अजम्मं ।
नाण-सिरीए अवयासिअं च वइरं नमंसामो ॥ ३५ ॥

असाअड्डिअं । अणकड्डिओ । अञ्छिअ । करिसिअ । अणाइञ्छिओ । अणञ्छेइ ।
अयञ्छिरेहिं । " कृषेः कड्ढ-साअड्ढाञ्चाणञ्छायञ्छाइञ्छाः " [१८७] ॥

३३. कोशात् कृष्टासिवत् तीक्ष्णं ब्रह्मचर्यं चरितवान् अनुष्ठितवान्
वज्रर्षिर्धन्य । यस्य तुल्यं गवेषणकुशला अद्यापि गवेषयन्ति गवेषणेन
अदर्शनं गम्यते । ततश्च अद्ययावत् तत्सदृशं न पश्यन्तीत्यर्थः ।
चरिंसु इत्यत्र आर्षत्वात् क्तवतु स्थाने इंसुः ॥

अक्खोडिअ । " असावक्खोड " [१८८] ॥

३४. आगमार्थं गवेषयित्वा निभाल्य तत्त्वम् आगमार्थरहस्यं गवेष-
यित्वा आत्मानं स्वस्वरूपं च गवेषयित्वा एक एव वज्रर्षि श्लिष्टपरम-
ब्रह्मश्री. अङ्गीकृतसर्वोत्कृष्टब्रह्मचर्यलक्ष्मीक । यथा आबाल्यतो वज्रर्षि-
श्रामण्यं प्रपेदे तथा नान्य इत्यर्थ. ॥

दुण्दुल्लण । गमेसन्ति । ढण्ढोलिअं । घत्तिअ । गवेसिअ । " गवेषेर्दुण्दुल्ल
ढण्ढोल-गमेस घत्ता " [१८९] ॥

३५. आजन्म ब्रह्मश्रिया श्लिष्टं तप श्रिया श्लिष्टं च ज्ञानश्रिया
श्लिष्टं च वैर्णाभ्यटनैकादशाङ्गीपाठात् । वज्रं वज्रस्वामिनं नमस्यामः ॥

---

१ C °ड्डिअ°. २ B °ड्ढा°. ३ BC ढढोलि. ४ D वर्णाभ्यष्टनिका°.

मक्खन्तं व सुहाए चोप्पडमाणं व चन्दण-रसेण ।
के मुक्खं आहन्ता गयसुकुमालं न वम्फन्ति ॥ ३६ ॥
जो अहिलङ्घइ धम्मं मुक्खं अहिलङ्घए महइ सुक्खं ।
सो वचउ सिहणिज्जं सिरि-गोअम-सामिणो मग्गं ॥ ३७ ॥
अविलुम्पिअ-भव-सुक्खो जीव-दयं जम्मओ वि कङ्खन्तो ।
अज्ज वि सामइअ-जसो भवाविहीरो जयइ अभओ ॥ ३८

परिअन्तिअ । णिलिसिअं । सामग्गिअं । अवयासिअं । "श्लिषेः सामग्गा-वयासपरिअन्ताः" [ १९० ] ॥

३६. सुधया म्रक्षयन्तम् इव चन्दनरसेन म्रक्षयन्तम् इव स्वचरितावदातेन परमनिर्वृतिजननात् तद्विलेपनं कुर्वन्तम् इव मोक्षं काङ्क्षन्तः के गजसुकुमालं न काङ्क्षन्ति अपि तु सर्वेपि तत्सदृशीभवितुम् अभिलषन्तीत्यर्थः ॥

मक्खन्तं । चोप्पडमाणं । "म्रक्षेश्चोप्पडः" [ १९१ ] ॥

३७. यो धर्मं काङ्क्षति मोक्षं काङ्क्षति सौख्यं च काङ्क्षति स धर्मार्थी पुरुषः काङ्क्षणीयम् आत्मनिस्ताराय भव्यैरभिलषणीयं श्रीगौतमस्वामिनो मार्गं धर्माचारं काङ्क्षतु इच्छतु । अनेनैवं[1] तद्धामान् ।

३८. न काङ्क्षितं भवसौख्यं येन स यथा । जन्मतोपि जन्मप्रभृत्यपि जीवदयां दीनानाथजन्तुजातप्राणरक्षां काङ्क्षन् अद्यापि सर्वार्थसिद्धिप्राप्तेः पश्चादपि । संप्रत्यपीति यावत् । प्रतीक्षितं जगत्यवस्थितं यशो यस्य स तथा । भवे न प्रतीक्षते भवाप्रतीक्षः[2] संसारोद्विग्न इत्यर्थः । अभयकुमारमुनिर्जयति ॥

आहन्ता । वम्फन्ति । अहिलङ्घइ । अहिलङ्घए । महइ । वचउ । सिहणिज्जं[3]। अविलुम्पिअ । कङ्खन्तो । "काङ्क्षेराहाहिलङ्घाहिलङ्घ-वच्च-वम्फ-मह-सिह-विलुम्पाः[4]" [ १९२ ]॥

---

१ B अनेव. २ BD भविमवाप्रतीक्ष; C भवने प्रतीक्षते भविमावप्रतीक्ष. ३ BC सिहि. ४ B काक्षेएहाहिलंघवचवम्फमह°.

निरंमालिअ संसारे जेण पडिक्खाविआ समय-गत्था ।
जयइ सुधम्मो तच्छिअ-कम्मो चच्छिअ-कुतित्थि-मओ ।३९।
सिवं रम्पण-मिच्छा दिट्ठि-रम्फणो तक्खिऊण अग्गमग्गे ।
विअसाविअ सिद्धन्तो भयवं जम्बू-मुणी जयइ ॥ ४० ॥
कोआसिअ-गहिअ वओ दर-वोसट्टिअ-सरोज-हसिर-मुहो ।
अणुगुञ्जाविअ-स-कुलो भयवं पहव-प्पहू जयइ ॥ ४१ ॥

३९ ससारे प्रतीक्ष्य स्थित्वा येन समयशास्त्राणि सिद्धान्तग्रन्था । द्वादशाङ्गानीत्यर्थं । प्रतीक्षितानि स्थापितानि । कृतानीत्यर्थ । यत्तदोर्नित्याभिसबन्धात् स तष्टानि चूर्णितानि कर्माणि येन स तथा । तष्टकुतीर्थिमद मृदितकुमताभिमान सुधर्मा सुधर्मस्वामिगणभृत् जयति । सत्था इत्यत्र " वाक्यर्थवचनाद्या " [ १ ३३ ] इति पुस्त्वम् ॥

सामइअ । अविहीरो । विरमालिअ । पडिक्खाविआ । " प्रतीक्षे सामय-विहीर विरमाला " [ १९३ ] ॥

४० शिवस्य तक्षणा विनाशका ये मिथ्यादृष्टयस्तेषा तक्षणो विनासक अपकृष्टा मार्गा कुमतानि तान् तक्षित्वा उपमृद्य विकासितसिद्धान्त प्रकटितागमो भगवान् पूज्यो जम्बूमुनि जम्बूस्वामिमहर्षिर्जयति ॥

तच्छिअ । चाच्छिअ । रम्पण । रम्फणो । तक्खिऊण । " तक्षेस्तच्छ चच्छ रम्प-रम्फा " [ १९४ ] ।

४१ विकसितो दीप्त सन् गृहीतव्रत अङ्गीकृतचारित्र । विकासित वा अनेकशिष्यकरणेन विस्तारित गृहीत व्रत येन स तथा । दरम् ईषद् विकसित स्फुटित यत् सरोज तद्वत् हसित स्मेर मुख

१ C विरा° २ BC सिवि° ३ BC अणु° ४ CD insert अपामार्गा (= अपमार्गा ?) after मार्गा ५ B drops the example.

अणडिम्भन्त-ल्हसाविअ-कुतित्थिअं थिरमसंसि जिण-वयणं।
जर-मरण-वोज्जिराणं भव-डरिआणं हरउ तासं ॥ ४२ ॥
सो वज्जइ न भवाओ गुरूहिँ साहूहिँ णुमिअ-सम्मत्तो ।
णिमिअ-मणो जिण-समए कया वि जो न हु पलोट्टेइ ॥४३॥

यस्य स तथा। अहासितस्वकुलः अलज्जितनिजक्षत्रियवंशस्तादृग्वीरव्रतेन तत्त्वं विज्ञाय प्रव्रज्याङ्गीकारात् भगवान् प्रभवप्रभुः प्रभवसूरिर्जयति॥

विअसाविअ । कोआसिअ । वोसट्टिअ । " विकसेः-कोआस-वोसट्टौ " [ १९५ ] ॥

हसिर । अंणगुञ्जाविअ । " हसेर्गुञ्जः " [ १९६ ] ॥

४२ अस्रस्ताः स्वमतोद् अभ्रष्टाः सन्तः स्रंसिता भ्रंशम् आपिताः कुतीर्थिका येन तत्[१] तथा। स्थिरं ध्रुवं महाविदेहादिक्षेत्रेषु सर्वदा सद्भावात् अतएव अस्रंसि न कथमपि स्रंसते जिनवचनं जरामरणत्रस्तानां भवत्रस्तानां त्रासं भयं हरतु ॥

अणडिम्भन्त । ल्हसाविअ । असंसि । " स्रसेर्ल्हस डिम्भौ " [ १९७ ]॥

४३. गुरुभिः धर्माचार्यैः । कैर्गुरुभिः । साधुभिः । न्यस्तसम्यक्त्वः आरोपितसम्यक्त्वः न्यस्तमनाश्च सन् जिनसमये हु निश्चितं यः कदापि न पर्येस्यति न विपरीतो भवति स भवाद् न बिभेति । परमपदप्राप्तिहेतुसम्यक्त्वार्हत्समयनिश्चलमनस्त्वाद् न भीतिं करोतीत्यर्थः ॥

वोज्जिराणं । डरिआणं । तासं । वज्जइ । " त्रसेर्डर-वोज्ज-वज्जाः " [ १९८ ] ॥

णुमिअ । णिमिअ । " न्यसो णिम णुमौ " [ १९९ ] ॥

---

१ C अणु°. २ B°दा°. ३ B om. तत्. ४ BCD पर्यवस्यति.

[1]पल्लट्टिअ-पावा पल्हत्थिअ-कलिणो अ नीससण-जोग्गे ।
विग्घे वि अज्झह्विरया णिल्लसिअ-जिणागमा हुन्ति ॥४४॥
ऊसलिअ-गुणोसुम्भिअ-संजम-पुलआअमाण-हिअयस्स ।
गुञ्जोल्लिअ-जिण-वयणस्सारोअइ कस्स नो नाणं ॥ ४५ ॥
उल्लसिअ-भिसन्त-सिरी भासिर-नाणेण गसिअ-मिच्छत्तो ।
मोहाघिसिअ-विवेओ जिण-मयमोवाहए धन्नो ॥ ४६ ॥

४४. पर्यस्तपापाः क्षिप्ताशुभप्रकृतयः । पर्यस्तकलयश्च परास्तपरस्परविरोधाः । निःश्वसनयोग्येपि दुःखदायित्वात् कदुष्णबाष्पजननार्हेपि विघ्ने अनिःश्वसितारः अनिःश्वसनशीलाः । धीरा इति यावत् । उल्लसितजिनागमाः स्यान्तोद्बुद्धार्हत्समया भवन्ति ॥

पलोट्टेइ । पल्लट्टिअ । पल्हत्थिअ । " पर्यसः पलोट्ट पल्लट्ट-पल्हत्था. " [ २०० ] ॥

नीससण । अज्झह्विरया । " निःश्वसेर्झङ्खः " [ २०१ ] ॥

४५. उल्लसिता उद्भूता गुणाः क्षान्त्यादयो यस्य स तथा । स चासौ उल्लसितसंयमश्च प्रकटीभूतचारित्रः स तथा । स चासौ उल्लसद्धृदयश्च धर्मोत्साहमानमनाश्च स तथा । तस्य उल्लसितजिनसमयस्य अन्तःपरिस्फुरितार्हत्सिद्धान्तस्य कस्य न ज्ञानम् उल्लसति । अपि तु तादृक्षस्य सर्वस्य सम्यगवबोधः प्रादुर्भवतीति भावः ॥

४६. उल्लसिता प्रादुर्भूता भासमाना दीप्यमाना श्रीः धर्मसाधनसंपद् यस्य स तथा । भास्वरज्ञानेन दीप्रसम्यगवबोधेन ग्रस्तमिथ्यात्वः मथितमिथ्यादर्शनः मोहेन अज्ञानेन अंभस्तः विवेको युक्तकारिता यस्य स तथा । धन्यः पुण्यवान् जिनमतम् अवगाहते परिभावयति ॥

---

१ B °घ°. २ BCD ओहावए. ३ BC पलोट्टिअ. ४ B पल्ल°. ५ B घस्रो.

ओगाहिअ-जिण-वयणो गुण-ठाण-वलग्गिओ चडइ मुक्खं ।
भव-सुह-अणगुम्मडिओ अगुम्मिओ मोहणिज्जेहिं ॥ ४७ ॥
अहिऊलइ कम्म-गणं आलुङ्खइ इन्धणं जहा डहणो ॥
वलणिज्ज-हरण-बुद्धी गिण्हन्तो भयवओ वयणं ॥ ४८ ॥

णिल्लसिअ । ऊसलिअ । ऊसुम्भिअ । पुलआअमाण । गुञ्जोल्लिअ । अरोअइ । उल्लसिअ । उल्लसेरूसलोसुम्भ-णिल्लस-पुलआअ-गुञ्जोल्लारोआः " [ २०२ ] ॥
भिसन्त । भासिर । " भासेर्भिसः " [ २०३ ] ॥
गसिअ । अघिसिअ ॥ " ग्रसेर्घिसः " [ २०४ ] ॥

४७. अवगाहितजिनवचनः परिभाविताईद्भाषितः गुणस्थानानि मिथ्यात्वादीनि तेषु आरूढः । आद्ये सर्वदावस्थानाद् आरोहो न घटत इति उत्तरोत्तरगुणस्थानेषु कृतावस्थान इत्यर्थः । भवसुखेन अमुग्धः अमोहितो वा । मोहयन्तीति मोहनीयाः स्त्र्यादिविषयास्तैरमोहितः अमूर्छितो मोक्षम् आरोहति अध्यास्ते ॥

ओगाहए । ओगाहिअ । " अवाद्गाहेर्वाहः " [ २०५ ] ॥
वलग्गिओ । चडइ । " आरुहेश्चड वलग्गौ " [ २०६ ] ॥
अणगुम्मडिओ । अगुम्मिओ । मोहणिज्जेहिं । "मुहेर्गुम्म-गुम्मडौ" [२०७] ॥

४८. ग्राह्यग्रहणबुद्धिः उपादेयार्थोपादानमतिः अत एव भगवतः अर्हतो वचनं सकलोपादेयमूर्धमुकुटं भगवत्सिद्धान्तं गृह्णन् अङ्गीकुर्वन् । तदुपदिष्टं समाचरन्नित्यर्थः । कर्मगणं ज्ञानावरणादिव्रातं दहति भस्मसात् करोति । विनाशयतीति यावत् । इन्धनं यथा दहनो दहति ॥

---

१ C आरो°. २ C अपरोहिति. ३ B उहावए; C ओहावए. ४ B drops °गुम्म. ५ C °वराणीदि.°

पंङ्गिअ-संजम-भारा निरुवारिअ-पवयणे अणुसरन्ता ॥
अहिपच्चुअन्ति मुत्तिं जोअं घेत्तूण सील धणा ॥ ४९ ॥
गेण्हिअ वयाइँ घेत्तुं घेत्तव्वं वोत्तुमवि अ वोत्तव्वं ॥
जे उज्जुआ गु ताणं वोत्तूण गुणे कयत्थु म्हि ॥ ५० ॥

अहिऊलइ । आडुहइ । डहणो । " दहेरहिऊलाडुहौ " [ २०८ ] ॥

४७. गृहीतसंयमभारान् अङ्गीकृतव्रतभरान् गृहीतप्रवचनान् सूत्रतोर्थतश्च विज्ञातद्वादशाङ्गान् अनुस्मरन्तः । सफलजन्मान एत इति भावनया पूर्वमहर्षीन् ध्यायन्त इत्यर्थः । शीलं चारित्रं धनं येषां ते शीलधना मुनयो योगं परमसमाधिं गृहीत्वा आसाद्य मुक्तिं निर्वृतिं गच्छन्ति ॥

वल्गिअ । हरण । गिण्हन्तो । पंङ्गिअ । निरुवारिअ । अहिपच्चुअन्ति ।
" ग्रहो वल-गेह्न-हर-पंङ्ग-निरुवाराहिपच्चुआः " ॥ [ २०९ ] ॥

५०. व्रतानि गृहीत्वा ग्रहीतव्यम् अर्हत्प्रणीतोपादेयतत्त्वं ग्रहीतुं ज्ञातुं वक्तव्यं सदुपदेशादिप्रतिपाद्यमपि च वक्तुं भणितुं ये निश्चितम् उद्यताः । स्वपरोपकारकरणतत्परा इति यावत् । तेषां गुणान् क्षान्त्यादीन् उक्त्वा कृतार्थः कृतकृत्योस्मि ॥

घेत्तूण । घेत्तु । घेत्तव्वं । " क्त्वातुमूतव्येषु घेत् " [ २१० ] ॥ क्वचिन्न भवति । गेण्हिअ ॥

वोत्तुं । वोत्तव्वं । वोत्तूण । " वचो वोत् " [ २११ ] ॥

---

१ BC गिण्हिअ°. २ B उज्जुआ. ३ B om. अङ्गीकृतव्रतभरान्. ४ BC येषु.

भोत्तूणं भोत्तव्वं भोत्तुं निव्वुइ-सुहाइँ मोत्तु-मणा ।
मोत्तव्वारम्भं मोत्तूण महन्ता तवस्सन्ति ॥ ५१ ॥
सोअ-वसा रोत्तूण वि रोत्तु-मणा विम्हरन्ति रोत्तव्वं ।
दट्ठूण जाण मुत्तिं अरहन्ताणं नमो ताणं ॥ ५२ ॥
जे दट्ठव्वे दट्ठुं इन्दो काहीअ लोअण-सहस्सं ।
दंसण-तत्तिं काउं अरहन्ताणं नमो ताणं ॥ ५३ ॥

५१. भोक्तव्यं शुभाशुभम् अनुभवनीयं मुक्त्वा संवेद्य । निर्वृति-सुखानि भोक्तुं संवेदयितुम् । मोक्तव्यारम्भं हेयव्यापारं मुक्त्वा परित्यज्य । मोक्तुमनसो निर्वरीतुकामा महान्तः महामुनयस्तपस्यन्ति । बाह्याभ्यन्तरभेदभिन्नं द्वादशविधं तपः कुर्वन्ति ॥

५२. शोकवशात् स्वबन्धुवियोगसमुद्भवदुःखपरतन्त्रत्वाद् रुदित्वापि रोदनं कृत्वापि रोदितुमनसः रोदनपरायणचेतसः प्राणिनः येषां मूर्तिं वपुर्दृष्ट्वा रोदितव्यं विपन्नस्वजनान्वयनादिकं विस्मरन्ति न स्मृतिपथम् आनयन्ति तेभ्योऽर्हद्भ्यो नमः नमस्कारोस्तु ॥

भोत्तूणं । भोत्तव्व । भोत्तुं । मोत्तु° । मोत्तव्वा । मोत्तूण । रोत्तूण । रोत्तु° । रोत्तव्वं । "रुद-भुज-मुचा तोन्त्यस्य" [ २१२ ] ॥

५३. यान् द्रष्टव्यान् लोकातीतसौभाग्यादियुक्तत्वाद् वीक्षणीयान् द्रष्टुं दर्शनाय लोचनसहस्रम् इन्द्रः अकरोत् अकार्षीत् चकार वा । दर्शनमपि किमर्थम् इत्याह । दर्शनेन निर्निमेषवीक्षणेन तृप्तिम् आत्मनः संतोषं कर्तुम् । तेभ्योऽर्हद्भ्यो नमः ॥

दट्ठूण । दट्ठव्वे । दट्ठुं । "दृशस्तेन ट्ठः" [ २१३ ] ॥

काऊणं कायव्वं कम्मं काहिन्ति जे ण पुणरुत्तं ।
जग-बोहमिच्छिराणं अरहन्ताणं नमो ताणं ॥ ५४ ॥
जो अणुगच्छइ जच्छइ छिन्दिउमच्छड तणुं च तेसिं पि ।
अणभिन्दिअ-भावाणं अरहन्ताणं नमो ताणं ॥ ५५ ॥
सन्निहे न जाण कुज्झइ जुज्झड मुज्झइ भवे अगिज्झन्तो ।
देही बुज्झइ सिज्झइ अरहन्ताणं नमो ताणं ॥ ५६ ॥

५४. कर्तव्यं सकलकर्मक्षयं कृत्वा ये पुणरुत्तम् इति भूयोपि न कर्म करिष्यन्ति कर्तारो वा । वीतरागत्वात् न मुक्तिम् अपहाय बुद्धयत् स्वदर्शनतिरस्कारनिवारणाय इह जन्म आसाद्य पुनरपि कर्म भन्स्यन्तीत्यर्थः । तेभ्यो जगद्बोधम् एषितृभ्य. अभिलाषुकेभ्योर्हद्भ्यो नम ॥

काहीअ । काउ । काऊण । कायव्वं । काहिन्ति । "आ कृगो भूतभविष्यतोश्च" [ २१४ ] ॥

५५ योनुगच्छति भक्त्या पृष्ठलग्न प्रयाति । तथा यो यच्छति सादरं स्ववस्तु ददाति । यस्तु तनु छेत्तुम् आस्ते । तेष्वपि अभिन्न भावेभ्यो निर्विशेषमनस्केभ्यस्तेभ्यो जगत्प्रसिद्धेभ्योर्हद्भ्यो नम ॥

इच्छिराण । अणुगच्छइ । जच्छइ । अच्छइ । "गमिष्यमासा छ " [२१५]॥

छिन्दिउ । अणभिन्दिअ । " छिदि-भिदो न्द " [ २१६ ] ॥

५६. येषां सन्निधे समीपे भवे अगृध्यन् गार्ध्यम् अगच्छन् । संसारविरक्तो भवन्निति यावत् । देही जन्तुर्न क्रुध्यति न कोपं

१ B दाहिंति २ B drops छिन्दिउम् अच्छइ ३ B om. कर्म. ४ C नतु ५ B om अच्छइ ६ B om. न.

रुन्धिअ-करणं रुम्भिअ-पवणं रुज्झिअ-मणं अपडिएहिं ।
झायव्वाण मुणीहिं अरहन्ताणं नमो ताणं ॥ ५७ ॥
सडिअ-रया कढिअ-मला वड्डिअ-तव-तेअ-वेढिअङ्गा य ।
जाणज्ज वि वर-मुणिणो अरहन्ताणं नमो ताणं ॥ ५८ ॥

गच्छति । तथा न युध्यते न[1] युद्धं करोति यतो न मुह्यति न मोहम् उपगच्छति । मोहमूलत्वात् क्रोधयुद्धयोः । किंतु बुध्यते[2] अवगततत्त्वो भवति । तथा च सति सिध्यति सिद्धो भवति । तेभ्योर्हद्भ्यो नमः ॥

कुज्झइ । जुज्झइ । मुज्झइ । अगिज्झन्तो । बुज्झइ । सिज्झइ । "युध बुध गृध क्रुध सिध-मुहां ज्झः" [ २१७ ] ॥

५७. रुद्धकरणम् । रुद्धपवनम् । रुद्धमनः कृतेन्द्रियोच्छ्वासनिःश्वासचित्तनिरोधं यथा भवति एवम् अपतितैः ध्यानाद् अस्खलितैर्मुनिभिर्ध्यातव्येभ्यस्तेभ्यः प्रसिद्धेभ्योर्हद्भ्यो नमः ॥

रुन्धिअ । रुम्भिअ । रुज्झिअ । "रुधो न्ध-म्भौ च" [ २१८ ] ॥

५८. सन्नरजसः गलितवध्यमानकर्माणः । कथितमलाः भस्मीकृतबद्धकर्माणः । यतो वृद्धं वृद्धिं गतं यत् तपस्तेजस्तेन वेष्टितं व्याप्तम् अङ्गं येषां ते तथा च वरमुनयः अद्यापि दुष्षमाकालेपि वर्तन्ते येषाम् अर्हताम् । यन्मतसंस्थिता इत्यर्थः । तेभ्योर्हद्भ्यो नमः ॥

अपडिएहिं । सडिअ[3] । "सद-पतोर्डः" [ २१९ ] ॥

कढिअ । वड्डिअ । "कथ-वर्धां ढः" [ २२० ] ॥

वेढिअ । "वेष्टः" [ २२१ ] ॥

---

[1] BD om. न. [2] C °ति. [3] B अडिअ.

दुक्कड-संवेल्लिअओ भव-पासोव्वेढणोज्जओ लोओ ।
उव्वेल्लिज्जइ जेहिं अरहन्ताणं नमो ताणं ॥ ५९ ॥
जे झाउं संपज्जइ अणखिज्जिर-सिज्जिराण सा सिद्धी ।
ते वच्चामो सरणं नच्चिर-मच्चिर-मणा सिद्धे ॥ ६० ॥
आणन्द-रोविराणं जेसु नवन्ताण होइ नोव्वेवो ।
घाइ समुहं च मुत्ती ताण नमो सव्व-सिद्धाणं ॥ ६१ ॥

५९. दुष्कृतेन अशुभकर्मणा संवेष्टितो व्याप्तः । परं भवपाशोद्वेष्टने संसारबन्धनमोक्षणे उद्यतः कृतप्रयत्नो लोको यैरुद्वेष्ट्यते बन्धनमुक्तः क्रियते तेभ्योऽर्हद्भ्यो नमः ॥ दुक्कड इत्यत्र आर्षत्वात् तस्य डः ॥

संवेल्लिअओ । " समो ल्लः " [ २२२ ] ॥

उव्वेढण । उव्वेल्लिज्जइ । " वेष्टः " [ २२३ ]॥

६०. यान् ध्यात्वा स्मृत्वा अखेत्तृस्वेत्तृणाम् अखेदनखेदनशीलानाम् खेदखेदरहितानाम् इति यावत् । अस्माकं सा सिद्धिः तत् सिद्धत्वं संपद्यते । तान् सिद्धान् नर्तितृ नर्तनशीलम् । भक्तिवशाद् उत्कलिकाकलितम् इत्यर्थः । तथा मदितृ तोषणशीलं मनो येषां ते तथाभूता वयं शरणं व्रजामः ॥ झाउं इत्यत्र सेघनक्रियापेक्षया शक्यत्वम् न संपद्यते इत्यपेक्षया । तच्च भावितमेवेति[1] ॥

संपज्जइ । अणखिज्जिर । सिज्जिराण । " स्विदां ज्जः " [ २२४ ] ॥

वच्चामो । नच्चिर । मच्चिर । " व्रज-नृत-मदां च्चः " [ २२५ ] ॥

६१. यान् आनन्दरोदितॄणां हर्षाश्रुमोचनशीलानां सतां नमतां नमस्कुर्वतां न उद्वेगो भवति । किंतु यान् नमतां मुक्तिः संमुखम्

---

[1] B भाविनमे°, C भवि°.

कुपहे धावन्ति अखादिमं च खादन्ति तेहि वि समं जो ।
धावइ खाइ अ तं पि हु वोहन्ते झामि आयरिए ॥ ६२ ॥
कम्माइँ वोसिरन्ता अतुट्टिरेणं तवेण सक्कन्ता ।
अफुडिअ-अचलिअ-महिमा आयरिआ दिन्तु ते वोहिं ॥६३॥

अभिमुखं च धावति सत्वरम् आयाति । तेभ्यः सर्वसिद्धेभ्यो नमः ॥ जेसु इति "द्वितीयातृतीययोः सप्तमी" [ ३.१३५ ] इति सप्तमी ॥

रोविराणं । नवन्ताण । "रुद-नमोर्वः" [ २२६ ] ॥

उव्वेवो । "उद्विजः" [ २२७ ]

६२. ये कुपथे अमार्गे । अनीताविति यावत् । धावन्ति । तथा ये खाद्यते यत् तत् खादं तस्य भावः खादत्वं न विद्यते खादत्वं यस्य तत् तथा अखाद्यं वस्तु खादन्ति । तैरपि समं यो धावति कुपथे गच्छति खादति अभक्षणीयं भक्षयति च । हु इति निश्चितम् । तमपि तादृशमपि प्राणिनं स्वयम् अधर्मम्[1] अधर्मविप्रलब्धं च । अस्मादृशम् इत्यर्थः । वोधयतो धर्मदेशनया सन्मार्गे प्रवर्तयत आचार्यान् ध्यायामि संस्मरामि ॥

धाइ।खाइ। "खाद-धावोर्लुक्" [२२८] ॥ बहुलाधिकाराद् वर्तमानाभविष्यद्विध्याद्येकवचन एव । तेनेह न । धावन्ति । अखादिमं । खादन्ति ॥ क्वचिन्न । धावइ ॥

६३. कर्माणि व्युत्सृजन्तः आत्मनो दूरीकुर्वन्तः । ननु अनादिकालालीनकर्मणां कथं व्युत्सर्ग इत्याह । अत्रोटिनां[3] अच्छिद्रुरेण । संपूर्णेनेति यावत् । तपसा शक्नुवन्तः सामर्थ्यं बिभ्रतः । अस्फुटितः अन्योजसा अखण्डितः अत एव अचलितः अकम्पितः । स्थिर इत्यर्थः । महिमा माहात्म्यं येषां ते तथा । ते सर्वप्रसिद्धा आचार्या बोधिं जिनधर्मावाप्तिं ददतु प्रयच्छन्तु ॥

1 B drops अखादिमं च खादन्ति. 2 CD स्वयमधर्मविप्र°. 3 BC अत्रोटिता.

फुट्टिअ-मोहो लोओ चल्लइ अपमिल्लिअ-व्वओ मोक्खे ।
जेहिं अपमीलिअच्छं पेच्छामो ते उवज्झाए ॥ ६४ ॥
अणउम्मिल्लिअ-नाणोम्मीलणआ हरिस-पसविरा लोए ।
सुअ-जलमोज्झाया पवरिसन्तु नित्थरिअ गुण-भरिआ॥६५॥

वोसिरन्ता । " रुजो र " [ २२९ ] ॥
अतुट्टिरेण । सक्कन्ता । " शकादीना द्वित्वम् " [ २३० ] ॥

६४. यै कृत्वा स्फुटित विदारितो मोहो येन स तथा । अपमीलितव्रत उद्बुद्धचारित्र लोको मोक्षे चलति गच्छति । तान् उपाध्यायान् अपमीलिताक्ष निर्निमेषनयन यथा भवति एव पश्याम । उपाध्यायदर्शने वय सतृष्णा इत्यर्थ ॥

अफुडिअ । अचलिअ । फुट्टिअ । चल्लइ । " स्फुटि चले " [२३१] ॥

६५ अनुन्मीलितम् अनुद्भूत यज्ज्ञान तस्य उन्मीलना व्यञ्जका । हर्षे प्राणिप्रमोद प्रसवितार जननशीला । विस्तृता सर्वत्र प्रसृता ये गुणास्तैर्भृता निचिता उपाध्याया लोके जनमध्ये श्रुतमेव निर्मलपावित्र्यहेतुत्वात् जल प्रवर्षन्तु । निर्वृतिफलोत्पत्तये अस्मभ्यं प्रयच्छन्त्वित्यर्थ ॥

अपमिल्लिअ । अपमीलि न । अणउम्मिलिअ । उम्मीलणआ । "प्रादेर्मीले " [२३२] ॥

पसविरा । " उवर्णस्याव [ २३३ ] ॥
निथरिअ । भरिआ । " ऋवर्णस्यार " [ २३४ ] ॥
पवरिसन्तु । " वृषादीनामरि " [ २३५ ] ॥

---

१ BC °न्ओ २ B om this and the following example
३ BC om this example ४ C °णओ, B उम्मी for उम्मीलणआ
५ C प्रादेम°.

नो रूसइ नो तूसइ जेऊण मणं लयम्मि जो नेन्तो ।
मोत्तुं भवं विणीअं तं साहु-जणं नमंसामि ॥ ६६ ॥
उप्पाइअ-सद्दहणो असद्दहाणे वि देइ जो बोहिं ।
संसार-नासिरो हं तं साहुं चिय विहेमि गुरुं ॥ ६७ ॥
पञ्च वि अरहन्ताइं परमेट्ठी झाह झाअह किमन्नं ।
होऊण निव्विकप्पा पसम-रया होअऊण तहा ॥ ६८ ॥

६६. यो भवं मोक्तुं त्यक्तुं मनो जित्वा वशीकृत्य लये साम्यावस्थायां नयन् सन् नो रुष्यति अमित्रे रोषं न करोति । नो तुष्यति मित्रे तोषं न करोति । तं विनीतं जितेन्द्रियं साधुजनं नमस्यामि ॥

रूसइ । तूसइ । " रुषादीना दीर्घः " [ २३६ ] ॥

जेऊण । नेन्तो । मोत्तुं । " युवर्णस्य गुणः " [ २३७ ] ॥ क्वचिन्न । विणीअं ॥

६७. अश्रद्दधाने जिनप्रणीतजीवादिपदार्थे तथेति प्रत्ययरहितेपि उत्पादितश्रद्दधानः जनितास्तिक्यबुद्धिर्यो बोधिं ददाति । संसाराद् नशिता नशनशीलोहं तमेव साधुं गुरुं विदधामि ॥

सद्दहणो । असद्दहाणे । "स्वराणा स्वराः" [ २३७ ] ॥ क्वचिन्नित्यम् । देइ । नासिरो । विहेमि ॥

रूसइ । तूसइ । " व्यञ्जनाद् अद् अन्ते " [ २३९ ] ॥

६८. भो भव्याः निर्विकल्पाः एते ध्येया न वेति संशयरहिता भूत्वा तथा प्रशमरता उपशमपरा भूत्वा पञ्चापि अर्हदादीन् ध्यायत । किमन्यं

---

१ B om. असद्दहाणे°. २ BC होइऊण. ३ BC put रूसइ । तूसइ । " व्यञ्जनाद् अद् अन्ते " after विणीअं । and before सद्दहणो &c; A, Pischel and the Bombay edition all read स्वराणां स्वराः । व्यञ्जनाददन्ते ॥

जिणउ कलिं अघ चिणिअं धुणिअ-सिरं सुणिअ-गुण-गणा थुणिआ
इन्देहि वि जग-पुणंणी सुअ-देवी सयल-अघ-लुणणी ॥ ६९ ॥

सो हुणइ भप्प-मज्झे ख-पुप्फमुचेइ पङ्कयाइँ थले ।
तह उच्चिणेइ मोत्तुं सुअ-देविं महइ जो अन्नं ॥ ७० ॥

हरिहरादिकं ध्यायत । हरिहरादिध्यानम् अपहाय अर्हद्ध्यानपरा भवतेति भावः ॥

झाह । झाअह । होऊण । होअऊँण । "स्वराद् अनतो वा" [ २४० ] ॥

६९. श्रुतगुणगणा सकलजनश्रवणगोचरप्राप्तवरप्रदानादिगुणनिचया इन्द्रैरपि आस्ताम् अन्यैः धुतशिरो यथेत्येवं स्तुता श्लाघिता जगतः पवनी पावित्र्यजनिका सकलाघस्य लवनी विच्छेदिका श्रुतदेवी अघेन चितं स्फीतं कलिं कलहं जयतु । आश्रितम् अस्मादृशं निर्मत्सरं विदधात्वित्यर्थः ॥

७०. स पुरुषो भस्ममध्ये जुहोति हवनं करोति । खपुष्पम् उच्चिनोति । तथा पङ्कजानि स्थले उच्चिनोति । यः श्रुतदेवीं मुक्त्वा अन्यां महति पूजयति काङ्क्षति वा । श्रुतदेवीतोन्यासां देवतानाम् आराधनं भस्महुतादिकल्पम् इत्यर्थः ।

जिणउ । चिणिअं । धुणिअ । सुणिअ । थुणिआ । पुणणी । लुणणी । हुणइ । "चि-जि-श्रु-हु-स्तु-लू-पू-धूगां णो ह्रस्वश्च" [२४१] ॥ बाहुलकात् क्वचिद् वा । उच्चेइ उच्चिणेइ ॥

---

१ B थुदिय. २ BC °पुलणी. ३ C भत्थ°. ४ D अर्हदादिध्यान°. ५ BC होइऊण; The *Dhundhikā* has: एच क्त्वातुमुन्तव्य° [III. 157 ]॥ अत्। इ। होऊण। होइऊण।.

लक्खेहिँ पि हुणिज्जइ हुव्वइ कोडीहिँ अहव मन्ताणं ।
सुअ-देवया थुणिज्जइ न जा न ता चिव्वए नाणं ॥ ७१ ॥
तेण चिणिज्जइ नाणं जिव्वइ मोहो जिणिज्जए कालो ।
सुअ-देवी अन्नेहि वि थुव्वन्ता सुव्वए जेण ॥ ७२ ॥
स-जसं सयं सुणिज्जइ लुव्वइ कम्मं लुणिज्जए पावं ।
पुव्वइ अप्पप्प-कुलं पुणिज्जए महिअ सुअ-देविं ॥ ७३ ॥
भव-भय-धुव्वन्तेहिँ पवण-धुणिज्जन्त-तूल-तरलस्स ।
फलमाउअस्स चिम्मइ सुअ-देवीए पसाएण ॥ ७४ ॥

७१. मन्त्राणां लक्षैर्हूयते । अथ वा कोटिभिर्हूयते । कामपि देवताम् उद्दिश्य होमः क्रियते । परं न यावच्छ्रुतदेवता स्तूयते न तावत् ज्ञानं चीयते वृद्धिम् उपैति । अत्र कर्मकर्तरि क्यात्मनेपदे ॥

७२. येन आस्तां यत् स्वयं स्तूयते अन्यैरपि स्तूयमाना श्रुतदेवी श्रूयते तेन पुरुषेण ज्ञानं चीयते स्फीतीक्रियते । मोहः अज्ञानं जीयते पराभूयते तथा कालो मृत्युश्च जीयते अचिराद् मोक्षप्राप्तेः ॥

७३. महित्वा पूजयित्वा श्रुतदेवीम् स्वयशः स्वयं श्रूयते । स्वयश्रोतव्यतया श्लाघ्यं यशस्तेन लभ्यत इत्यर्थः । कर्म लूयते । पापं लूयते । आत्मा पूयते । पवित्रः क्रियते । आत्मकुलं पूयते । अर्चकपुरुषेणेति शेषः ॥

७४. भवभयेन धूयमानैः कम्पमानपुरुषैः पवनेन धूयमानं यत् तूलं रूतं तद्वत् तरलं चञ्चलं तस्य आयुषः फलं श्रुतदेव्याः प्रसादेन चीयते उपचितं क्रियते । परमपुरुषार्थमहानन्दः प्राप्यत इत्यर्थः ॥

---

१ C पवद. २ B श्रूयते. ३ B स्तूयते. ४ BC रुत. ५ C चमर°; D चरम°.

चिव्वइ अह न चिणिज्जइ जिव्वइ अहना जिणिज्जए नावि ।
सुव्वइ अह न सुणिज्जइ हुव्वइ नं हुणिज्जए अहवा ॥ ७५ ॥
थुव्वइ अह न थुणिज्जइ पुव्वइ णाइं पुणिज्जए अहवा ।
लुव्वइ अह न लुणिज्जइ धुव्वइ न धुणिज्जए अहवा ॥७६॥
हम्मइ अह न हणिज्जइ हम्मइ नो वा हणिंज्जए जेण ।
सव्वं पि तस्स सहलं सुअ-देवि-विइण्ण पुण्णस्स ॥ ७७ ॥

७५ त्रिभिर्विशेषकम् । येन चीयते अध्यात्मादिपु उपचितेन भूयते । अथ वा न चीयते । जीयते । इन्द्रियादिपु वशिना भूयत इत्यर्थ । अथ वा नापि जीयते । श्रूयते गुरुमुखात सर्वशास्त्रेपु श्रवण क्रियते । अथ न श्रूयते । हूयते हवन क्रियते अथ वा न हूयते ।

७६ स्तूयते देवतादिपु स्तवन क्रियते । अथ न स्तूयते । पूयते जलादिना पवित्रेण भूयते । अथ वा न पूयते । लूयते अशुभलवन क्रियते । अथ न लूयते । धूयते पापरज प्रकम्पनपरेण भूयते । अथवा न धूयते ॥

७७ खन्यते निध्यादिनिमित्त भूम्यादिखनन क्रियते । अथ न खन्यते । हन्यते शत्रुविनाशन क्रियते नो वा हन्यते । पर श्रुतदेवी-वितीर्णपुण्यस्य तस्य । अपिरेवार्थे । सर्वमेव सफलम् । यत् किंचित् कुर्वतोपि श्रुतदेवीप्रसादात् सर्व समीहित तस्य सजायत इत्यर्थ ॥

हुणिज्जइ हुव्वइ । थुणिज्जइ थुव्वंता । चिव्वए चिणिज्जइ । जिव्वइ जिणिज्जए । सुव्वए सुणिज्जइ । लुव्वइ लुणिज्जए । पुव्वइ पुणिज्जए । धुव्व तेहिं धुणिज्ज[illegible] । चिव्वइ चिणिज्जइ । जिव्वइ जिणिज्जए । सुव्वइ । सुणिज्जइ । हुव्वइ । हुणिज्जए । थुव्वइ

---

१ B om °इ जिव्वइ अहवा जिणिज्ज° २ C नु ३ B हणज्जइ ४ B om अथ न to क्रियते ५ B om पुणिज्जइ ६ BC put थुव्वंता before थुव्वए ७ B om जिव्वइ जिणिज्जए ८ B om सुव्वए

खम्मइ कुबोह-सेलो खणिज्जए मूलओ वि पाव-तरू ।
हम्मइ कली हणिज्जइ कम्मं सुअ-देवि-झाणेण ॥ ७८ ॥
सुअ-देविं झाअन्तो अव्वाहय-भत्ति-निच्चल-मणेण ।
हम्मइ संसार-दुहं मोहं हन्तूण हन्तव्वं ॥ ७९ ॥
दुब्भउ गाई वुब्भउ भारो लिब्भउ खडं च तेणं खु ।
पवयण-गाई-बोहि-क्खीरं न दुहिज्जए जेण ॥ ८० ॥

थुणिज्जइ । पुव्वइ । पुणिज्जए । लुव्वइ लुणिज्जइ । धुव्वइ धुणिज्जए[1] । "न वा कर्मभावे व्वः क्यस्य च लुक्" [ २४२ ] ॥

चिम्मइ चिव्वइ चिणिज्जइ[2] । "म्मश्चेः" [ २४३ ] ॥

७८. श्रुतदेवीध्यानेन कृत्वा पुरुषेण कुबोध एव सन्मार्गरोधकत्वात् शैलः खन्यते विदार्यते । पापमेव अशुभफलदायित्वात् तरुः मूलतोपि खन्यते । कलिः राटिर्हन्यते क्षिप्यते । कर्म ज्ञानावरणादि हन्यते ॥

७९. अव्याहता अखण्डिता या भक्तिस्तस्यां निश्चलं यद् मनस्तेन कृत्वा श्रुतदेवीं ध्यायन् सन् हन्तव्यम् अपायजनकत्वाद् ध्वंसनीयं मोहम् अज्ञानं हत्वा संसारदुःखं हन्ति मोहमूलत्वात् संसारदुःखस्य ॥

खम्मइ । खणिज्जइ । हम्मइ । हणिज्जए[3] । खम्मइ । खणिज्जए[4] । हम्मइ । हणिज्जइ । "हन्खनोऽन्त्यस्य" [ २४४ ] ॥ बाहुलकात् हन्तेः कर्तर्यपि । हम्मइ ॥ क्वचिन्न । हन्तूण । हन्तव्वं ॥

८०. येन प्रवचनरूपा गौरेव[5] गौः बोधिमेव क्षीरं न दुह्यते क्षार्यते । तेन पुरुषेण खु इति निश्चितम् गौर्दुह्यताम् । भार उह्यताम् । खटस्तृणानि[6] लिह्यताम् । कर्तव्यकरणविकलस्य तस्य आभीरभारवाहकवलीवर्दभाव एव परमार्थत इति भावः ॥

---

1 B °इ. 2 BC चिणिज्जए. 3 BC °इ. 4 B °इ. 5 B गौरेव. 6 C °स्तृणेमे.

जेण वहिज्जइ हिअए सुअ-देवी तेण रुब्भए कम्मं।
रुन्धिज्जइ कलि-ललिअं लिहिज्जए अमयमाकण्ठं ॥ ८१ ॥
डज्झइ भवो डहिज्जइ पावं ताणं खु वज्झइ न धम्मो।
वन्धिज्जइ जेहि थुई पवयण-देवीइ भावेणं ॥ ८२ ॥
भावाउ जाणुरुज्झइ अणुरुन्धिज्जइ थवाउ पूआए।
उवरुज्झइ उवरुन्धिज्जइ तवओ सा जयउ वाणी ॥ ८३ ॥

८१. येन हृदये श्रुतदेवी उह्यते धार्यते तेन पुरुषेण कर्म रुध्यते निवार्यते। कलिललितं कलिकालविजृम्भितं रुध्यते। अमृतम् आकण्ठं लिह्यते आस्वाद्यते। निर्वृतेन भूयत इत्यर्थः ॥

दुब्भउ दुहिज्जए। वुब्भउ वहिज्जइ। रुब्भए रुन्धिज्जइ। लिब्भउ लिहिज्जए। " ब्भो दुह-लिह वह-रुधामुच्चातः " [ २४५ ] ॥

८२. यैर्भावेन प्रवचनदेव्याः स्तुतिर्बध्यते प्रबध्यते। खु इति निश्चितम्। तैः पुरुषैर्भवो दह्यते भस्मसात् क्रियते। विनाश्यत इति यावत्। पापं दह्यते तथा धर्मो न बध्यते कर्मान्तरेण नावष्टभ्यते ॥ ताणं इति तृतीयायाः षष्ठी ॥

डज्झइ डहिज्जइ। " दहो ज्झः " [ २४६ ] ॥
वज्झइ वन्धिज्जइ। " बन्धो न्धः " [ २४७ ] ॥

८३. सा वाणी वाग्देवता जयतु सर्वोत्कर्षेण वर्तताम्। या भावाद् अन्तरङ्गबहुमानतः अनुरुध्यते प्रसाद्यते। सुप्रसन्ना क्रियत इति यावत्। स्तवाद् अनुरुध्यते। पूजाया अर्चनाद् उपरुध्यते अनुपूज्यते। तपसो द्वादशविधतपश्चरणाद् उपरुध्यते ॥

---

१ C थवाअ. २ B om. this example. ३ B om. this example. ४ B बंधो ध, C बधो ब.

भत्ती-संरुज्झन्ता संरुन्धिज्जन्तआण मोहेण ।
न कह वि अवगम्मन्ती सुअ-देवी देउ मह बोहिं ॥ ८४ ॥
भण्णन्ती सुअ-देवि त्ति भणिज्जन्ती ति-लोअ-माअ त्ति ।
कम्मेण व भावेणाणुगम्ममाणा दिसउ कज्जं ॥ ८५ ॥
भत्तीए कीरन्तीइ अहीरन्तीइ सइ हरिज्जन्ती ।
वेडी-करिज्जमाणा तीरन्ते मोह-जलहिम्मि ॥ ८६ ॥

८४. भक्त्या संरुध्यमाना आत्मायत्तीक्रियमाणा । तथा मोहेन संरुध्यमानैर्न कथमपि अवगम्यमाना ज्ञायमाना श्रुतदेवी मह्यं बोधं सर्वपदार्थविषयविज्ञानं ददातु ॥

अणुरुज्झइ अणुरुन्धिज्जइ । उवरुज्झइ उवरुन्धिज्जइ । संरुज्झन्ता संरुन्धिज्जन्तआण । " समनूपाद् रुधेः " ॥ [ २४८ ]

८५. श्रुतदेवतेति भण्यमाना उत्कीर्त्यमाना त्रिलोकमातेति भण्यमाना । वेति चार्थे । कर्मणा पूजादिक्रियया भावेन[1] अन्तरङ्गबहुमानेन अनुगम्यमाना आश्रीयमाणा भगवती सरस्वती कार्यं प्रस्तावाद् मम कुमारपालस्य विधेय दिशतु आज्ञापयतु ॥

अवगम्मन्ती । भण्णन्ती । भणिज्जन्ती । अणुगम्ममाणा । " गमादीनां द्वित्वम् " [ २४९ ] ॥

८६. अथ कुमारपालभूपस्य कर्तव्यम् उपदिशत्विति मनोरथानन्तरोपस्थितश्रुतदेवतादर्शनं गाथाषट्केनाह । षड्भिः कुलकम् । अथ प्रयोजनपृच्छानन्तरं प्रशमाक्रान्तस्य उपशमव्याप्तस्य नृपोत्कृष्टस्य भूपपुंगवस्य कुमारपालस्य श्रुतदेवी प्रत्यक्षा दृष्टिगोचरासीत्

---

१ D भावेन च अन्त°.

अजरिज्जन्त-मयं पि हु जीरन्त-मयं जयं पि पकुणन्ती ।
पतरिज्जन्त-भवोदहि-सेऊवम-चरण-रेणु-कणा ॥ ८७ ॥
जेहि विढप्पइ कित्ती विढविज्जइ जेहि उज्जलं नाणं ।
अज्जिज्जइ जेहि सिरी सव्वेहि वि तेहि झायव्वा ॥ ८८ ॥
सव्वं णव्वइ जेहिं अणज्जमाणा बुहेहि तेहिं पि ।
अमुणिज्जन्त-सरूवा [1]सिद्धेहि वि वाहरिज्जन्ती ॥ ८९ ॥

किंभूता । [2]अह्रियमाणया अन्येनानपास्यमानया । निश्चलयेति यावत् । क्रियमाणया विधीयमानया भक्त्या अन्तरङ्गबहुमानेन कृत्वा सदा ह्रियमाणा आवर्ज्यमाना । आत्मसात् क्रियमाणेत्यर्थः । मोहोऽज्ञानम् तदेव जलधिस्तस्मिंस्तीर्यमाणे लङ्घ्यमाने वेडा प्रवहणं क्रियमाणा । संसाराद् उत्तितीर्षुभिराश्रीयमाणेत्यर्थः ॥

८७. हु इति निश्चितम् । जगदपि न जनमात्रम् अजीर्यमाणमद-मपि अभ्रश्यमानाभिमानमपि जीर्यमाणमदम् । विनयपरम् इत्यर्थ[3] । प्रकुर्वती विदधाना प्रतीर्यमाण[3] आराधकैर्विलङ्घ्यमानो यो भवो-दधिस्तत्र निस्तारकत्वात् सेतूपमाश्चरणरेणुकणा यस्याः सा तथा ॥

८८. यैः कीर्तिरर्ज्यते आसाद्यते यैरुज्ज्वलं निर्मलं ज्ञानम् अर्ज्यते यैः श्रीरर्ज्यते तैः पुरुषैः सर्वैरपि ध्यातव्या ॥

८९. यैः सर्वमपि ज्ञायते तैरपि बुधैरज्ञायमाना एवंस्वरूपेत्य-बुध्यमाना । सिद्धैरपि अणिमाद्यैश्वर्यसंपन्नपुरुषैरपि अज्ञायमानस्वरूपा व्याह्रियमाणा भण्यमाना । श्रुतदेवताध्यानेनैव कीर्तिज्ञाने संपद्येते इत्यर्थः ॥

---

१ BD सव्वेहि वि, C पदेहि वि २ B अह्रियमाणयाऽन्येनानपा°; C अ-ह्रियमाणयोऽन्येनानरा°, D अपह्रिय°. ३ BC °यन्. ४ C °इत्यात्.

वाहिप्पन्ताढप्पन्त-मङ्गले गिण्हणिज्ज-अभिहाणा ।
आढविअ-थुईहि सया सिप्पन्ती भत्ति-घिप्पन्ती ॥ ९० ॥
सुर-वहु-छिप्पन्त-पया छिविज्जमाणा थुईहि सुअ-देवी ।
पसमाप्फुंण्णस्स निवोर्कुसस्स अह आसि पच्चक्खा ॥ ९१ ॥

९० व्याह्रियमाणं नैमित्तिकादिना भण्यमानम् आरभ्यमाणं वन्ध्वादिना क्रियमाणं च यन्मङ्गलं शुभकार्यं तस्मिन् गृह्यमाणाभिधाना त्वत्प्रसादान्निर्विघ्नं भवत्विति उत्कीर्त्यमाननामा । आरब्धस्तुतिभिः भक्तजनकृतस्तवनैः कृत्वा सदा स्निह्यमाना स्निह्रेरन्तर्भूतण्यर्थत्वात् स्नेहवती क्रियमाणा । सिच्यमाना स्तावकेन आत्मनि आर्द्रहृदया क्रियमाणा । भक्त्या गृह्यमाणा आत्मसात् क्रियमाणा । न दुराराधेत्यर्थः ॥

९१. सुरवधूभिः स्पृश्यमानौ प्रणामावसरे भालेन घृष्यमाणौ पादौ यस्याः सा । तथा स्तुतिभिः कविस्तोत्रैश्च स्पृश्यमाना विषयीक्रियमाणा॥

कीरन्तीइ । अहीरन्तीइ । हरिज्जन्ती । करिज्जमाणा । तीरन्ते । अजरिज्जन्त । जीरन्त । पतरिज्जन्त । " ह्र-कृ तृ-ज्रामीरः " [ २५० ] ॥

विढप्पइ विढविज्जइ अज्जिज्जइ । " अर्जेर्विढप्पः " [ २५१ ] ॥
णव्वइ । अणज्जमाणा । अमुणिज्जन्त । " ज्ञो णव्व णज्जौ " [ २५२ ] ॥
वाहरिज्जन्ती वाहिप्पन्त । " व्याहृगेर्वाहिप्पः " [ २५३ ] ॥
आढप्पन्त आढविअ । " आरभेराढप्पः " [ २५४ ] ॥
सिप्पन्ती । " स्निह-सिचोः सिप्पः " [ २५५ ] ॥
गेण्हणिज्ज घेप्पन्ती । " ग्रहेर्घेप्पः " [ २५६ ] ॥

---

१ B °पुण्णस्स; C °पुणस्स. २ B °दसस्स. ३ B हासि. ४ BCD °दाद-निर्वि°. ५ BC °तेनर्थत्वा° for °तण्यर्थत्वा°. ६ C स्तव°.

अणथक्न्त-गिराए अमयासागणुहारिणीइ तदो ।
इअ उत्तं देवीए वच्छल्लेणं महन्देणं ॥ ९२ ॥
तइ इन्दो निचिन्दो विहरदु अन्तेउरम्मि सो दाव ।
इन्दस्स ताव मित्तं हवेसि महि-मासिआ तुमयं ॥ ९३ ॥

छिप्पन्त छिविज्जमाणा । "स्पृशेश्छिप्प" [ २५७ ] ॥
अप्फुण्ण । उक्कुसस्स । "क्तेनाप्फुण्णादय" [ २५८ ] ॥

९२ ततो नृपप्रत्यक्षानान्तर महता वात्सल्येन अनुकूलतया देव्या श्रुतदेवतया[3] । अमृतस्य आमार वेगनद्दर्पस्तम् अनुहरति सदृशीकरोतीत्येवंशीला णिनि ङ्याम् अनुहारिणी तया अर्फक्न्ती अन्तरा अनुत्क्रन्ती या गीर्वाक् तया कृत्वा इति वक्ष्यमाणम् उक्तम् ॥

अणथक्न्त । "धातवोर्थान्तरेपि" [ २५९ ] ॥ केचित् कैश्चिद् उपसर्गैर्नित्यम्[6] । अणुहारिणीइ ॥

[ इति ] प्राकृतभाषा समाप्ता ॥

तदो । "तो दोऽनादौ शौरसेन्याम् अयुक्तस्य" [ २६० ] ॥ अयुक्तस्येति किम् । उत्त ॥

९३. उक्तमेव गाथाष्टकेनाह । त्वया कृत्वा । तावद् इति अभ्युप

---

१ BCD स्पृश°. २ B अापुन । उक्ुगस्स । चेनापुन्नदय. ।, C अफुन्न । उक्ोगस्स । नेन पुन्न दय । A reads the sūtra thus क्तेनाफुन्नादय । ३ B °देवया. ४ BC क्षर्प° ५ BC उपमग ६ After उपसर्ग which it reads for उपसर्गै , C differs from B up to the end of the Sarga, giving a different commentary from the latter See Note at the end of the Sarga.

हंहो मणस्सि रायं जं अव भयवं ति विन्नवेदि भवं ।
रक्खिज्जसु तेण तुमं जिण-वइणा मेइणी-मघवं ॥ ९४ ॥
अय्यावत्ते सयले कद-कज्जो तं खु थाम-सिरि-णाह ।
जिण-नाध-सुमरणे इधमज्जिद-इह-लोअ-पर-लोअ ॥ ९५ ॥

गमे । ततश्च अभ्युपगतम् एतत् । स विश्वप्रसिद्ध इन्द्रो निश्चिन्तः । एतदरातीनां सकलदानवानां त्वया हननाद् निःशङ्कः सन् अन्तःपुरे विहरतु रमताम् । तथा तुमयं इति अयं त्वम् । अथ वा युष्मदः सिना सह तुमयं इति कश्चित् तदा तुमयं इति त्वम् । हे महीस्वामिन् पृथ्वीपते इन्द्रस्य तावद् मित्रं बान्धवो भवसि संजातः । भवसीति सत्सामीप्ये [है०. ५. ४] इत्यादिना वर्तमाना ॥

महन्देणं । निचिन्दो । अन्देउरम्मि । " अधः क्वचित् " [२६१] ॥

दाव ताव । " वादेस्तावति । " [२६२] ॥

९४. मनस्विन् अभिमानिन् हंहो राजन् भवान्, अत्र भगवन् इति, यं विज्ञपयति भक्तिपूर्वं वदति । तेन जिनपतिना मेदिनीमघवन् त्वं रक्ष्यस्व त्रायस्व । तेन तत्र पालनं क्रियताम् इति यावत् ॥

महि-सामिआ । मणस्सि । " आ आमन्त्र्ये सौ वेनो नः" [२६३] ॥

रायं । " मो वा " [२६४] ॥

भयवं । भवं । " भवद्भगवतोः" [२६५] ॥ क्वचिद् अन्यत्रापि । मघवं ॥

९५. स्थामश्रीः पराक्रमलक्ष्मीः तस्या नाथ इह अस्मिन् जगति जिननाथस्मरणे सति अर्जितेहलोकपरलोक सफलीकृतेहपरभव गु निश्चितं सकले आर्यावर्ते समस्तार्यजनपदेपु त्वं कृतकृत्यः निष्पन्नप्रयोजनः ॥

---

१ B तरसा°; C wanting.

तायध समग्ग-पुहविं तायह सग्गं पि भोदु तुह भद्दं ।
होदु जयस्सोत्तंसो तुह कित्तीए अपुरवाए ॥ ९६ ॥
सत्तीइ अपुव्वाए होदूण हरि व्व हविय सेसो व्व ।
होत्ता भरहो व्व तुमं एग-च्छत्तं कुणसु रज्जं ॥ ९७ ॥
करियावणि-उद्धारं गुरु-भावं गडुय कडुय वलि-वन्धं ।
गच्छिय लच्छिमुविन्दो भोदि भवं भोदु इन्द-समो ॥९८॥

अय्यावत्ते कज्जो । " न वा र्यो य्यः" [२६६] ॥

सिरि णाह जिण-नाध । " थो धः" [२६७] । अपदादावित्येव । थाम ॥

९६. हे नरेन्द्र समग्रपृथिवीं त्रायस्व पालय । स्वर्गं दिवमपि त्रायस्व। तथा तव भद्रं भवतु । तव अपूर्वया लोकोत्तरया कीर्त्या कृत्वा जगत उत्तंसः शिरःशेखरश्च भवतु ॥

इध इह । तायध तायह । " इह-ह्चोर्हस्य " [२६८] ॥

भोदु होदु । " भुवो भः " [२६९] ॥

९७. अपूर्वया शक्त्या पराक्रमेण कृत्वा हरिः इन्द्रः कृष्णो वा स इव भूत्वा संपद्य शेषः अनन्तः स इव भूत्वा भरतः आद्यचक्री स इव भूत्वा च त्वम् एकच्छत्रं राज्यम् आधिपत्यं कुरु ॥

अपुरवाए अपुव्वाए । " पूर्वस्य पुरवः " [२७०] ॥

होदूण । हविय । होत्ता । "क्त्व इय-दूणौ" [२७१] ॥

९८. अवनेः उद्धारं द्विपद्विपद्भ्यो रक्षणं कृत्वा गुरुभावं गत्वा बलिनां बन्धं कृत्वा लक्ष्मीं गत्वा आसाद्य च भवान् उपेन्द्रो भवति। यतः सोपि कृतप्रलयकालसमुद्रमग्नपृथिव्युद्धारः बलिबन्धने संजातमहाप्रमाणः विहितबलिदानवबन्धः समासादितलक्ष्मीकश्चेति । तथा भवतु भवान् इन्द्रसमः । परमैश्वर्येण अधुना शक्रकल्पः संजायताम् इति भावः ॥

१ BD °दादिदे°. २ C इर्ध. ३ D °वं गोरवं ग°.

अम्हेहि तुह पसंसा किज्जदि अन्नेहि किज्जदे न कहं ।
कित्ती रमिस्सिंदि तुहा सग्गादु रसातलादो वि ॥ ९९ ॥
दाणिं तुह तुट्ठा ता देमि वरं इअ-तुमम्मि जुत्तमिमं ।
जुत्तं णिमं खु मग्गसु इह किं णेदं ति मा चिन्त ॥१००॥
भणिओ निवो किमेदं तिहुयण-रज्जं पि तुमइ तुट्ठाए ।
तुज्झ य्येव पसाया सुरीओं हञ्जे त्ति भणन्ति ॥ १०१ ॥

करिअ । गड्डुअ । कड्डुअ । गच्छिअ । "कृ-गमो डड्डुअः" [ २७२ ] ॥
मोदि । " दिरिचेचोः " [ २७३ ] ॥

९९. हे महाराज अस्माभिः । सकललोकनमस्करणीयाभिरित्यर्थः । तव प्रशंसा श्लाघा क्रियते अतः कथम् अन्यैर्विबुधैः न क्रियते । अपि तु विधीयत एव । तथा तव कीर्तिः आ स्वर्गाद् आ रसातलादपि स्वर्गं रसातलं च व्याप्य रमिष्यते विचरिष्यति ॥

किज्जदि । किज्जदे । " अतो देश्च " [ २७४ ]॥ अत इति किम् । मोदि ॥
रमिस्सिंदि । " भविष्यति स्सिः " [ २७५ ]॥
सग्गादु । रसातलादो । " अतो ङसेर्डादो-डादू " [ २७६ ] ॥

१००. हे नृप इदानीं तव तुष्टा । तस्मात् त्वयि वरं ददामीति युक्तम् इदम् । युक्तं भगवत्या वरवितरणम् । परम् अहं कथं याच्ञां करोमी-त्याह । खु इति निश्चितम् युक्तम् इदम् । मम पार्श्वाद् याचनं समुचि-तम् इति भावः । अतो मार्गय वरं याचस्व । इह मयि विषये किम् एतद् इति मा चिन्तय । अस्याः सकाशात् किं वरमार्गणेन इतीदं मा पर्यालोचयेति भावः ॥

दाणिं । " इदानीमो दाणिं " [ २७७ ]॥
ता । " तस्मात् ताः " [ २७८ ] ॥

१०१. हे भगवति त्वया तुष्टया किम् एतद् वरप्रदानमात्रम् । न किंचिद् इत्यर्थः । यतस्त्रिभुवनराज्यमपि । आस्तां पृथिवीपतित्वमात्रम् इति

---
१ BD रमिस्सदि; C रम्मिस्सिदि. २ BD सग्गा°. ३ BD रमिस्सदि ।.

हीमाणहे देवि तुमं सि दिट्ठा हीमाणहे हं चकिदो भवादो।
णं अम्महे किं पि भणोवएसं हीही भणन्ता वि समन्ति जेण ॥

नृपो भणितः विज्ञपयितुम् आरब्धवान्। तथा तवैव प्रसादात् सुर्यो देव्य. हञ्जे त्ति चेटिका इति भण्यन्ते चेटिकावद् आहूयन्त इत्यर्थः ॥

जुत्तमिम जुत्तं णिम। किं णेद किमेद। "मोन्त्याण्णो वेदेतोः" [२७९] ॥

तुज्झ य्येव। "एवार्थे य्येव" [२८०] ॥

हञ्जे त्ति। "हञ्जे चेट्याह्वाने" [२८१] ॥

१०२. हीमाणहे इति आश्चर्ये। देवि श्रुतदेवते त्वं दृष्टा विलोकिता असि भवसि। हीमाणहे इति निर्वेदे। अतः निर्विण्णत्वाद् अहं भवात् चकितस्त्रस्त.। णमिति नन्वर्थे। अम्महे इति हर्षे। ततः हे भगवति ननु सहर्षं कमपि कंचन उपदेशं भण आदिश। येन उपदेशेन कृत्वा। हीहीति विदूषकाणां हर्षद्योतने। ततो हीही भणन्तः हर्षेण हीहीशब्दं कुर्वन्तः निरन्तरं हसनशीला विदूषका अपीत्यर्थः। शाम्यन्ति उपशमिनो भवन्ति। भण उपदेशम् इत्यनेन उत्तरसर्गार्थसूचनम्। इन्द्रवज्रा छन्द. ॥

हीमाणहे। हीमाणहे। "हीमाणहे विस्मय-निर्वेदे" [२८२] ॥

ण। "ण नन्वर्थे" [२८३] ॥

अम्महे। "अम्महे हर्षे" [२८४] ॥

हीही ॥ "हीही विदूषकस्य" [२८५] ॥

"शेष प्राकृतवत्" [२८६]। शौरसेन्या यत् कार्यम् उक्त ततोन्यत् प्राकृतवदिति। अतः जेणेति "टा आमोर्ण." [३.६] "टा-ण शस्येत्" [३.१४] च प्रवर्तते ॥

[इति] शौरसेनी भाषा समाप्ता ॥

इत्याचार्यश्रीहेमचन्द्रविरचितश्रीकुमारपालचरितप्राकृतद्व्याश्रय-
महाकाव्यवृत्तौ सप्तम. सर्गः समाप्तः ॥

१ BD कि वि. २ C भणोपदेसं. ३ BD आश्चर्ये. ४ D हे देवि. ५ BC °वरिदि, D °वरेव. ६ BCD टामोर्ण.

कधिदे शुभोवदेशे शलश्शदीए तदो अपस्खलिदे ।
भव-कस्ट-गिम्ह-पदहण-विघस्टणे शुस्टु-मेघे व ॥ १ ॥
अदिशुस्तिदं निविस्टे चदुस्त-वग्गं विवय्यिद-कशाए ।
शावय्य-योग-लहिदे शाहू शाहदि अणञ्ञ-मणे ॥ २ ॥

१. ततः नृपविज्ञप्तिकानन्तरं भवकष्टमेव ग्रीष्मप्रदहनं निदाघसंतापस्तस्य विघट्टणे अपनयने सुष्टुमेघ इव वर्षुकजलद इव । अप्रस्खलितः अबाधितः शुभोपदेशः सरस्वत्या कथितः प्रतिपादितः ॥

कधिदे । शुभोवदेशे । "अत एत् सौ पुंसि मागध्याम्" [ २८७ ] ॥
शलश्शदीए । "र-सोर्ल-शौ" [ २८८ ] ॥
अपस्खलिदे । कस्ट । "स-षोः संयोगे सोऽग्रीष्मे" [ २८९ ] ॥
अग्रीष्म इति किम् । गिम्ह ।
विघस्टणे । शुस्टु । "ट्ट ष्ठयोः स्टः" [ २९० ] ॥

२. उपदेशमेव एकाशीत्या गाथाभिराह । अतिसुस्थितम् अतिसमाहितं यथा भवति एवं निविष्टः धर्मध्याननिरतः अत एव विवर्जितकषायः क्रोधादिरहितः । सावद्ययोगरहितः सपापव्यापारवर्जितः। अनन्यमनाः मोक्षैकतानमानसः साधुः संयतः चतुर्थवर्गं निर्वाणं साधयति निष्पादयति । आत्माधीनम् आधत्त इति यावत् ॥

अदिशुस्तिदं । चदुस्त । "स्थ-र्थयोः स्तः" [ २९१ ] ॥
विवय्यिद । शावय्य-योग । "ज-द्य-यां यः" [ २९२ ] ॥

---

१ BD निविट्टे; C निविट्ठे. २ D विवर्जितः.

पुञ्ञे निशाद-पञ्ञे सुपञ्जले यदि-पधेण वञ्जन्ते ।
शयल-यय-वश्चलत्तं गश्चन्ते लहदि पलम-पदं ॥ ३ ॥
श-पल-निरुक्खा-लहिदे पेस्कन्ते सव्वमोल्ल-दिस्टीए ।
मिद पियमाचस्कन्ते चिष्ठदि मग्गम्मि मोस्कस्स ॥ ४ ॥
एदस्स वधं कलिमो भत्ति एदाह इदि मदी जाँहँ ।
ताणं दोण्हं पि हगे हिदे त्ति वुद्धी पउदव्वा ॥ ५ ॥

३ पुण्य सुकृती निशातप्रज्ञ कुशाग्रीयवुद्धि सुप्राञ्जल. कौटिल्यरहित यतिपथेन साधुमार्गेण व्रजन् प्रयान् सकलजगद्वत्सलत्व त्रिजगदानुकूल्य च गच्छन् समाचरन् सन् पुरुप परमपदं मुक्ति लभते प्राप्नोति ॥

अगन्न-मणे । पुन्ने।पन्ने । सुपन्नले । "न्य ण्य-ज्ञ ञा ञ्ज "[२९३]॥
वञ्जन्ते । " मजो ज " [ २९४ ] ॥
गश्चन्ते । " छस्य श्चोनादौ " [ २९५ ] ॥ लाक्षणिकस्यापि । वश्चलत्त ॥

४. स्वपरविवक्षारहित शत्रौ मित्रे च समभाव । अत एव सर्वं समस्तलोकम् आर्द्रदृष्ट्या सकरुणदृशा प्रेक्षमाण विलोकयन् मितं प्रिय च आचक्षाण वदन् मोक्षस्य मार्गे पदव्या तिष्ठति ॥

विवक्खा । मोक्खस्स । " क्षस्य ःक " [ २९६ ] ॥
पेस्कन्ते । आचस्कन्ते । " स्क प्रेक्षाचक्षो " [ २९७ ] ॥
चिष्टदि । " तिष्ठश्चिष्ठ " [ २९८ ] ॥

५. एतस्य वध कुर्म भक्तिम् एतस्य कुर्म इति मति आत्मान प्रति एव वुद्धिर्ययो । ताग दुण्हमिति षष्ठीसप्तम्यो अर्थ प्रत्यभेदात तयोर्द्वयोरपि विषये अह नय वा इति हिता वुद्धि प्रयोक्तव्या ।

१ None of the three MSS have taken care to distinguish all cases of *anunasika* by the particular concave mark २ BD पउदव्वा

पञ्ञान राचिञा गुन-निधिना रञ्ञा अनञ्ञ-पुञ्ञेन ।
चिन्तेतव्वं मतनाति-वेरिनो किळ विजेतव्वा ॥ ६ ॥
सुद्धाकसाय-हितयक-जित-करन-कुटुम्ब-चेसटो योगी ।
मुक्क-कुटुम्ब-सिनेहो न वलति गन्तून मुक्ख-पतं ॥ ७ ॥

अहमेवार्य वयमेव एते इत्यनुकूलः अभेदभावः करणीय इत्यर्थः । अत्र भक्तिकरणमतौ इति उपमानार्थः । अन्यथा भक्तिं चिकीर्षौ सर्वस्यापि आत्मभावो भवत्येव । ततश्च यथा भक्तिं चिकीर्षौ आत्मभावस्तथा जिघांसावपि कर्तव्य इति भावः ॥

एदस्स एदाह । " अवर्णाद्वा ङसो डाहः " [ २९९ ] ॥

जाँहँ । ताणं । " आमो डाहँ वा " [ ३०० ] ॥

हगे । " अहं-वयमोर्हगे " [ ३०१ ] ॥

"शेषं शौरसेनीवत्"[३०२]। मागध्या यदुक्तं ततोऽन्यत् शौरसेनीवद् द्रष्टव्यम्। अतः हिदे त्ति । " तो दोऽनादौ० " [४.२६०] इति तस्य दः । पयोद्दव्वा " अधः क्वचिद् " [ ४.२६१ ] इति तस्य दः ॥

[ इति ] मागधी भाषा समाप्ता ॥

६. प्राज्ञानां राज्ञा विचक्षणाधीशेन गुणनिधिना गाम्भीर्यौदार्यधैर्या-दिशेवधिना । न अन्यः पुण्यो यस्मात् स तथा । तेन राज्ञा नृपेण मदनादिवैरिणः आन्तराः षड् शत्रवः किल इति प्रसिद्धौ विजेतव्याः अभिभवनीया इति चिन्तयितव्यं पर्यालोच्यम् ॥

पञ्ञा । " ज्ञो ञ्ञः पैशाच्याम् " [ ३०३ ] ॥

राचिञा । [ रञ्ञा । ] ' राज्ञो वा चिञ् " [ ३०४ ] ॥

अनञ्ञ पुञ्ञेन । " न्य-ण्योर्ञ्ञः " ॥ [ ३०५ ]

गुन । वेरिनो । " णो नः " [ ३०६ ] ॥

मतनाति । विजेतव्वा । " त-दोस्तः " [ ३०७ ] ॥

किळ । " लो ळः " [ ३०८ ] ॥

७. शुद्धं निर्मलम् अकषायं क्रोधादिरहितं हृदयं यस्य । अत एव

[1] BCD जाणं.

यन्ति कमाया नत्थून यन्ति नद्धून सव्व-कम्माइं ।
सम-सलिल-सिनातानं उज्झित-कत-कपट-भरियान ॥ ८ ॥
यति अरिह-परम-मन्तो पेढिय्यते कीरते न जीव-वधो ।
यातिस-तातिस-जाती ततो जनो निव्वुतिं याति ॥ ९ ॥

करणानि इन्द्रियाणि तान्येव आत्मनो मोहजननात् कुटुम्बं तस्य चेष्टा स्वस्वविषये व्यापारः । जिता परास्ता करणकुटुम्बचेष्टा च येन स तथा मुक्तकुटुम्बस्नेहः परित्यक्तबन्धुवर्गानुरागः योगी शुभध्यानैकतानः संयमी मोक्षपदं गत्वा प्राप्य न वलते न संसारे समायाति ॥

सुद्धाकसाय । " शषोः सः. " [ ३०९ ] ॥

हितपक । " हृदये यस्य पः. " [ ३१० ] ॥

कुतुम्ब कुटुम्ब । " टोस्तुर्वा " [ ३११ ] ॥

गन्तून । " क्त्वस्तूनः. " [ ३१२ ] ॥

८. शम एव कोपसंतापहारकत्वात् सलिलम् । तेन स्नातानाम् । निर्धूतान्तरकुवासनामलानाम् इत्यर्थः । उज्झिता त्यक्ता कृतकपटा[2] दर्शितालीकस्नेहत्वाद् रचितनिकृतिः भार्या यैस्तेषां पुरुषाणां कषाया नष्ट्वा तान् मुक्त्वा यान्ति गच्छन्ति सर्वकर्माणि च नष्ट्वा यान्ति ॥

नत्थून । नद्धून । " द्धून त्थूनौ ष्ट्वः " [ ३१३ ] ॥

चेसटो । सिनेहो । सिनातान । भरियान । "र्य-स्न-ष्टां रिय-सिन-सटाः क्वचित्॥ [ ३१४ ] ॥

९. यदि अर्हताम् इत्युपलक्षणम् । अर्हदादीनाम् इत्यर्थः । परममन्त्रः । पञ्चपरमेष्ठिनमस्कार इति भावः । पठ्यते परावर्त्यते । जीववधश्च न क्रियते । ततः अर्हदादिमन्त्रगुणनात् जीववधविरतेर्वा यादृशतादृशजातिः हीनोत्तमकुलोऽपि जनो निर्वृतिं याति ॥

पेढिय्यते । " यस्य य्यः. " [ ३१५ ] ॥

---

१ BD °र्ष° २ BC कृतकपटा. ३ BC °र्ष°.

अच्छति रन्ने सेले वि अच्छते दढ-तपं तपन्तो वि ।
ताव न लभेय्य मुक्खं याव न विसयान तूरातो ॥ १० ॥
तूरातु नेन घेप्पति मुत्ति-सिरी नाइ योग-किरियाए ।
चत्तारि-मङ्गलं-पमुति-मन्तमुक्खोसमानेन ॥ ११ ॥

कीरते । "क्गो डीरः" [ ३१६ ] ॥

यातिस । तातिस । "यादृशादेर्दुस्तिः [ ३१७ ] ॥

याति । "इचेचः" [ ३१८ ] ॥

१०. अरण्य आस्ते शैलेपि आस्ते दृढं तीव्रं तपस्तप्यमानोपि कुर्वन्नपि । परं तावद् न मोक्षं लप्स्यते प्राप्स्यति यावद् विषयाणाम् । "क्वचिद् द्वितीयादेः" [ ३.१३४ ] इति पञ्चम्याः स्थाने षष्ठी । अतः विषयेभ्य इत्यर्थः । न दूरात् । विषयेषु यावद् न विरज्यतीत्यर्थः ॥

अच्छति । अच्छते । "आत् तेश्च"[ ३१९]॥ आत् इति किम् । याति ॥

लभेय्य । "भविष्यत्येय्य एव" [ ३२० ] ॥

११. चत्तारिमङ्गलं इति पदं प्रभृति यस्य चत्तारिमङ्गलं अरहन्ता मङ्गलं इत्यादिदण्डकस्य स तथा । स चासौ मन्त्रश्च तम् उद्घोषयता उच्चरता तेन सर्वोत्कृष्टपुरुषेण तथा योगक्रियया अर्हदादिध्यानानुष्ठानेन कृत्वा दूराद् मुक्तिश्रीः गृह्यते । अनायासेनापि सिद्धिः आत्मसात् क्रियत इति भावः ॥

तूरातो । तूरातु । "अतो ङसेर्डातो-डातू" [३२१] ॥

नेन । नाए । "तदिदमोष्टा नेन स्त्रियां तु नाए" [ ३२२ ]॥

"शेषं शौरसेनीवत्" [३२३]॥ पैशाच्यां यद् उक्तं ततोन्यत् शौरसेनीवत् भवत्[1] । तदुदाहरणानि चात्र स्वयम् अभ्यूह्यानि ॥

योग किरियाए । पमुति[2] । "न कगचजादि" [ ३२४ ] इत्यनेन कगचजादीनामादिसूत्रद्वयमन्तरेणान्यसूत्रैरुक्तं तत् न भवति ॥

[ इति ] पैशाची भाषा समाप्ता ॥

---

१ BC जेग. २ BCD पमिति.

चन्धू सठासठेसु वि आलम्पित-उपसमो अनालम्फो ।
सव्वञ्ञ-लाच-चलने अनुझायन्तो हवति योगी ॥ १२ ॥
झँच्छर-डमरुक-भेरी-ढक्का-जीमूत गफिर-घोसा वि ।
वम्ह-नियोजितमप्पं जस्स न दोलिन्ति सो धँञ्ञो ॥१३॥

१२. सर्वज्ञराजचरणान् अनुध्यायन् योगी अशठेषु अमायाविषु शठेष्वपि वन्धु. हितपरत्वाद् वान्धवकल्प आलम्बितोपशम आश्रित-शान्तभाव ।अनारम्भ विवर्जितसावद्यव्यापार. अनालम्भो वा परित्यक्त-जीववधो भवति ॥

उक्गोसमानेन । वन्धू । आलम्पित । अनालम्फो । सव्वञ्ञ लाच ।
"चूलिकापैशाचिके तृतीय-तुर्ययोराद्य द्वितीयौ " [ ३२५ ] ॥
सव्वञ्ञ लाच चलने । " रस्य लो वा " [ ३२६ ] ॥

१३. झँच्छरश्च अहाउजेति प्रसिद्ध. । डमरकश्च भेरी च दुन्दुभि ढक्का च पटह. । तेषां जीमूतवद् ये गम्भीरा मन्द्रा घोषा. शब्दा अपि। आस्तां रूपादय. । ब्रह्मनियोजितम् आत्मानं यस्य न दोलयन्ति न चालयन्ति । शब्दादिविषया यदात्मानं परमतत्त्वलीनं न क्षोभयन्तीति यावत् । स धन्य. ॥

झँच्छर । डमरुक । भेरी । ढक्का । जीमूत । गफिर । घोसा । नियोजित ।
"नादियुज्योरन्येषाम् " [ ३२७ ] ॥
" शेषं प्राग्वदिति " [३२८]॥ धँञ्ञो इत्यत्र "न्यण्योर्ञ्ञः "[४.३०५]॥

[ इति ] चूलिकापैशाचिकभाषा समाप्ता ॥

१ CD वंधू २ BC झच्छर ३ BC धन्नो ४ B आलंबिता ५ BC झच्छर°. ६ BC झच्छर°.

उब्भिय बाह असारउ सव्वु वि
म भमि कु-तित्थिअ-पट्ठें मुहिआ ।
परिहरि तृणु जिम्वँ सव्वु वि भव-सुहु
पुत्ता तुह मइ एउ कहिआ ॥ १४ ॥
गङ्गहें जॅम्णुँणहें भीतरु मेल्लइ
सरसइ-मज्झि हंसु जइ झिल्लइ ।
तय सो केत्थु वि रमइ पहुत्तउ
जित्थु ठाँइ सो मोक्खु निरुत्तउ ॥ १५ ॥

१४. हे पुत्र त्वं मया ऊर्ध्वबाहु यथा भवति एवमीदृक् एवंविधं कथितः । किं तत् तद् आह । सर्वमपि पुत्रमित्रकलत्रादिकम् असारं संसारदुःखात्राणतया तुच्छम् । तथा कुतीर्थिकपृष्ठेन मुधा मा भ्रम । परमपुरुषार्थलिप्सुः पापण्ड्याश्रितो मा भूः इति भावः । तथा तृणमिव सर्वमपि भवसुखं स्रक्चन्दनवनिताविषयशर्म परिहर । मा अत्र इच्छां कृथा इत्यर्थः । वदनकं छन्दः ॥

वाइ । पट्ठें । " स्वराणां स्वराः प्रायोऽपभ्रंशे " [ ३२९ ] ॥
पुत्ता । कहिआ । " स्यादौ दीर्घ-ह्रस्वौ " [ ३३० ] ॥
असारउ । सव्वु । तृणु । सव्वु । भव-सुहु । "स्यमोरस्योत्" [ ३३१ ]॥

१५. गङ्गायाः इडाया यमुनायाः पिङ्गलाया भीतरु इति शीघ्रादित्वाद् अभ्यन्तरं हंसः आत्मा मुञ्चति । ततः सरस्वत्यां सुषुम्णायाम् । मध्यमायाम् इति यावत् । हंसो यदा झिल्लइ इति तक्षादित्वाद् स्नाति । तदा स हंसः कुत्रापि कस्मिन्नपि स्थाने प्रभूतः प्राप्तः सन् रमते क्रीडति। यत्र सः अनाख्येयः मोक्षः महानन्दः । निरुत्तउ इति शीघ्रादित्वाद् निश्चिन्तस्तिष्ठति । यदुक्तम्

१ C पठें; D पट्ठे. २ B पुत्ता ह मइ एहउ. ३ BC भित्तरु. ४ D ठाइ.

केण वि जोग-पओगेंण कह वि हु
घरि रुद्धे सव्वेहिँ वि वारिहिँ।
जोअन्तहँ वि निहेलण नाहहु
घर-सव्व-स्सु वि निज्जइ चोरेंहिँ ॥ १६ ॥

मध्यमा सुषुम्णाख्याता सिद्धिनिर्वाणकारणम् इति।
इडापिङ्गलामध्यम् अपास्य यदा आत्मा सुषुम्णाभ्यन्तरम् आसादयति तदा सर्वत्र समभावत्वाद् मुक्तिम् आप्नोतीत्यर्थः ॥
इडा गङ्गेति विज्ञेया पिङ्गला यमुना नदी।
मध्ये सरस्वतीं विद्यात् प्रयागः सगमो मतः ॥
इति वाक्याद् गङ्गादीनाम् इडादिपर्यायत्वं नोद्धव्यम् ॥

हसु। सो। सो। मोक्खु। "सौ पुंस्योद् वा" [३३२] ॥ पुंसीति किम्। मीतरु ॥

१६. केनापि अनाख्येयेन योगप्रयोगेण बाह्यविनिवृत्तिरूपसमाधिविधानेन हेतुना कथमपि महता प्रयत्नेन सर्वैरपि आत्मनो बाह्यार्थं प्रति प्रवृत्तिहेतुत्वाद् द्वारैरिव द्वारैः। करणैरित्यर्थः। कृत्वा गृहे शरीरे रुद्धे नियन्त्रितेपि परं द्योतमानादपि जाग्रतोपि। सावधानादपीत्यर्थः। निहेलणेति देश्यो गृहे। तस्य नाथः आत्मा तस्माद् गृहस्य शरीरस्य सर्वस्वमपि तत्स्थात्मगतसमस्तज्ञानादिकमपि न तु स्तोकरम् चौरै रागादिभिर्नीयते गृह्यते। रागादियुक्तस्य तादृगपि ध्यानं न स्वार्थसंसिद्धये अलं भवतीति भावः। यत्र किल गृहे द्वाराणि स्थगितानि भवन्ति गृहपतिश्च जाग्रद् भवति तत्र नान्यचौरावकाशः। रागद्वेषादिचौरास्तु एवमपि प्रभवन्तीति ज्ञानादिरक्षणाय रागद्वेषादय एव हन्तव्या इति भावार्थः ॥

केण। पओगेण। "एटि" [३३३] ॥
घरि। रुद्धे। "ङिनेच" [३३४] ॥

---

१ BCD निहलणति २ D तत्स्थात्म°

करणाभासहुँ मणु उत्तारहु
करणाभासेँहिँ मुक्खु न कसु हि वि ।
आसणु सयणु वि सव्वहोँ करणेँहिँ
करणहुँ मुक्खु तोँ निरु सव्वस्सु वि ॥ १७ ॥
विसयहँ पर-वस मच्छहु मूढा
वन्धुहुँ सहिहुँ वि घङ्गलि छूढा ।
दुहुँ ससि-सूरिहिँ मणु संचारहु
वन्धुहेँ सहिहेँ व चढ विणु सारहु ॥ १८ ॥

सव्वेहिँ । वारिहिँ । " भिस्येद् वा " [ ३३५ ] ॥
जोअन्तहे । निद्देलग-नाहहु । ङसेर्हे-हू " [ ३३६ ] ॥

१७. भो लोकाः करणाभासेभ्यः यथोक्तपद्मासनादिविपरीतासनेभ्यः मनः उत्तारयत व्यावर्तयत । तानि मा कुरुतेत्यर्थः । हि यस्मात् कारणात् करणाभासैः कृत्वा न कस्यापि मोक्षः निर्वृतिर्भवति । तथा सर्वस्य योगिनः करणैः प्रशस्तपद्मासनादिभिः कृत्वा आसनं लगंडादिभिश्च कृत्वा शयनं निद्रा भवति । ततः तस्मात् करणेभ्यः सर्वस्यापि निरु इति निश्चितम् मोक्षः । निषिद्धासनपरिहारेण कर्मक्षपणार्थं पद्मासनादीनि कुर्वन् मुक्तिम् आप्नोतीत्यर्थः ॥

करणाभासहुं । " भ्यसो हुं " [ ३३७ ] ॥
कसु । सव्वहोँ । सव्वस्सु । " ङसः सु-हो-स्सवः " [ ३३८ ] ॥

१८. भो मूढाः विषयाणां परवशाः वन्धूनां बान्धवानां सखीनां मित्राणामपि । घङ्गलेति ग्रीष्मादित्वात् झगटके । मोहे इत्यर्थः । क्षिप्ताश्च पतिता माभ्वम् । तर्हि किं कुर्म इत्याह । द्वयोः शशिसूर्ययोः इडापिङ्गलयोः मनः संचारयत शुभभावाय तदन्तर्निवेशयत । तथा तृतीयायाः

१ BC °ओ; D °उ.

गिरिहें वि आणिउ पाणिउ पिज्जइ
तरुहें वि निवडिउ फलु भक्खिज्जइ ।
गिरिहुँ व तरुहुँ व पडिअउ अच्छइ
विसयहिं तह वि विराउ न गच्छइ ॥ १९ ॥
जइ हिम-गिरिहि चडेविणु निवडइ
अह पयाय-तरुहि वि इक्क-मणु ।
निकइअवें विणु समयाचारेंण
विणु मण-सुद्धिएँ लहइ न सिवु जणु ॥ २० ॥

षष्ठी [३.१३४] इति तृतीयायाः षष्ठी । अतो बन्धुभि सखिभिश्च विना । चढेति शीघ्रादित्वात् मूढा सारयत । धातूनाम् अनेकार्थत्वात् तिष्ठत ॥

विसयहं । " आमो हं " [ ३३९ ] ॥

बन्धुहुं । सहिहुं । बन्धुहं । सहिहं । "हुं चेदुद्भ्याम्" [३४०]॥ प्रायोधिकारात् क्वचित् सुपोपि हुं । दुहुं ॥

१९ गिरेरपि आनीतं पानीयं पीयते तरोरपि निपतितं फलं भक्ष्यते । तथा गिरिभ्यस्तरुभ्यो वा पतित्वा आस्ते तथापि विषयेषु न विरागं गच्छति । वनवास कालिंजरगिर्यादिप्रयागवटवृक्षादिपातोपि च सुकर । विरागवासना पुनर्दुष्करेति भाव ॥

२०. यदि हिमगिरौ आरुह्य अथ प्रयागतरौ प्रयागवटेपि आरुह्य एकमना. । पतने कृतनिश्चय इत्यर्थ । निपतति तथापि निर्वर्तितवेन समयाचारेण विना मन शुद्ध्या च विना न शिवं जनो लभते । गिरितरुभ्य पात कैवल्यम अज्ञभ्रमाय । सिद्धान्तोक्तानुष्ठानरागद्वेषराहित्ये च मुक्तये स्येये इति भावार्थ. ॥

गिरिहें । तरुहें गिरिहुं । तरुहुं । हिम-गिरिहि । पयाय तरुहि । "ङसि भ्यस्ङीनां हे-हुं-हयः" [ ३४१ ] ॥

निकइअवें । समयाचारेण । " " आट्टा णानुस्वारौ " [ ३४२ ] ॥

विणसइ माणुसु विसयासत्ति
डज्झइ तरु-गण जिम्वँ दावग्गिण ।
विसु जिम्वँ विसय पमिल्लिउ दूरें
अच्छहु चित्तें जोअ-विलग्गेंण ॥ २१ ॥
विसय म पसरु निरङ्कुसु दिज्जउ
लोअहों विसएँहिं मणु कड्डिज्जइ ।
मणु थम्भेविणु पवणि निजोजहु
मण-पवणिहिँ रुद्धहिँ सिज्झिज्जइ ॥ २२ ॥

२१. यथा दावाग्निना तरुगणा दह्यन्ते विनाश्यन्ते तथा विषयासक्त्या मनोज्ञशब्दादिलाम्पट्येन कृत्वा मानुषो विनश्यति । तथा विषं यथा विषयान् दूरेण प्रमुच्य योगविलग्नेन समाधिलीनेन चित्तेन आध्वं तिष्ठत ॥

मण-सुद्धिएँ । विसयासत्ति । दावग्गिण । " एं चेदुतः " [ ३४३ ] ॥
एवम् उतोपि दृश्यः ॥

माणुसु । तरु गण । विसु । विसय । "स्यम्-जस्शसां लुक्" [ ३४४ ] ॥

२२. भो लोकाः निरङ्कुशं निरर्गलं यथा भवत्येवं विषयाणां प्रसरः युष्माभिः मा दायि । विषया निरुध्यन्ताम् इत्यर्थः । ननु विषयप्रसरदाने किं भविष्यति इत्याह । विषयैर्मनः कृष्यते । स्वस्मिन् सतृष्णं क्रियत इत्यर्थः । तर्हि किं कुर्म इत्याह । मनः स्तम्भित्वा नियम्य पवने इडापिङ्गलान्तर्वहमानवायौ नियुङ्ध्वम् । मनसा पवनम् अवष्टभ्नीतेत्यर्थः । यतः मनःपवनयो रुद्धयोः मिथः अवष्टब्धयोः सिध्यते मुक्तीभूयते ॥

विसय । " षष्ठ्याः " [ ३४५ ] ॥

लोअहो । " आमन्त्र्ये जसो होः " [ ३४६ ] ॥

विसएँहिं । मण पवणिहिँ । रुद्धहिँ । " भिस्सुपोर्हि " [ ३४७ ] ॥

नाडिउ इड-पिङ्गल-पमुहाओ
जाणेवाओ पवणेंण रुद्धा ।
ताउ न जाणइ जो सव्वाओ
जोगिअ-चरिऍं चरइ सु मुद्धा ॥ २३ ॥
गयण-ढलन्त-सुधा-रस-निकहें
अमिअ पिअन्तिहु जोगिअ-पन्तिहु ।
ससहरु बम्भि धरन्तिहु कत्थ वि
भउ नोप्पज्जइ जर-मरणत्तिहु ॥ २४ ॥

२३. इडापिङ्गलाप्रमुखा नाड्यः शरीरे अनेकशिरासद्भावेपि त्रि-कालज्ञानहेतुत्वेन प्रधानत्वाद् वामदक्षिणमध्यमा धमनयः पवनेन पार्थिवादिवायुपञ्चकेन रुद्धाः प्रत्येकं सार्धघटिकाद्वयं यावद् अवष्टब्धा ज्ञातव्याः । तथा चोक्तम् ।

नाडीमध्ये तथा भुक्तिः सार्धं तु घटिकाद्वयम् ।
घटिकार्धेन भवेद् भूतम् एवं वा लक्षयेद् बुधः ॥

एकैका नाडी सार्धं घटिकाद्वयं संततं वहति । तत्रापि पञ्चापि पार्थिवादिवायवः स्वस्वभुक्तिं भुञ्जते । सा च कियती भवति । पञ्चा-नामपि प्रत्येकं घटिकार्धं भुक्तिर्भवति । भवन्ति च पञ्च घटिकार्धानि सार्धघटिकाद्वये इति अस्यार्थः । ता इडाद्या नाडीः सर्वाः समस्ता यो न जानाति स पुरुषो योगिकचर्यया योगिनाम् आचारेण मुधा निरर्थकं चरति । नाडीपवनसंयोगपरिज्ञानविकलेन बहु क्लिश्यतापि योगः साध-यितुं न शक्यते इति भावः ॥

नाडिउ । पमुहाओ । जाणेवाओ । ताउ । सव्वाओ । "स्त्रिया जश्शसोरुदोत्" [ ३४८ ] ॥

जोगिअ-चरिअए । "ट ए" [ ३४९ ] ॥

२४. गगनं ब्रह्मरन्ध्रम् दशमद्वारम् इति यावत् । तस्मात् ढलन्तीति क्षरादित्वात् [४.१९५] क्षरन् वहन् सुधारसो यस्यां सा तथा । सा चासौ

१ BD चरिए.

वज्जइ वीण अदिट्ठिहि तन्तिहि
उट्ठइ रणिउ हणन्तउँ ठाणइँ ।
जहि वीसामुँ लहइ तं झायहु
मुत्तिहें कारणि चप्फल अन्नइँ ॥ २५ ॥

नीका च इडाख्या वामनासिका । तस्याः सकाशात् तत्संबन्धि वा अमृतं पिबन्तीनाम् आस्वादयन्तीनां शशधरम् इडाख्यां नासिकां ब्रह्मणि दशमद्वारे धरन्तीनाम् अमृतक्षारणाय निवेशयन्तीनां योगिपङ्क्तीनां क्वापि कस्मिन्नपि स्थाने जरामरणार्तिभ्यो भयं न भवति । उक्तरीत्या अमृतपानं योगिनां मुक्तये संपद्यते इति भावः ॥

निक्के । इस्-इस्योर्हें " [ ३५० ] ॥

पिअन्तिहु । जोगिअ-पन्तिहु । धरन्तिहु । जर-मरणत्तिहु । "भ्यसामोर्हुः" [ ३५१ ] ॥

२५. अदृष्टायाम् इन्द्रियाविषयभूतायां तन्त्र्यां नाडीलक्षणे गुणे वीणा शरीरलक्षणा वल्लकी वाद्यते । परब्रह्मलीनस्य योगिनः स्वयमेव अभिहन्यत इति भावः । ततः स्थानानि उरःकण्ठप्रभृतीनि घ्नत् ताडयत् रणितम् उत्तिष्ठते प्रयत्नम् अन्तरेण उल्लसति । अनाहतो ध्वनिः उत्पद्यत इति यावत् । तथा तदेव रणितं यत्र यस्मिन् स्थाने विश्रामं लभते तद् ध्यायत ब्रह्मरन्ध्रे मनो नियुङ्ध्वम् इत्यर्थः । किमित्येवं कार्यत इत्याह । मुक्तेः कारणे अन्यानि तपउपसर्गसहनप्रभृतीनि कष्टानुष्ठानानि चप्फलेति शीघ्रादित्वात् चाटुफलानि उपचारवाक्यानि असत्यानि चाकूटानि । सिद्धिसाधने असमर्थानीति भावः ॥

अदिट्ठिहि । तन्तिहि । " ङेर्हि [ ३५२ ] ॥

ठाणइं । अन्नइं । " क्लीबे जस्शसोरिं " [ ३५३ ] ॥

हणन्तउं । " कान्तस्यात उं स्यमोः " [ ३५४ ] ॥[1]

---

1 BC कष्टानि.

जो जहाँ होंतउ सो तहाँ होंतउ
सत्तु वि मित्तु वि किहें वि हु आवउ ।
जहिँ वि हु तहिँ वि हु मग्गे लीणा
एक्कएँ दिट्ठिहि दोन्नि वि जोअहु ॥ २६ ॥
कासु वि जासु वि तासु वि पुरिसहों
कहें वि हु जहें वि हु तहें वि हु नारिहें ।
तं हितु वयणु चविज्जइ थोवउँ ।
ध्रुं पेरिणॅम्यँइ समत्त-पयारेंहिं ॥ २७ ॥

२६. य यस्मात् भवन् जायमान स तस्मात् कस्मादपि । किंचिदपि कारणम् आश्रित्येति भाव । शत्रुरपि मित्रमपि भवन् संपद्यमान । हीति स्फुटम् । आवतु प्रतिकूलम् अनुकूलं प्रकर्तुं समीपम् आगच्छतु । परं यस्मिन्नपि तस्मिन्नपि मार्गे लीना यदपि तदपि जिनशिवादिदर्शनम् आश्रिता इत्यर्थ । एकया दृष्ट्या समभावेन द्वे अपि शत्रुमित्रे द्योतयतेति । धातूनाम् अनेकार्थत्वात् पश्यत । हुशब्दौ पादपूरणे । एवम् अग्रगाथायामपि हुशब्दा ॥

जहा । तहा " सर्वादेर्ङसेर्हाँ " [ ३५५ ] ॥
किहे । " किमो डिहे वा " [ ३५६ ] ॥
जहिं । तहिं । " ङेर्हिं " [ ३५७ ] ॥

२७. कस्यापि यस्यापि तस्यापि पुरुषस्य अयम् आत्मीय अयम् अन्यः इत्यभिप्रायपरिहारेण मनुष्यमात्रस्य । सर्वस्येत्यर्थ. । कस्या

१ The Commentator's text reads हि for हु २ CD परिणमइ The nasal mark (ँ) is not intended to make the vowel अ nasal but is intended to affect the consonant व् and to produce the nasal वँ which is known in Grammar in the vārtika यवलपरे यवला वा and in the example किवँ ह्वलयति ( See हे० ८. ४.३९७ )

तं बोल्लिअइ जु सचु पर इमु धम्मक्खरु जाणि ।
एँहो परमत्था एहु सिवु एँह सुह-रयणहँ खाणि ॥ २८ ॥
एइ सुसावग ओइ मुणि पिच्छह तवहिँ तवाइं ।
आयहोँ जम्महोँ एहु फलु नायइँ विसय-सुहाइं ॥ २९ ॥

अपि यस्या अपि तस्या अपि नार्याः तद् हितं वचनम् अहिंसा-प्रधानो धर्मः क्रियताम् इत्युपदेशः स्तोकं मितं कथ्यते यत् समस्त-प्रकारैः करणकारणानुमितिरूपैः परिणमति रोचते ॥

कासु । जासु । तासु । " यत्तत्किम्भ्यो ङसो डासुर्न वा " [ ३५८ ] ॥
कहे । जहे । तहे । " स्त्रिया डहे " [ ३५९ ] ॥

२८. यद् वच. अहिंसादिकं सत्यम् अविसंवादि तत् परं केवलं कथ्यते । इति इदं धर्माक्षरं धर्मरहस्यं जानीहि अवगच्छ । तथा एष परमार्थः उत्तमार्थः । एतत् शिवं मङ्गलम् । एषा च सुखान्येव काम्यत्वाद् रत्नानि तेषां खनिः आकरः । यत् सत्यम् उच्यते इति सर्वत्रापि संबन्धः ॥

ध्रं । ध्रुं । त । तु । " यत्तदः स्यमोर्ध्रुं त्रं " [ ३६० ] ॥
इमु । " इदम इमुः क्लीबे " [ ३६१ ] ॥
एहो । एहु । एह । " एतदः स्त्रीपुंक्लीबे एह एहो एहु " [ ३६२ ] ॥

२९. एतान् सुश्रावकान् अमून् मुनीन् पश्यत । किं पश्याम इत्याह । एते सुश्रावकाः अमी मुनयस्तपांसि एकासनकनिर्विकृति-काचाम्लोपवासरूपाणि तप्यन्ते कुर्वन्ति । अथवा युक्तमेवैतद् यद् एते एवम् अनुतिष्ठन्ति । यतः अस्य जन्मन. परमपुरुषार्थसाधकस्य मानुषत्वस्य एतत्तपस्तपनरूपं फलं साध्यम् एतत्फलपरमपुरुषार्थहेतुत्वात् । न इमानि विषयसुखानि फलम् । परमपुरुषार्थविघातकत्वात् ॥

१ C कथ्यते इदानीम्. २ BC °निर्विकृति°.

साहु वि लोउ तडप्फडइ सव्वु वि पण्डिउ जाणु ।
कवणु वि एहु न चिन्तवइ काइँ वि जं निव्वाणु ॥ ३० ॥
सव्वहों कासु वि उवरि तुहुँ एँहु चिन्तसु निम्मोह ।
तुम्हें म निवडहुं भव-गहणि तुम्हइँ सुहिआ होह ॥ ३१ ॥
तुम्हें निरिक्खेउ अप्पु जिम्वँ तुम्हइँ जिम्वँ अप्पाणु ।
पइँ अणुसासउँ पसमु करि तइँ नेउं अक्खउ ठाणु ॥ ३२ ॥

एइ । "एइर्जस्शसो" [ ३६३ ] ॥
ओइ । "अदस ओइ" [ ३६४ ] ॥
आयहो । आयइँ । "इदम आय" [ ३६५ ] ॥

३० सर्वोपि लोक तडप्फडइ इति तक्षादित्वात् चपलायते मोक्ष निमित्त प्रयतते । तथा सर्वोपि पण्डित विचक्षणोस्तीति त्व हे नृप जानीहि । पर कोपि एतद् न चिन्तयति न विचारयति । यत् [3]किमिति किंस्वरूप निर्वाणम् ।

साहु । सव्वु । "सर्वस्य साहो वा" [ ३६६ ] ॥
कवणु । काइ । "किम काइ कवणौ वा" [ ३६७ ] ॥

३१. षड्भि कुलकम् । श्रुतदेवी कुमारपाल प्रति प्राह । हे महाराज अह युष्माक बान्धव स्वजन इति भणित्वा एतद् वक्ष्यमाण सर्वेषु कथयत यूयम् उपदिशत । किं तद् इत्याह । हे निर्मोह अज्ञानरहित भव्यलोक त्यम् एतद् इद सर्वस्य कस्यापि उपरि । स्वपक्षे परपक्षे चेत्यर्थ । चिन्तय परिभावय । किं तद् इत्याह । यूय भवगहने ससारकान्तारे मा निपतत निमज्जत । तथा यूय सुखिता कर्माष्टककृतकष्टरहिता भवत ॥

३२. तथा अहम् आत्मान यथा युष्मान् निरीक्ष्य, युष्मान् यथा आत्मान निरीक्ष्य । आत्मपरौ समभावेन दृष्ट्वेत्यर्थ । त्वाम् अक्षयं स्थान परमपदं [4]नेतुं त्वामेव अनुशास्मि शिक्षयामि । किं तद् इत्याह । प्रशमं सर्वत्र समभावं कुरु ॥

---

१ BCD निवडह. २ BC निरक्खउ ३ D किमपि. ४ D नेतुं प्रापयितुं.

पइँ करिअव्वी जीव-दय तइँ बोल्लेवउ सच्चु ।
पइँ सुहु तइँ कल्लाण तउ तउ होहिसि कय-किच्चु ॥३३॥
सेवेअव्वा साहु पर तुम्हेंहिँ इह जम्मम्मि ।
तुज्झु समत्तणु तुम्र खम तउ संजमु चिन्तेमि ॥ ३४ ॥
कलि-मलु तुज्झु पणंसिही तउ वचेही पावु ।
मुक्खु वि तुम्र न दूरि ठिउ करि धम्मक्खरि ढावु ॥३५॥
तुम्हहँ मुक्खु न दूरि ठिउ जइ संजमु तुम्हासु ।
हउँ तुँम्ह वन्धवु इअ भणिवि एँहु जम्पहु सव्वेसु ॥ ३६ ॥

३३. तथा त्वया जीवदया कर्तव्या । त्वया सत्यं च कथयितव्यं वक्तव्यम् । ततो जीवदयादेः त्वयि सुखं त्वयि कल्याणं शिवं भविष्यति । ततः कृतकृत्यः विहितपरमपुरुषार्थः भविष्यसि ॥

३४. तथा इह जन्मनि युष्माभिः परं केवलं साधवः महर्षयः सेवितव्याः पर्युपास्याः । तथा तव सम्यक्त्वं तव क्षमां तव संयमं च चिन्तयामि सुसाधुसेवया अहं परिभावयामि ॥

३५. तथा धर्माक्षरे धर्मप्रतिपादके सिद्धान्ते ढावु इति शीघ्रादित्वात् ग्रहं प्रतिबन्धं कुरु । एवं च त्वत् भवतः सकाशात् कलिमलम् इहजन्मभवं पापं प्रण (न ?) ङ्क्ष्यति । तथा त्वत् पापम् अनन्तपूर्वभवकृतं दुष्कृतं व्रजिष्यति । ततश्च त्वत् मोक्षोपि न दूरे स्थितः । अपि तु समासन्न एव आस्ते । धर्मप्रभावादेव कलिमलनाशः परमपदवीप्राप्तिश्च जायत इत्यर्थः ॥

३६. तथा यदि युष्मासु संयमश्चारित्रं तदा युष्मत् युष्माकं वा मोक्षो न दूरे [ स्थितः ] ॥

तुहु " युष्मदः सौ तुहुं " [३६८] ॥

तुम्हे । तुम्हइं । तुम्हे । तुम्हइं । "जश्शसोस्तुम्हे तुम्हइं" [३६९] ॥

पइं । तइं । पइं । तइं । पइं । तइं । " टा-ङ्यमा पइं तइं " [३७०] ॥

---

१ BC पणसिही. २ BC ढाउ. ३ BC इह.

अम्हे निन्दउ को वि जणु अम्हइँ वण्णउ को वि ।
अम्हे निन्दहुँ कं नि न वि नम्हइँ वण्णहुँ कं वि ॥ ३७ ॥
मइँ मिल्लेवा भव गहणु मइँ थिर एही बुद्धि ।
मत्था हत्थउ सु गुरु मइँ पावउँ अप्पहों सुद्धि ॥ ३८ ॥
अम्हेंहिं केण नि विहि वसिण एँहु मणुअत्तणु पत्तु ।
मज्यु अदूरे होउ सिवु महु वच्चउ मिच्छत्तु ॥ ३९ ॥

तुम्हेंहि । "भिसा तुम्हेंहिं" [३७१] ॥

तुज्झ । तुध्र । तउ । तुज्झ । तउ । तुध्र । "ङसि ङस्भ्यां तउ तुज्झ-तुध्रा" [३७२] ॥

तुम्हह । "भ्यसाम्भ्या तुम्हह" [३७३] ॥

तुम्हासु । "तुम्हासु सुपा" [३७४] ॥

हउ । "सावस्मदो हउ" [३७५] ॥

३७ षड्भि कुलकम् । हे कुमारपाल नृप इणपरीति शीघ्रादित्वात् अनया रीत्या अनेन भण्यमानप्रकारेण आत्मान शिक्षय सबोधय । रीतिमेव आह । अस्मान् कोपि जन निन्दतु जुगुप्सताम् । अस्मान् कोपि जन वर्णयतु श्लाघताम् । पर वय नापि कमपि निन्दाम नापि कमपि वर्णयाम । निन्दितरि द्वेष स्तोतरि राग च न कुर्म इत्यर्थ ॥

३८ मया भवगहन मोक्तव्यम् इत्येषा मयि स्थिरा अविनश्वरा बुद्धि । तथा सुगुरु मा मस्तके हस्तयतु प्रसन्नमना मच्छिरसि हस्त निदधातु । ततश्च अहम् आत्मन शुद्धिं नैर्मल्य प्राप्नोमि ॥

३९ अस्माभि केनापि विधिवशेन शुभकर्मयोगेन एतद् मनुजत्व प्राप्तम । तथा मत् मत्प्रसादात् मम वा शिवम् अदूरे निकटे एव भवतु। मत् मम वा मिथ्यात्व व्रजतु।मिथ्यात्वविनाशेन नि श्रेयस सजायताम् इत्यर्थ ॥

अम्हहँ मोह-परोहु गउ संजमु हुउ अम्हासु ।
विसय न लोलिम महु करहिं म करहि इअ वीसासु ॥४०॥
रे मण करसि कि आलडी विसया अच्छहु दूरि ।
करणइँ अच्छह रुन्धिअइँ कइउँ सिव-फलु भूरि ॥ ४१ ॥
इणपरि अप्पउ सिक्खविसु तुह अक्खहुँ परमत्थु ।
सुमरि जिणागम धम्मु करें संजमु वच्चु पसत्थु ॥ ४२ ॥

४०. अस्मत् अस्मत्सकाशात् अस्माकं वा मोहप्ररोहः अज्ञानोद्भवो गतः विनष्टः । अस्मासु संयमः भूतः संजातः । विषयाश्च न लोलत्वं मम कुर्वन्तीति विश्वासं विश्रम्भं मा कार्षीः । विचित्रा हि कर्मणां गतिः इति चतुर्थपुरुषार्थं साधयिष्यता विषयाणाम् अवकाशः कथंचिदपि न देय इति भावः ॥

४१. रे मनः किं किमर्थम् आलिं परस्त्र्यादिप्रार्थनरूपानर्थं करोषि । आलिं मा कार्षीरित्यर्थः । तथा रे विषयाः यूयं दूरे आध्वं मद्गोचरे मा आगमत । रे करणानि च रुद्धानि नियन्त्रितानि यूयम् आध्वम् । किमित्येवं नियोग इत्याह । अहं भूरि प्रभूतं शिवफलं कर्षामि आत्मसात् करोमि ॥

४२. तथा जिनागमान् स्मर धर्मं धर्मानुष्ठानं कुरु कुरुष्व वा । प्रशस्तं संयमं च सर्वविरतिं व्रजेति च तव वयं परमार्थम् आचक्ष्महे ।

अम्हे । अम्हइं । अम्हे । अम्हइं । " जश्शसोरम्हे अम्हइं " [ ३७६ ] ॥
मइं । मइं । मइं । " टा-ङ्यमा मइं " [ ३७७ ] ॥
अम्हेहिं । " अम्हेहिं भिसा " [ ३७८ ] ॥
मज्झु । महु । " महु मज्झु ङसिङस्भ्याम् " [ ३७९ ] ॥
अम्हहं । अम्हहं । " अम्हहं भ्यसाम्भ्याम् " [ ३८० ] ॥
अम्हासु । " सुपा अम्हासु " [ ३८१ ] ॥

संजम लीणहों मोक्ख-सुहु निच्छइँ होसइ तासु ।
पिय गलि कीसु भणन्तिअउ णाइँ पहुच्चहिँ जासु ॥ ४३ ॥
सच्चइँ वयणइँ जो ब्रुवइ उवसमु व्रुवइ पहाणु ।
प्रस्सदि सत्तु वि मित्तु जिम्वँ सो गृण्हइ निव्वाणु ॥ ४४ ॥

करहिं । " त्यादेराद्यत्रयस्य बहुत्वे हिं न वा " [ ३८२ ] ॥
करहि । " मध्यत्रयस्याद्यस्य हि " [ ३८३ ] । पक्षे करसि ॥
अच्छहु । " बहुत्वे हु [ ३८४ ] । पक्षे अच्छह ॥
कड्ढउ । " अन्त्यत्रयस्याद्यस्य उ " [ ३८५ ] ॥
अक्खहु । " बहुत्वे हु [ ३८६ ] ॥
कुमरि । करे । वच्च । " हि-स्वयोरिदुदेत् [ ३८७ ] ॥

४३ हे कुमारपाल नृप । इति संबोधनपदम् अग्रेपि आसर्गान्त योजनीयम् । हे प्रिय वलि क्रियेहे वल्लभ तव अहम् अवतारणक विधीये इति भणन्त्य रागवृद्धये प्रतिपादयन्त्यो वनिता यस्य न प्रभवन्ति समाधिध्वसनाय न समर्था सजायन्ते । संयमलीनस्य व्रतपरस्य तस्य निश्चयेन नि संदेह मोक्षसुख भविष्यति ॥

होसइ । " वर्त्स्यति स्यस्य स " [ ३८८ ] ॥
कीसु । " क्रिये कीसु [ ३८९ ] ॥
पहुच्चहिं । " भुव पर्याप्तौ हुच " [ ३९० ] ॥

४४ सत्यानि वचनानि यो ब्रूते प्रधानम् उपशम च यो ब्रवीति शत्रुमपि मित्र यथा य पश्यति स निर्वाण गृह्णाति आत्मसात् करोति ॥
ब्रुवइ । " ब्रूगो ब्रुवो वा [ ३९१ ] ॥
व्रुवइ । " व्रजेर्वुञ " [ ३९२ ] ॥

---

१ C णाणाइहो २ BCD पहुचइ

तव-छुरेँ छोल्लहु अप्पणा कम्म खुडुक्कन्ताइं ।
साहुहुँ पासहु सुद्धि-यर सुहेँ गृण्हिअ वयणाइं ॥ ४५ ॥
स-फला जीविदु किं न करहु मन वच्चह अकयत्थ ।
पुलय-पफुल्लिअ मणि धरह गुरु-अण-कथिद-सुअत्थ ॥४६॥

पस्सदि । " दृशेः प्रस्सः " [ ३९३ ]॥
गृण्ह । " ग्रहेर्गृण्हः " [ ३९४ ]॥

४५. साधूनां पार्श्वात् । साधुभ्य इत्यर्थः । शुद्धिकराणि ।

पुव्विं दुच्चिन्नाणं दुप्पडिक्कन्ताणं कम्माणं वेइत्ता ।
मुक्खो नत्थि अवेइत्ता तवसा वा झोसइत्ता वा ।

इत्यादिकर्ममलक्षालनोपायप्रतिपादकसदुपदेशान् सुखेन गृहीत्वा प्राप्य आत्मीयानि खुडुक्कन्ताइं इति अवतरन्ति स्खलन्ति शल्यायमानानि वा । आत्मनि अनभिव्यक्तिं बध्नन्ति बाधां कुर्वन्ति महाव्यथाजननाद् अन्तःप्रविष्टतोमरादिकल्पानीति क्रमेण तात्पर्यार्थः । कर्माणि तपःक्षुरेण यूयं तक्ष्णुत तनूकुरुत । विनाशयतेति यावत् ॥

छोल्लहु । " तक्षादीनां छोल्लादयः " [ ३९५ ]। आदिग्रहणाद् देशीषु ये क्रियावचना दृश्यन्ते ते उदाहार्याः । यथा खुडुक्कन्ताइं । इत्यादि ॥

४६. यूयं सफलं जीवितं किं न कुरुत । अपि तु विधत्तेत्यर्थः । तथा अकृतार्थाः असाधितधर्मार्थाः । मन इति देश्यः निषेधार्थः । तथा च प्रयोगः ॥

मन विरमउ तुह गुण-गहणि मज्झ जीह मय काल ॥

ततो मा व्रजत संसारं पर्यटत । कथं जीवितं सफलं भवतीत्याह । पुलकैः रोमाञ्चैः प्रफुल्लिताः संजातपुष्पोद्गमा इव गुरुजनकथितान् धर्माचार्योक्तान् श्रुतार्थान् आगमोक्तजीवाजीवादिपदार्थान् मनसि धरत वहत चित्ताद् मा विस्मारयतेति भावः ॥

गुरु-वय-अम्वॅलइँ निचु छिन्नह भत्ति सिर-कमलेण ।
प्रिउ वोल्लेहु पिउ आचरहु तासु जि उवएसेण ॥ ४७ ॥
वाया-संपय व्रास जिम्वॅ धरहिँ जि संपइ-लुद्ध ।
ते गुरु परिहरि विवइ-गर आवइ-डरिआ मुद्ध ॥ ४८ ॥

४७. यूयं शिर कमलेन भक्त्या गुरुपदकमलानि नित्यं स्पृशत । प्रणामं कुरुतेत्यर्थ । तथा तस्यैव गुरोरेव उपदेशेन शिक्षया प्रियं सर्वस्यापि अनुकूलं कथयत । प्रियं च आचरत अनुतिष्ठत ॥

सुद्धि गर । सुघें । समला । जीविदु । कधिद । गुरु वय । " अनादौ स्वरादसयुक्तानां क-ख-त-थ प-फां ग-घ-द-ध ब-भ-मा. " [ ३९६ ]॥ अनादाविति किम् । कि । करइ । पुलय । असयुक्तानामिति किम् । अकयत्थ । सुअत्थ । भत्ति ॥ प्रायोधिकारात् क्वचिन्न । पकुलिअ ।

अम्वॅलइ । कमलेण । " मोनुनासिको वो वा " [ ३९७ ] ॥
प्रिउ । पिउ । " वाधो रो लुक् " [ ३९८ ] ॥

४८. संपल्लुब्धो व्यासो यथा [ ये ] वाक्सपदं व्याख्याने वाग्मिता धरन्ति । धनलिप्सया जनरञ्जनाय व्याख्यान्तीत्यर्थ । तान् विपत्करान् असदुपदेशदानेन संसारदु खजनकान् मुग्धान् मुक्तिप्रतिकूलाचरणान् मूर्खान् गुरून् हे आपत्त्रस्त जन्मजरामरणादिविपत्तिभीत परिहर मा अङ्गीकुरु ॥

व्रास । " अभूतोपि क्वचित् " [ ३९९ ] ॥

सपइ । विवइ । आवइ । " आपद्विपत्संपदां द इ. " [ ४०० ] ॥ प्रायोधिकारात् सपय ॥

---

१ BC कमलइ, D कमाग्ड़. २ BC बोल्हु प्रिउ. ३ D कमलई

जेम्वँ इ तेम्वँ इ करुण करि जिम्वँ तिम्वँ आचरि धम्मु ।
जिह वि हु तिह वि हु पसमु धरि जिध तिघ तोडहि कम्मु ४९
किम्वँ जम्मणु केम्वँ य मरणु किह मचु किघ निव्वाणु ।
एहउ तेंण परिजाणियइ जसु जिण-वयण पैम्वाँणु ॥ ५० ॥
जेहउ केहउ होइ तरु तेहउ फल-परिणामु ।
कइसउ जइसउ तइसउ वि मन करि मिच्छा-धम्मु ॥५१॥

४९. यथा तथा येन तेन प्रकारेण करुणां प्राणिषु दयां कुरु । यथा तथा धर्मम् आचर अनुतिष्ठ । यथापि तथापि प्रशमं धर । यथा तथा कर्म त्रोटय छिन्धि । हुशब्दौ पादपूरणे ॥

५०. कथं केन प्रकारेण जन्म भवति । कथं मरणम् । कथं भव-श्चातुर्गतिकसंसारः । कथं निर्वाणं च ईदृक् एवंविधं जन्मादि तेन परि-ज्ञायते यस्य जिनवचनं समस्तार्थप्रतिपादकः अर्हत्सिद्धान्तः प्रमाणं तथेति प्रतीतो भवति ॥

जेम्वँइ । तेम्वँइ । जिम्वँ । तिम्वँ । जिह । तिह । जिघ । तिघ । किम्वँ । केम्वँय । किह । किघ । "कथं-यथा-तथा थादेरेमेमेहेधा डितः" [४०१]॥

५१. यादृक् कीदृक् तरुर्भवति तादृक् फलपरिणामः फलनिष्पत्ति-र्भवति । अतः कीदृशं यादृशं तादृशमपि मिथ्याधर्मम् । मन इति निषेधे । मा कुरु । यथा कटुकवृक्षस्य कटुकं फलं मधुरवृक्षस्य मधुरं फलम् तथा मिथ्याधर्मस्य दुर्गतिरूपं कटुकं फलं शुभधर्मस्य सुगतिरूपं च फलम् इति मिथ्याधर्मम् अपहाय सद्धर्मम् आचरेति भावः ॥

एहउ । जेहउ । केहउ । तेहउ । "यादृक्तादृक्कीदृगीदृशां दादेर्डेहः" [४०२]॥

१ D वयणु. २ BC प्रमाणु. ३ BCD तथायथा. ४ C ततः. ५ D शुद्धधर्म°.

अइसउ भणामि समत्तु करि थका जेत्थु वि तेत्थु ।
जत्तु वि तत्तु वि रइ करसु सुह-गर परइ तहेत्थु ॥ ५२ ॥
जाम्वँ न इन्दिय वसि ठवइ ताम्वँ न जिणइ कसाय ।
जाउँ कसायहँ न किउ खउ ताउँ न कम्म-विघाय ॥५३॥
ताम्वँहिँ कम्मइँ दुद्धरइँ जाम्वँहिँ तउ न वि होइ ।
जेवडु फलु तवेँ साहिअइ तेवडु मुणइ न कोइ ॥ ५४ ॥

५२ अहम् ईदृक् भणामि । किं तद् इत्याह । यत्र तत्रापि देशे काले वा स्थित सम्यक्त्व कुरु । तथा परस्मिन् अन्यजन्मनि तथा अत्र इह जन्मनि शुभकरा पुण्यजनिका रतिम् । तीर्थकरादिषु अनुरागम् इत्यर्थ । यत्र तत्रापि स्थित कुरुष्व ॥

कइसउ । जइसउ । तइसउ । अइसउ । "अता डइस" [४०३] ॥
जेत्थु । तेत्थु । जत्तु । तत्तु । "यत्र तत्रयोस्त्रस्य डिदेत्थ्वत्तु" [४०४] ॥
एत्थु । "एत्थु कुत्रात्रे" [ ४०५ ] ॥ केत्थु । इति प्राक्पुरोप्युदाहृतम् आस्ते ॥

५३ यावद् इन्द्रियाणि वशे स्वतन्त्रतया प्राणी न स्थापयति धरति तावत् कषायान् क्रोधादीन् न जयति पराभवति । ध्वंसयतीति यावत् । यावच्च कषायाणा क्षयो न कृतस्तावत् न कर्मविघात । इन्द्रियजयपूर्वक कषायजय । तत्पूर्वकश्च कर्मक्षय इति भाव ॥

५४ तावत् कर्माणि दुर्धराणि दुर्जयानि यावत् तपो नापि नैव भवति । यावच्च यत्परिमाण फल तपसा साध्यते जन्यते तावत् तत्परिमाण कोपि न जानाति । सर्वज्ञ विना न कोप्यपरस्तप फल सामस्त्येन ज्ञातुम् ईश इति भाव ॥

जाम्वँ । ताम्वँ । जाउ । ताउ । ताम्वँहिं । जाम्वँहिं । "यावत्तावतोर्वादेर्म उ महिं" [४०६] ॥

जेत्तुलु मोक्खे सोक्खडा तेत्तुलु केत्थु वि णाइं ।
एत्तुलु केत्तुलु देवहँ वि अवरुप्परहु सुहाइं ॥ ५५ ॥
तसु केवडउ विवेगु भणि जसु मणि एवडु ढावु ।
न करावउँ न करउँ कमवि सुवेँ अच्छउँ नीराउ ॥ ५६ ॥
अक्खहुँ तसु नमि गुरु-जणहों तव-तेएँहिँ दुसहस्सु ।
बहुहुँ वि मिच्छा-दंसणहँ जो मउ दलइ अवस्सु ॥ ५७ ॥

५५. यावद् मोक्षे सौख्यं तावत् कुत्रापि नास्ति । तत् किं संसारे सौख्यं क्वापि नास्तीत्याह देवानामपीति । देवानां देवीनां च परस्परस्य मिथ इयत् कियत् । स्तोककालम् इत्यर्थः । सुखानि । देवानामपि सुखानि परिमितकालक्षयीणि मुक्तिसुखं तु शाश्वतम् इति भावः ॥

जेवडु । तेवडु । " वा यत्तदोतोर्डेवडः " [ ४०७ ] ॥ पक्षे । जेत्तुलु । तेत्तुलु ॥

अवरुप्परहु । " परस्परस्यादिरः " [ ४०८ ] ॥

५६. कमपि कंचिदपि सावद्यव्यापारं न कारयामि नान्येन विधापयामि । न करोमि नात्मना वितनोमि । करणकारणयोरुपलक्षणत्वाद् नान्यमपि सावद्यं व्यापारं कुर्वन्तम् अनुजानामि । अतएव सुखेन नीरागः सन् आसे वर्ते इति यस्य मनसि इयान् एतावन्मात्रः ढावु इति आग्रहो निर्बन्धः तस्य पुरुषस्य भण कियान् किंपरिमाणो विवेकः । न तद्विवेकस्य मितिरस्तीति भावः ॥

एत्तुलु । केत्तुलु । केवडउ । एवडु । " वेदं-किमोर्यादेः " [ ४०९ ] ॥

५७. बहूनामपि मिथ्यादर्शनाना बौद्धादिकुमतानां मदम् अवश्यं यो दलयति राजसभाया विदग्धसभ्यसमक्षं दर्पम् अपनयति । [ तसु ]

१ BC केत्थ वि णाइ

वम्भु अणन्नाइसु चरइ जो अणवराइस चित्तु ।
प्राइव प्रावइ तहिँ जि भवि सो निव्वाणु पवित्तु ॥ ५८ ॥
प्राइम्व भवि सुहु दुल्लहउँ पग्गिम्व जण सुह-लुद्ध ।
तं संतोसामएँण विणु प्राउ प्रमग्गहिँ मुद्ध ॥ ५९ ॥

" द्वितीयाया षष्ठी " ( ३ १३४ ) इति षष्ठी । अत त तपस्तेजसा दुस्सहम् अजय्य गुरुजन नम प्रणिपत इति आचक्ष्महे वय भवन्त प्रतिपादयाम ॥

सुधेँ । जणहोँ । " कादिस्थैदोतोरुच्चारलाघवम् " [ ४१० ] ॥

अच्छउँ । अक्खहुँ । तेएहिँ । वहुहुँ । दसणहँ । " पदान्ते उ हु हिं-ह काराणाम् " [ ४११ ] ॥

५८ अनन्यादृश रागाद्यकलुपितत्वाद् अनन्यसम चित्त यस्य स तथाभूतो य अनन्यादृश लोकोत्तर ब्रह्म शील चरति अनुतिष्ठति प्राय बाहुल्येन स जन्तुस्तस्मिन्नेव भवे पवित्र निर्वाण प्राप्नोति ॥

बम्भु । " म्हो म्भो वा " [ ४१२ ] ॥
अणन्नाइसु । अणवराइस । " अन्यादृशोन्नाइसावराइसौ " [ ४१३ ] ॥

५९ प्राय बाहुल्येन भवे सुख दुर्लभम् । जनाश्च प्राय सुखलुब्धा । तेच सुख संतोषामृतेन विना प्रायो मुग्धा हेयोपादेयपरिज्ञानविकला मार्गयन्ति गवेषयन्ति । अनुत्तरसुख[1]दु खसुखसमानमहामुनि [2]संतोषा भासमुख्यर्थितीर्थान्तरीय [3] व्युदासार्थं प्राय शब्दा ॥

प्राइव । प्राइम्व । पग्गिम्व । प्राउ ।"प्रायस प्राउ-प्राइव प्राइम्व-पग्गिम्वा " [४१४] ॥

---

१ BO षट्टीनम्नं

रयण-त्तउ फुडु अणुसरहु अन्नइ मुत्ति कहं ति ।
भण्डइ लब्भहिँ पउर धण अनु किं नहउ पडन्ति ॥ ६० ॥
कउ वढ भमिअइ भव-गहणि मुक्ख कहन्तिहु होइ ।
एँहु जाणेवउँ जइ मणसि तो जिण-आगम जोइ ॥ ६१ ॥
चञ्चल संपय ध्रुवु मरणु सव्वु वि एम्व भणेइ ।
मिलिवि समाणु महामुणिहिँ पर संजमु न करेइ ॥ ६२ ॥

६०. रत्नत्रयं ज्ञानदर्शनचारित्राणि स्फुटम् अनुसरत यूयम् आश्रयत । अन्यथा रत्नत्रयं विना कथं मुक्तिरिति । इतिः वाक्यपरिसमाप्तौ। अत्रार्थे युक्तिं दर्शयन् आह । भाण्डेन क्रयाणकेन कृत्वा प्रचुराणि धनानि क्रेतव्यकर्पूरकस्तूरिकासुवर्णादिवस्तूनि लभ्यन्ते पुंभा आसाद्यन्ते । अन्यथा किं नभसः पतन्ति । भाण्डं विना न तानि संपद्यन्त इति भावः ॥

अन्नइ । अनु । "वाऽन्यथोनुः" [४१५] ॥

६१. कुतः कस्मात् कर्मणः भवगहने भ्रम्यते पर्यट्यते । कुतश्च मोक्षो भवति । इति एतद् ज्ञातुं वढेति शीघ्रादित्वात् मूढ यदि मन्यसे ततस्तदा वा जिनागमान् द्योतय इति धातूनाम् अनेकार्थत्वाद् गवेषय । अर्हत्समयं विना भवहानोपायः शिवसंप्राप्त्युपायश्च न ज्ञायत इति भावः ॥

कउ । कहन्तिहु । "कुतसः कउ कहन्तिहु" [४१६] ॥

तो । "ततस्तदोस्तोः" [४१७] ॥

६२. संपत् चञ्चला । मरणं ध्रुवं निश्चितम् । एवं सर्वोपि भणति । परं महामुनिभिः समं मिलित्वा संबन्धम् अवाप्य संयमं न करोति ॥

म करि मणाउ वि मणु विवसु मं करि दुक्कय-कम्मु ।
वायारम्भु वि मा करहि जइ किर इच्छसि सम्मु ॥६३॥
तिरिथ वि अच्छउ अहव वणि अहवइ निअ-गेहे वि ।
दिवेंदिवें करइ जु जीव-दय सो सिज्झइ सव्वो वि ॥६४॥
तवँ सहुँ संजमु नाहिँ जसु एम्वइ गॅम्वइ जु दीह ।
पच्छइ-तावु न जो करइ तासु फुसिज्जइ लीह ॥ ६५ ॥

६३. मनागपि विवशं विषयलाम्पट्यपरं मनः मा कुरु । दुष्कृत-कर्म सपापव्यापारं च मा कुरु । वागारम्भमपि सावद्यवचनप्रतिपादनमपि मा कार्षीः यदि किल इति प्रसिद्धौ शर्म मुक्तिसुखम् इच्छसि ॥

ध्रुवु । एम्व । समाणु । पर । मणाउ । मं । " एवं-परं-समं-ध्रुवं-मा-मनाक एम्व-पर-समाणु-ध्रुवु-मं-मणाउ " [४१८] ॥ प्रायोग्रहणात् म मा ॥

६४. तीर्थेपि आस्तां प्रयागादौ वसतु । अथवा वने सर्वसङ्गं मुक्त्वा वनस्थस्तपस्तप्यताम् । अथवा निजगेहेपि आस्ताम् । परं दिवादिवा प्रतिदिनं यो दयां करोति स सर्वोपि सिध्यति मुक्तो भवति । मुक्तिं प्रति जीवदयैव कारणं न तीर्थाद्यवस्थानम् इत्यर्थः ॥

६५. यस्य तपसा सह संयमो न हि अस्ति । तथा एवमेव संयम-रहितः यो दिवसानि गमयति । तथा यः पश्चात्तापं धिङ् मां धर्म-रहितम् इत्यात्मनिन्दां न करोति तस्य जन्तोः रेखा साधुमध्ये गणना मृज्यते । तादृशः साधुमध्ये न गण्यत इति भावः ॥

किर । अहवइ । दिवेदिवे । सहुं । नाहिं । "किलाथवा दिवा-सह-नहेः किरा-हवइ-दिवे-सहुं-नाहि [४१९] ॥ प्रायोधिकारात् अहव ॥

१ D स तादृशः.

सिज्झउ सो नरु एम्वहिँ जि एत्तहि माणुस-जम्मि।
जो पडिकूलिवि कृव करइ पच्चलिउँ गय-धम्मि ॥ ६६ ॥
जइ संसारहों विचि ठिउ वुन्नउ वुत्तु सों एहु।
पवण-वहिल्लउँ अप्पणउ मणु वढ सुथिरु करेहु ॥ ६७ ॥
निअम-विहूणा रत्तिंहि वि खाहिँ जि कसरक्केहिँ।
हुहुरु पडन्ति ति पार्वे-द्रहि भमडहिँ भव-लक्खेहिँ ॥६८॥

६६. यः प्रत्युत किंतु गतधर्मे निःपुण्ये प्रतिकूलेपि वैरिण्यपि कृपां करोति स नरः इतः अस्मिन् मानुषजन्मनि इदानीमेव सिध्यतु सिद्धिम् आप्नोतु। तेन सिद्धिः प्राप्तैवेत्यर्थः ॥

एम्वइ। पच्छइ। एम्वहिँ। जि। एत्तहि। पचलिउ। "पश्चादेवमेवैवेदानीं-प्रत्युतेतसः पच्छइ-एम्वइ-जि-एम्वहिँ-पचलिउ इत्तहे" [४२०] ॥

६७. यदि संसारस्य वर्त्मनि स्थितः प्राणी विषण्णः जन्मजरामरणा-दिव्यसनैर्निर्वेदम् आपन्नस्तदा सत्यम् एतद् उक्तः मया इदं प्रतिपादितः। किं तद् इत्याह। हे मूढ पवनवत् शीघ्रम् आत्मीयं मनः सुस्थिरं हु इति निश्चितम् कुर्याः। मनसि नियन्त्रिते सति महानन्दसंपत् संपत्स्यत इति भावः ॥

विचि। वुन्नउ। वुत्तु। "विषण्णोक्त-वर्त्मनो वुन्न-वुत्त-विचं" [४२१] ॥

वहिल्लउं। अप्पणउ। वढ। "शीघ्रादीना वहिल्लादयः" [४२२] ॥

६८. नियमविहीना अभिग्रहरहिता ये रात्रावपि कसरक्कैः खादन्ति कसरत्कशब्दं कुर्वाणा भक्षयन्ति ते पापमेव दुरवगाहत्वात् ह्रदः तस्मिन् हुहुरु इति हुहुरुशब्दपूर्वं पतन्ति निमज्जन्ति। भवलक्षेषुं भ्राम्यन्ति च। रात्रिभोजनात् पापं ततश्चातुर्गतिकसंसारे परिभ्रमणं भवतीति भावः ॥

१ B पचलिउ. २ BC °भवलक्षेपु च भ्रा°.

तव-परिपालणि जसु मणु वि मकड-घुग्घिउ देइ ।
आहर-जाहर भव-गहणि सो घई न हुँ पाम्वेइ ॥ ६९ ॥
सग्गहों केंहिं करि जीव-दय दमु करि मोक्खहों रेसि ।
कहि कसु रेसिं तुहुँ अवर कम्मारम्भ करेसि ॥ ७० ॥
कसु तेहिं परिगहु अलिउ कासु तणेण कहेसु ।
जसु निणु पुणु अवसें न सिउ अवस तमिकसि लेसु ॥७१॥

६९. यस्य मनः तपःपरिपालने मर्कटस्य घुग्घिकाम् इति तच्चेष्टाम् । औत्सुक्यम् इति यावत् । ददाति वितरति । स पुरुषः । घइ इति पादपूरणे । भवगहने हुं इति निश्चितम् एहि रे याहि रे इति गमनागमनक्रिया न प्राप्नोति । मुक्तो भवतीत्यर्थः ॥

हुहुरु । घुग्घिउ । "हुहुरु घुग्घादयः शब्दचेष्टानुकरणयोः" [४२३] । आदिग्रहणात् आहर । जाहर ॥

घइ । "घइमादयोऽनर्थकाः" [४२४] ॥

७०. स्वर्गस्यार्थे त्वं जीवदयां कुरु । मोक्षस्यार्थे च दमम् उपशमं कुरु । तथा त्वं कस्य अर्थे किंनिमित्तम् अपरान् कर्मारम्भान् करोषीति कथय । न कोऽपि अन्योऽर्थः आत्मनः सुखायेत्यर्थः ॥

७१. कस्यार्थे परिग्रहः हस्त्यश्वरथपादातधनधान्यादिरूपसंग्रहः । अलीकं मृषाभाषणं च कस्यार्थे इति कथय । दुर्गतिहेतुत्वात् एते सुखाय क्रियमाणे अपि आत्मनो दुःखायैवेत्यर्थः । तर्हि किं गृह्णामीत्याह । जसु इति द्वितीयायाः षष्ठी [३ १३४] इति षष्ठी । अतः यं विना पुनः अवश्यं निश्चितं शिवं मुक्तिः न भवति । अवश्यं तं मुक्तिसाधनम् उपशमादिरूपम् [illegible] गृहाण । [illegible] चेत् तं भयात् गृहीतया [illegible] मुक्तिः स्याधीनेति भावः ॥

काय-कुडुल्ली निरु अथिर जीवियडंउ चलु एहु ।
ए जाणिवि भव-दोसडा असुहउ भावु चएहु ॥ ७२ ॥
ते धन्ना कन्नुल्लडा हिअउल्ला ति कयत्थ ।
जें खणि खणि वि नवुल्लडअ घुण्टहिँ धरहिँ सुअत्थ ॥७३॥

केहिं । रेसि । रेसिं । तेहिं । तणेण । "तादर्थ्ये केहिं तेहिं रेसि रेसिं-तणेणाः" [४२५] इति तादर्थ्ये पञ्च निपाताः ॥

विणु । पुणु । "पुनर्विनः स्वार्थे डुः" [४२६] ॥

अवसें । अवस । "अवश्यमो डें-डौ" [४२७] ॥

एकसि । "एकशसो डिः" [४२८] ॥

७२. कायकुटीरं निरु निश्चितम् अस्थिरं विनश्वरम् । जीवितकं प्राणधारणं च एतत् चलम् । एते कायजीवितचापल्यरूपे भव-दोषौ ज्ञात्वा अशुभं भावं त्यज । अशुभभावत्यागे न एते भविष्यत इत्यर्थः ॥

कुडुल्ली। जीवियडंउ।दोसडा । "अ डड-डुल्लाः स्वार्थिककलुक्च"[४२९]॥

७३. ये कर्णकाः क्षणे क्षणे । अपीति पादपूरणे । नवान् श्रुतार्थान् पिबन्ति सुगुरुसमीपे शृण्वन्ति । यानि च हृदयकानि धरन्ति श्रवणानन्तरं स्थिरीकुर्वन्ति ते कर्णका धन्याः । तानि च हृदयकानि कृतार्थानि । विधेयविधानात् ते कृतकृत्या इत्यर्थ. ॥

कन्नुल्लडा । हिअउल्ला । नवुल्लडअ । "योगजाश्चैषाम्" [४३०] इति अडडडुल्लाना योगभेदेभ्यो ये स्युस्ते डडअइत्यादयः स्वार्थे भवन्ति ॥

१ C जीविवड, D जीविअडउ. २ BCD कन्नुल्डा. ३ B यवियडउ, C जीवियडउं, D जविअडउ. ४ B कन्नुल्लुडा, BC कन्नुल्डा.

पइंठी कन्नि जिणागमहों वत्तडिआ वि हु जांसु ।
अम्हारउँ तुम्हारउँ वि एहु ममत्तु न तासु ॥ ७४ ॥
जीवु जित्तुलु जिअइ जिय-लोइ जइ तित्तुलु दमु करइ ।
गणइ विहवु एत्तुलु न केत्तुलु तो इत्तहे नाणु लहि जाइ
लोइ तेत्तहि निरुत्तउ ॥ ७५ ॥

७४. यस्य कर्णे जिनागमस्य वार्तिकापि वचनमात्रमपि प्रविष्टा श्रुता तस्य पुरुषस्य एतत् इदं वस्तु अस्मदीयम् एतद् युष्मदीयमपि । अपिः स्वार्थे । एवं स ममत्वं प्रतिबन्धो भवति ॥

पइंठी।[1]"स्त्रिया तदन्ताड्डीः"[४३१]इति प्राक्तनसूत्रद्वयोक्तप्रत्ययान्तेभ्यो डीः॥

वत्तडिआ[2] । "आन्तान्ताड्डाः"[3] [४३२] इति डाः । "अस्येदे"[४३३]इति अस्य इः ॥

अम्हारउं । तुम्हारउं । "युष्मदादेरीयस्य डारः" [४३४] ॥

७५. जीवो यावन्तं कालं जीवति जीवलोके यदि तावन्तं कालं दमं करोति विभवं च एतावत कियत् न गणयति । तृणायापि न मन्यत इति भावः । तदा अत्रैव ज्ञानं लब्ध्वा तत्र लोके सिद्धलोके निरुत्तउ इति निश्चितम् याति । निर्वृतो भवतीत्यर्थः । मात्रानामकं छन्दः ॥

जित्तुलु । तेत्तुलु । एत्तुलु । केत्तुलु । " अतोर्डेत्तुलः " [ ४३५ ] ॥

एत्तहे । तेत्तहे । " त्रस्य डेत्तहे " [ ४३६ ] ॥

---

[1] C पइट्ठी. [2] BC वत्तट्ठी. [3] All the three MSS. read स्त्रियां तदन्ताड्डा इति अप्राप्यान्ताड्डाः । तदंताच । before "अस्येदे" instead of Sutra 432.

भल्लत्तणु जइ महसि[1] भल्लप्पणु पसमेण ।
जइ करिएव्वउं पसमु विजउ तो करेव्वउं करणहं ।
जइ अ करेवा करण-विजउ तो मणु निचलु धरहु ।
निचलु मणु पुणु धरहु करिउ जउ राग-दोसहं ।
तह विजउ कराहि रागाइअहं अविचलु सामाइउँ करिवि ।
अविचलु सामाइउँ करहि निम्ममत्तु निम्मलु करवि ॥७६॥

७६. भल्लेति शीभादित्वात् भद्रम् तस्य भावो भद्रत्वम् भद्रता वा। यदि त्वं काङ्क्षसि तदा भद्रत्वं प्रशमेन लभसे। ननु स एव नास्ति अतस्तदुपायो वाच्य इत्याह। यदि प्रशमः कर्तव्यस्तदा करणानां विजयः कर्तव्यः। ननु तद्विजयेप्युपायं न विद्म इत्याह। यदि च करण-विजयः कर्तव्यस्तदा मनो निश्चलं विषयेषु अगामुकं यूयं धरत बिभृत। ननु तत् स्थिरं कथं बिभृम इत्याह। रागद्वेषयोर्जयं कृत्वा मनः पुनः निश्चलं धरत। रागद्वेषजय एव मनोनिश्चलताकारणम् इत्यर्थः। ननु तद्विजयमपि कथं करोमीत्याह। तथा अविचलं सामायिकं कृत्वा रागादीनां विजयं कुरु। ननु तदपि कथं रचयामीत्याह। निर्ममत्वं निर्मलं कृत्वा अविचलं सामायिकं कुरु। एकस्मिन्नपि वृत्ते हेतुहेतुमद्भूतानि बहूनि वाक्यानि। तेषु च संबोध्यस्य सामान्यविवक्षया एकत्वं विशेष-विवक्षया च बहुत्वम् इति तत्क्रियायामपि काङ्क्षसि धरतेत्यादौ एक-वचनबहुवचनानि न विरुद्धानीति। वस्तुवदनककर्पूरयोर्योगे सार्धं[3] छन्दः॥

भल्लप्पणु। "त्व-तलोः प्पणः" [४३७]॥ प्रायोधिकारात् भल्लत्तणु॥

करिएव्वउं। करेव्वउं। करेवा। "तव्यस्य इएव्वउं-एव्वउं एवाः" [४३८]॥

लहि। करिउ। करिवि। करवि। "क्त्व इ-इउ-इवि अवयः"[४३९]॥

---

१ D °महसि लहसि लहसि भल्लप्पणु. २B °हउ; C °हउ. ३D सार्धच्छदः

अन्तु करेप्पि निरानिउ कोहहों
अन्तु करेप्पिणु सव्वह माणहों ।
अन्तु करेविणु माया-जालहों
अन्तु करेवि नियत्तसु लोहहों ॥ ७७ ॥

जइ चएवं मणसि संसारु सिव-सुक्खु भुञ्जण तुरिउ ।
तो किर सङ्गु मुञ्चणहिं करि मणु ।
तह सुह गुरु सेवणहं निम्ममत्तु अइ-दढु करेविणु ॥ ७८ ॥
चित्तु करेवि अणाउलउँ वयणु करेप्पि अचप्पलउं ।
कम्मु करेप्पिणु निम्मलउँ झाणु पजुञ्जसु निचलउं ॥७९॥

७७ निरानिउ इति निश्चितम् क्रोधस्य अन्तं विनाशं कृत्वा सर्वस्य मानस्य अन्तं कृत्वा मायैव जाल सुगतिगमननिरोधकत्वात् आनाय तस्य अन्त कृत्वा लोभस्य अन्त कृत्वा निवर्तस्व तिष्ठ । कषायरहितो भवेति भाव । वदनकं छन्द ॥

करेप्पि । करेप्पिणु । करेविणु । करेवि ।"एप्प्येप्पिण्वेव्येविणवः"[४४०]॥

७८. यदि समारं त्यक्तु मन्यसे अभिलपसि शिवसौख्यं च भोक्तुं संवेदयितु त्वरित उत्सुक तदा किल इति आप्तवादे । सङ्गं पुत्रमित्रकलत्रादिस्वजनसम्बन्धं मोक्तु तथा शुभं गुरु सेवितुं निर्मम त्वं च कर्तुं मन अतिदृढम् अतिनिश्चलं कुरु । निर्ममत्वं वा अतिदृढम अतिनिश्चल कर्तुं मन कुरु । अभिलपस्वेत्यर्थ. । एवं मनसि कृते संसारोच्छेदो मुक्तिप्राप्तिश्च ध्रुव भविष्यतीति भाव । मात्रा छन्द ॥

७९. चित्तम् अनाकुल विषयै अनुपद्रुतं कर्तुं वचनम् अचप्पलउं इति सत्यं कर्तुम कर्म कायव्यापारं निर्मलं निष्पापं कर्तुम् ध्यानं निश्चलं

---

१ O विरोधकत्वात्

जमुण गमेप्पि गमेप्पिणु जन्हवि
गम्पि मरस्सइ गम्पिणु नर्मद ।
लोउ अजाणउ जं जलि वुड्डइ
नं पसु किं नीरइं सिव-सर्मद ॥ ८० ॥
नाइ निवेसिउ नउ लिहिउ नावइ टङ्कक्किण्णु ।
जणि पडिबिम्बिउ जणु सहजु करि जिणु मणि ओइण्णु॥८१

प्रयुङ्क्ष्व । धर्मध्याने निश्चले मति मनोवाक्कायसंयमो भविष्यतीति भावः । झंवटकं छन्दः ॥

चएवं । मुञ्चण । मुञ्चणहिं । सेवणइं । करेविणु । करेवि । करेप्पि । करेप्पिणु । "तुम एवमणाणहमणहिं च" [४४१] । चकाराद् एप्पि-एप्पिणु एवि एविणवः ॥

८०. यमुनां गत्वा जाह्नवीं गत्वा सरस्वतीं गत्वा नर्मदां च गत्वा यत् अज्ञाता युक्तायुक्ताविवेचनशीलो लोकः पशुरिव महिषादितिर्यगिव जले ब्रुडति निमज्जति तत् किं नीराणि शिवशर्मदानि । न तज्जलानि स्वमध्यपातिभ्यः सदास्वान्तःस्थितेभ्यो मत्स्यादिभ्य इव मुक्तिशर्म प्रयच्छन्तीति भावः । वदनकं छन्दः ॥

[ गेमेप्पि । गमेप्पिणु । गम्पि । गम्पिणु । "गमेरेप्पिण्वेप्प्योरेर्लुग्वा" [४४२]॥ अजाणउ । "तृनोणअः" [४४३] । तृन्प्रत्ययस्य अणअः ॥ ]

८१. निवेशितः स्थापितः तम् इव । लिखितः कुड्यादौ चित्रितः तम् इव । टङ्काभिः उत्कीर्णः प्रस्तरे विलिखितः तम् इव । प्रतिबिम्बितः दर्पणादौ लब्धप्रतिबिम्बः तम् इव । सहजः स्वभावः तम् इव च जिनं मनसि अवतीर्णं कुरु । दोहकं छन्दः ॥

नं । नाइ । नउ । नावइ । जणि । जणु । "इवार्थे नं नउ नाइ-नावइ-जणि-जणवः" [४४४] ॥

---

१ BCD न. २ This part of grammar is not given in BCD.

लिङ्गु अतन्त्रउँ जइ नो कृवा ।
लहइ कृवालु निव्वुदि नृवा ॥ ८२ ॥
इअ सव्व-भास-विनिमय परिहिं
परम तत्तु सव्वु वि कहिवि ।
निअ-कण्ठ-माल ठवि नृव-उरसि
गइअ देवि मङ्गलु भणिवि ॥ ८३ ॥

८२. हे नृप यदि कृपा प्राणिषु दया नास्ति तदा लिङ्गं दर्शनिना वेषधारणम् अतन्त्रम् अप्रधानम् । दुर्गतौ पतत कृपां विना न तेन परित्राण किमपि भवतीति भाव । ननु कृपापरस्यापि समीहित सिद्धिर्न भविष्यतीत्याह । कृपालु निर्वृतिं[1] लभते समासादयति । सुमनोरमा छन्द ॥

इह अपभ्रंशोदाहरणेषु कापि कापि पूर्वं लिङ्गव्यभिचारो दर्शितोस्ति अतस्तत्सिद्धयर्थम् अत्र "लिङ्गम् अतन्त्रम्" [४४५] इति लक्षण वचोभङ्गयन्तरेण उक्तम् ॥

निव्वुदि । "शौरसेनीवत्" [४४६] इत्यनेन अपभ्रंशे शौरसेनीवत् कार्यम् । अत "तो दोऽनादौ शौरसेन्याम्" [४.२६०] इत्यादिना तस्य द । एवम् अन्यदपि ऊह्यम् ॥

अपभ्रंशभाषा समाप्ता ॥

८३. अधुना श्रुतदेवताया उपदेश समर्थयन् स्थानगमनपूर्वं च तस्या परमार्हतश्रीकुमारपालभूपतिं प्रति प्रसादातिशयं प्रकटयन् तदुर्दुरितमङ्गलव्याजेन च महाकाव्यपरिसमाप्तौ ग्रन्थकारो मङ्गलम् आह । इति पूर्वोक्तयुक्त्या सर्वभाषाणा प्राकृतादिभाषाणा विनिमया व्यत्यया । परिहिं इति सांप्रादित्वात् गाथाभि कृत्वा सर्वमपि परम

1 C निवृत्तिं

तत्त्वं कथयित्वा निजकण्ठमालां च नृपोरसि श्रीकुमारपालभूपकण्ठकन्दले स्थापयित्वा विन्यस्य देवी श्रुतदेवता मङ्गलं त्वं जिनप्रवचनप्रोत्सर्पणां कुर्याश्चिरं नन्द्या इत्यादि श्रेयोभिधायकं वाक्यं भणित्वा निजभुवनं संप्राप्ता ॥

प्राकृतादिभाषाकार्याणाम् अन्योन्य तेषु तेषु प्रागुदाहरणेषु विनिमयो दर्शित.। स च न सूत्रं विना सिध्यति । अतः विनिमयेतिशब्देन पर्यायान्तरेण "व्यत्ययश्च" [ ४४७ ] इति सूत्र विनिमयार्थम् उक्तम् ॥

उरसि । "शेषं संस्कृतवत् सिद्धम्" [४४८] । शेष यद् अत्र प्राकृतादिभाषासु अष्टमाध्याये नोक्त तत् सप्ताध्यायीनिबद्धसंस्कृतवदेव सिद्धम् । अतः यथा उरस्शब्दस्य ङयाम् उरे उरम्मि भवतः तथा क्वचिद् एतदपीति । एवम् अन्योदाहरणेष्वपि रूपविशेषो ज्ञेयः ॥

अष्टमस्याध्यायस्य उदाहरणप्रतिपादनद्वारेण चतुर्थ. पादः संपूर्णः ॥
एवं च व्याकरणाष्टमाध्यायलक्ष्यभूताः प्राकृतादिभाषाः समर्थिताः ॥

इति शुभम् ॥

इत्याचार्यश्रीहेमचन्द्रविरचितश्रीकुमारपालचरितप्राकृतद्याश्रयमहाकाव्यवृत्तौ

अष्टमः सर्ग समाप्तः ॥

तत्समाप्तौ च समाप्तं चेदं वृत्तितः प्राकृतद्याश्रयमहाकाव्यम् ॥

---

संतापापहदर्शनं शिवस्लादानोदितारांसनं
विश्वाध्यामृतदायिपादभजनं रत्नाकरानन्दनम् ।
श्रीकल्पद्रुमसोदरं कुवलयामोदप्रमोदोद्धुरं
कामोद्धासि कुरङ्गहारि सकलं भात्यत्र चान्द्रं कुलम् ॥ १ ॥
तस्मिन् सोभयदेवसूरिरभवत् क्लृप्ताङ्गवृत्तिस्तत.
संविग्नो जिनवल्लभो युगवरो विद्यालितारान्वरम् ।
तत्पट्टे जिनदत्तयोगितिलकः सन्मार्गपद्मार्यमा
ख्यातः श्रीजिनचन्द्रसद्गुरुरतः सौभाग्यभङ्ग्येकभूः ॥ २ ॥

विज्ञाः केचन लक्षणेथ कतिचित् तर्केपरस्यागमे
काव्येन्ये च समग्रशास्त्रचतुराः प्रायेण नामून् विना ।
व्यक्तुं नूतमिदं निधिर्बहुविधैः शास्त्रैर्विजाप्यसमान्
प्राज्ञान् राजसभास्खलम्भयदतो यान् जैत्रपत्राण्यरम् ॥ ३ ॥

भृङ्गायमाणपदपुष्कर राजहंसा
वर्णप्रतापजितपुष्करराजहंसाः ।
श्रीजैनचन्द्रपदपङ्कजराजहंसा-
स्ते जज्ञिरे जिनपतिप्रभवोत्थहंसाः ॥ ४ ॥

चातुर्विद्यक्रमाख्या विजिततदमृतक्षीरभूलीरहस्यो-
त्सर्गाख्यद्वन्द्वशृङ्गा स्तनितवरतपोभावना दानशीलाः ।
दुःप्रापाः स्वल्पपुण्यैः स्थगितपरगवीस्फूर्तिकीर्तिप्रपञ्चा
येषां पादप्रसादाद्भवति सुरगवी कामितार्थाय पुंसाम् ॥ ५ ॥

विष्वग्व्यतिष्ठितजिनालयदम्भदम्भ-
प्रालेयशैलजनितोत्तरदिग्वितर्काः ।
संचोपदं दधति संप्रति जैनपत्यं
ते श्रीजिनेश्वरयुगप्रवरा मुनीशाः ॥ ६ ॥

तेषामादेशमासाद्य कामकल्पद्रुमोपमम् ।
मूर्च्छोच्छेदसुधासारं श्रेय. श्रेयोद्रुनन्दनम् ॥ ७ ॥

नामिद्धं न विपक्षगामि च नवा नैकान्तिकं साधनं
येषां सत्प्रतिपक्षकं न विपर्ययेसावपि नो बाधितम् ।
जात्युद्भावननिग्रहच्छलपरव्याघातविश्राणकं
दृष्ट्वा यानपरे श्रयन्ति समिनो धीरा यताज्ञापराः ॥ ८ ॥

दत्तो मुदा तैर्जिनरत्नसूरि
क्षमाधिपैर्बोधमणिप्रदीपः ।
श्रीप्राकृतद्व्याश्रयगेहगर्भ-
स्थितं यदादर्शयदर्थजातम् ॥ ९ ॥

---

१ CD क्षीर. २ D येषे पद. ३ ग आद°।

श्रीमज्जिनेश्वरयतीश्वरदत्तदीक्षा-
शिक्षोऽत्र पूर्णकलशो गणिरल्पबुद्धिः ।
अन्योपकारिषु पदं परिलब्धुकामो
वृत्त्यानया किमपि तत् प्रकटीचकार ॥१० ॥

साहित्यतर्कागमशब्दविद्या-
शाणानिशातीकृतबुद्धिधारः ।
विच्छेद लक्ष्मीतिलको गणिर्मे
सब्रह्मचारी स्खलितोक्तिवही ॥ ११ ॥

यदत्र वितथं किंचित् बुद्धिमान्द्यात् प्रजल्पितम् ।
प्राज्ञैर्मयि कृपां कृत्वा तच्छोध्यं शुद्धमानसैः ॥ १२ ॥

नीराज्यार्केण पूर्वं मरकतघटिते भाजने व्योम्नि धृत्वा
पुष्पाण्यृक्षाणि सार्चि[1] कुमुदवनमहन्माङ्गलिक्यप्रदीपम् ।
धाता शान्त्यै विधत्ते सकलदिगधिपानल्पलं[2] यावदेषा
स्तात्तावन्मौक्तिकस्रग् दृषदहि विवृतिः प्राकृतद्व्याश्रयस्य ॥ १३ ॥

समर्थिता विक्रमराजवर्षे
हयान्तरिक्षज्वलनेन्दुसंख्ये ।
पुष्यार्कशस्यामलफाल्गुनैका
दशीतिथौ द्व्याश्रयवृत्तिरेषा ॥ १४ ॥

मानं त्रिंशदधिकद्विचत्वारिंशच्छतान्यभूत् ।
प्रत्यक्षरं गणनयामुष्या वृत्तेरनुष्टुभाम् ॥ १५ ॥

॥ ग्र० ५२१ ॥ निखिलग्रन्थाग्रं ४२३० ॥

---

१ सार्चि कु० ? २ °पानामल ?

# अक्षरानुक्रमविशिष्ट शब्दसूची ।




अ

अ s. च.
अइ ( संभावने ) ४. १६.
अइखेअरा ( अतिखेचरा ) ४. ४६.
√अइच्छ P ( गम् )
अइच्छइ ( गच्छति ) ७. ६.
अइदट्ठ ( अतिदृष्ट ) ८. ७८.
अइदुल्लह (अतिदुर्लभ) ३. ५४.
अइनिचल (अतिनिश्चल) २. ९१.
अइनिट्ठुहावण (अतिनिष्ठम्भकरण) ६. ४२.
अइमलय ( अतिमलय ) ४. ३४.
अइमुंतय ( अतिमुक्तक ) २. २६.
अइमुत्तय ( अतिमुक्तक ) २. २६.
१ अइसअ ( अतिशय ) १. ५.
२ अइसअ ( ईदृक् ) ८. ५२.
अइसीअल (अतिशीतल) ४. ४१.
√अई P. ( गम् )
अईइ ( गच्छति ) ७. ६.
अंग ( अङ्ग ) १. १९.
अंसु ( अंशु ) १. १६; २. ४५.
अंसुअ ( अश्रु ) १. ५५.
अकम ( अक्रम ) १. १४.
अकम्मस ( अकल्मष ) ३. ३५.
अकय ( अकृत ) २. ८८; ८. ४६.
अकयन्ध ( अकबन्ध ) २. ५७.
अकरणीअ ( अकरणीय ) २. ६०.
अकलङ्क ( SK ) १. १६; ६. ६.
अकसाय ( अकषाय ) ८. ७.
अकाली ( अकाला ) ४. ४६.
अकाम ( अकृश ) १. ७८.
अकिलिट्ठ ( अक्लिष्ट ) २. १.
अकुण्ठ ( अकुण्ठ ) १. १९.
अकूर ( अनीदृश् ) ३. ६५.
अक्क ( अर्क ) २. २३.
अक्कन्दावणय ( आक्रन्दकारक ) ६. ९०.
√अक्कस P. ( गम् )
अक्कसइ ( गच्छति ) ७. ६.
अक्ख ( अक्ष ) ७. ७.
अक्खअ ( अक्षय ) ८. ३२.
अक्खय ( अक्षीण ) १. ३७.
अक्खर ( अक्षर ) ८. २८, ३५.
अक्खलिअ ( अस्खलित )३. ३२.
अक्खाण ( आख्यान ) ३. ४०.
अक्खीण ( अक्षीण ) १. २७.
√अक्खोड P. ( कृष् )
अक्खोडिअ ( कृष्ट ) ७. ३३.
अक्खोह ( अक्षोभ ) ६. १०४.
अखम ( अक्षम ) २. ८९.
अखलिअ ( अस्खलित ) ३. ३१; ४. ३९; ५. ५०, ५३.
अग्गाणु ( अग्र्याणु ) २. ८६.
अग्गादिम ( अखाद्य ) ७. ६२.
अखिज्जमाण (अखिद्यमान)६.९०.
अखिल ( SK. ) २. ९१; ६. ८६

अक्खीण ( अक्षीण ) २ ८४
अक्खुज्ज ( अकुब्ज ) २. २७.
अखुट्टिअ ( अत्रुडित ) ६. ७७
अखुडिअ ( अखण्डित ) १ ३८,
६ ७८
अगणन्त ( अगणयत् ) १ ५२
अगणि ( अग्नि ) ३. ४८
अगणिअ ( अगणयित्वा ) ३ ३६,
४ ४२.
अगरु ( SK ) २ २१,४५,५ १३
अगिज्झन्त ( अगृध्यत् ) ७. ५६.
अगुम्मिअ ( अमोहित ) ७. ४७.
अगेज्झा ( अगृह्या ) ३ ५७.
अग्ग ( अग्र ) २. ४७, ८७
अग्गओ ( अग्रत ) १ ३८.
अग्गि ( अग्नि ) ३. ४८, ५१; ४
३४, ३५, ५ ५६, ६ १०३.
१ √ अग्घ P ( राज् )
अग्घिअ ( राजित ) ६. ६३.
२ अग्घ (अर्घ ) १. ४९,६५,६. १२.
√अग्घव P (पृ)
अग्घविअ ( पूर्ण ) ७. १४.
अग्घाड (पृ)
अग्घाडइ (पूरयति) ७ १४
अघ ( SK.) ७ ६९.
अघिसिअ (अग्रस्त) ७ ४६
√अङ्क
अङ्किअ ( अङ्कित ) २ ५१
१ अङ्क ( SK =उत्सङ्ग ) १ ५५
२ अङ्क ( SK.=चिह्न ) १ ५५,४ ७०.
अङ्कुर ( SK )२. ४६, ७७,५ १८
अङ्कुस ( अङ्कुश ) २ ३८.
अङ्कोल्ल (अङ्कोठ=वृक्षविशेष)२ ३७.
अङ्कोल्लतेल्ल (अङ्कोठतैल) ३. ७९.
१ अङ्ग ( SK ) १. ६०, २. ११,
३४, ५९, ८५, ४ १६, ५.
१०२, ७ १६, ५८.
२ अङ्ग ( SK=देश ) ४. ६१
अङ्गण ( SK. ) ६. ६३.
१ अङ्गय ( अङ्ग ) ४ २७
२ अङ्गय ( अङ्गद ) १ ७६.
अङ्गार ( SK ) १. ३५.
अङ्गुअ ( इङ्गुद ) १ ६०.
√अङ्गुम P (पृ)
अङ्गुमिअ (पूर्ण) ७ १५
अङ्गुलि ( SK ) ६ ३४.
अचप्पलअ ( सत्य ) ८ ७९.
अचयन्तकिय ( अशक्नुवत्कृत )
६. ५३.
अचल ( SK ) ३ ११.
अचलिअ ( अचलित ) ७. ६३.
अचुच्छ ( अतुच्छ ) २. ३८
१ अच्छ ( SK ) २ २७.
२°अच्छ ( अच्छि=अक्षि ) २ ८६,
७ २१, ६४
अच्छअर ( आश्चर्य ) ३. २५
अच्छर°(अप्सरस्) १ १०,४.४३.
अच्छरस ( अप्सरस् ) १. १०.
अच्छरा ( अप्सरस् ) ४ १३.
अच्छरिअ ( आश्चर्य ) १ २४.
अच्छरिज्ज ( आश्चर्य ) ३. २५
अच्छरीअ ( आश्चर्य ) ३ २५.
अच्छि ( अक्षि ) १. २४, २. ७१,
९०, ३. ४१, ७४, ८३, ४.
३०, ४९, ७८, ५. ७६, ८६,
६ ७, १५, २४, २९.

अच्छीविस (अक्षिविष) २. ८९.
अच्छेर (आश्चर्य) १. ४१; ३. २४.
अछम्म (अछद्म) ३. ५७.
अछीण (अक्षीण) २. ८४.
अछुच्छ (अतुच्छ) २. ३८.
अज (SK) ४. ४७.
अजडा (SK) ३ ७५
अजडिल (अजटिल) २. ३५.
अजरिज्जन्त (अजीर्यमाण) ७. ८७
अजलचर (SK) २ २४.
अजा (SK) ४. ४७.
अजाणअ (अजातृ) ८. ८०.
अजुण्ण (अजीर्ण) १. ६५.
अजूरिअ (अखिन्न) ६. ९०.
१ अज्ज (अर्य आर्य वा) ४. ५१
२ अज्ज (अद्य) ४. ११, ७ ३३, ३८, ५८.
अज्जुण (अर्जुन) ५. ९, १२.
अज्जू (आर्या) १. ५२.
अज्जो (अर्य आर्य वा) ४. ५१.
अझ्झिरिय (अनि श्वसनशील) ७ ४४
अझरन्त (अस्मरत्) ६. ४४.
अझिज्जमाण (अक्षीयमाण) ६ १३
अझीण (अक्षीण) २ ८४.
√अञ्च P. (कृष्)
अञ्चिअ (कृष्ट) ७. ३१.
अञ्चल (SK) ३. ८८.
√अञ्ज्
+वि. वञ्जिअ (व्यञ्जित) १. १८.
-वाञ्जिअ ,, २. ६९.
अञ्जलि (SK) १. २७, ५. ३०, ६. ३३.
√अट्
अटइ (अटति) २. ३५.
१ √अट्ट P. (कथ्)
अट्टिअ (कथित) ६. ८१
२ अट्ट (SK.) २. ८६.
अट्ठ (अर्थ=प्रयोजन) ३. ७.
अट्ठम (अष्टम) ३. ६८.
अट्ठि (अस्थि) ३ ७.
अड (अवट) २ ८१
√अड्डक्ख P. (क्षिप्)
अड्डक्खिअ (क्षिप्त) ६ ९६.
अड्ढ (अर्ध) ३ १३.
अण (ऋण) १. ८९.
अणउच्छण्ण (अनुत्सन्न) १. ७१.
अणउम्मिल्लिअ (अनुन्मीलित) ७. ६५.
अणओहिअ (अनवतीर्ण) ६. ५२.
अणकड्ढिअ (अकृष्ट) ७. ३१.
अणकढिअ (अक्वथित) ६. ८१.
अणकम्पिर (अकम्पनशील) ६. ३२
अणखिज्जिर (अखेदनशील) ७. ६०.
अणगुञ्जाविअ (अहासित) ७. ४१
अणगुप्पन्त (अव्याकुलीभवत्) ६. १०२.
अणगुम्मडिअ (अमोहित) ७. ४७
अणङ्ग (अनङ्ग) ५ १५, ७६, ७८, ८५.
अणचड्डुप्पिअ (अनर्पित) ६. २७.
अणचुक्क (अभ्रष्ट) २. ५.
√अणच्छ P. (कृप्)
अणच्छेइ (कर्षति) ७. ३२
अणछड्डिअ (अमुक्त) ६. ५६.
अणज्जमाणा (अज्ञायमाना) ७. ८९

सुन्देर (सौन्दर्य) १. ४०, २. ९, ३. २३, ४३, ४४; ५ १२.
सुपइट्ठ (सुप्रतिष्ठ) १ २८, २. ४०.
सुपञ्जल (सुप्राचल) ८ ३.
सुपडाय (सुपताक) २ ४०.
सुपरिट्ठ (सुप्रतिष्ठ) १. २८.
सुमण (सुमनस्) १. २३
√सुमर P (स्मृ)
सुमरन्त (स्मरत्) ६. ४५
सुमरण (स्मरण) ७ ९०
सुमिण (स्वप्न) १. ३४
सुर (SK) २ २४, ३ ६५, ४. ४५, ७ ५१, ५८
सुर-धणु (सुरधनुष्) ६ २२
सुर पुरी (SK) १. २६
√सुरभय्
सुरहेइ (सुरभयति) १ २२, ५ ५४
सुर वहु° (सुरवधू) ७. ९१.
सुर वहू ,, ६ ४२.
सुरहि (सुरभि) २. २१, २५, ३. ५, ५ ५४.
सुरी (SK) ७. १०१.
सुरुग्धज (_ध्वज) ३. ५८.
सुव (स्व) ३. ५९
सुवण्णमय (सुवर्णमय) २. ४४
सुवन्न (सुवर्ण) २ ४९.
सुवयंसा (सुवयस्या) ४ ५३
सुव्व (श्रुत्) ३. ५८.
सुसा (स्नुषा) २ ६८
सुसावग (सुश्रावक) ८ २९.
सुसीअ (सुशीत) २ १०
१सुह (सुख) ४ २१, ५. ८६, ७ ४७, ५१; ८ १४, २८, ३१, ३३, ४३, ५५, ५९
२सुह (शुभ) २ ४५, ८ ७८
१सुहअ (शुभद) २. २४
२सुहअ (सुभग) २. ३३. सुहय १ ७०
३सुहअ (सुखद) ३ ७.
सुह-कर (सुखकर शुभकर वा) २. २३.
सुह गर (शुभकर) ८ ५२
सुहड (सुभट) ६ ४२, ५३, ६९, ८४.
१सुहद (शुभद) २ २४.
२सुहद (सुखद) ५ ४९
सुहय s सुहअ
सुहयर (शुभतर) २. २३
सुह यरी (सुखकरी) २ १९
सुहा (सुधा) ७ ३६
सुहिअ (सुखित) ६ ११; ८ ३१
सुहुम (सूक्ष्म) ३ ५८
सूअ (सूत) १ ४८; ५. ६६.
√सुड P (भञ्ज्)
सूडिअ (भग्न) ६ ६९
१ √सूर P (भञ्ज्)
सूरिअ (भग्न) ६ ६९
२सूर (SK) १. ५८, ५९, ६३, ६५; ८. १८.
सूल (शूल) २. २०.
सूसास (सोच्छ्वास) २ ९.
√सृ
सारह (सारयत) ८. १८
+अनु. अणुसरेइ (अनुसरति) ४ ७४.

-अणुसरदु (अनुसरत) ८. ६०.
-अणुसरिअ (अनुसृत) ३. ३६.
+अप. ओसर (अपसर) ८. ५२.
+उद्. ऊसारिअ (उत्सारित) २. ६१.
+उप. उवसरिअ (उपसृत) ६. २९.
+निस्. नीसरन्त (नि:सरत्) ६. ४९.
+प्र. पसरिअ (प्रसृत) ६. ४८.
√सृज्
+व्युद् वोसिरन्त (व्युत्सृजत्) ७. ६३.
+वि. विसज्जिअ (विसृज्य) १. ८३.
√सृप्
+उप. उवसप्पन्ति (उपसर्पन्ति) १. ५०.
-उवसप्पिउ (उपसर्पितुम्) ६. ६४.
सेअ (स्वेद) २. ८९, ५ १०२; ७. १६.
सेअणअ (सेचनक) ६. ६१
सेउ (सेतु) ७. ८७.
सेज्ज° (शय्या) ३. २.
सेज्जा " १. ४०, ५ ९७
सेणा (सेना) ६. ७९.
सेणिअ (सैनिक) ६. ८०, ९१.
सेन्न (सैन्य) २. ३, ६. ६३,९०, ९३; सिन्न २. ३; ६. ९२.
सेफ (श्लेष्मन्) ३. २०.
सेय (श्रेयस्) १. २३.
सेर (स्मेर) ३. ३३.
सेल (शैल) २. ३, २८; ७. ७८; ८. १०.
सेल्ल (कुन्त) १. ३९; २. १८; ६. ६६.
√सेव्
सेवणह (सेवितुम्) ८. ७८.
सेवा (SK) ३. ४६. ७. २.
सेवेअव्व (सेवितव्य) ८. ३४.
सेव्व° (सेवा) ३. ४६.
सेस (शेष) ६. १००, ७. ९७.
√सेह P (नश्)
सेहइ (नश्यति) ७ २२.
सेहर (शेखर) ३. ६३.
सेहालिआ (शेफालिका) ५. ५९; ६. ८.
सोअ (शोक) ७. ५२.
सोअमल्ल (सौकुमार्य) ३ २५.
सोअरा (सोदरा) ४. ४.
सोक्ख (सौख्य) ७. ६.
सोक्खडा " ८. ५५.
सोडीर (शौटीर्य) ३. २३.
सोत्त (स्रोतस्) ३. ४६.
सोमाल (सुकुमार) २. १४.
√सोल्ल P (क्षिप्)
सोल्लिज्जइ (क्षिप्यते) ६. ९७.
सोवओग (सोपयोग) २ ५९.
सोहा (शोभा) २. ४१.
सोहिल्ल (शोभावत्) १. ७३.
√स्खल्
खलइ (स्खलति) ५. ५१.
खलिअ (स्खलित) ३. २१.
+प्रति. पडिक्खलिज्जन्त (प्रतिस्खल्यमान) १. ६९.

√स्तम्भ्

ठड्ढ (स्तब्ध) ३. ११.

ठम्भिअ (स्तम्भित) २. ८६.

थम्भिअ " २. ८६.

थम्भेविणु (स्तम्भित्वा) ८. २२.

+प्रति. पडिखाम्भिअ(प्रतिस्ताम्भित) २. ८६.

√स्तु

थुणइ (स्तौति) १. ६.

थुणन्ति (स्तुवन्ति) १. ६६.

थुणिज्जइ (स्तूयते) ७. ७१,७६.

थुव्वइ " ७. ७६.

थविअ (स्तुत) ३. ८१.

थुणिअ " २. ७३, ७.६९.

थुव्वन्त (स्तूयमान) ७. ७२.

थुणिय (स्तुत्वा) १. ७२.

√स्तृ

+अव. आच्छरिअ (अवस्तृत) ३. १९; ६. १०.

–ओच्छरिय (अवस्तृत) २.७६.

+वि. वित्थरिअ(विस्तृत) ७.६५.

√स्त्यै

ठीण (स्त्यान) ३. ८.

थीण " १. ५५; ३. ८.

√स्था

ठाइ (तिष्ठति) ८. १५.

ठवइ (स्थापयति) ८. ५३.

ठिअ (स्थित) १. ७५; २. ८७; ३. ७२, ७८; ८. ३५, ३६, ६७.

*ट्ठिय " ३. ९; ६. ४२.

*ठिअ " ६. ११.

ठवि (स्थापयित्वा) ८. ८३

+ अधि. अहिट्ठिअ (अधिष्ठित) ६. २६.

+उद्. उट्ठइ (उत्तिष्ठते) ८ ७५.

–उट्ठन्ति (उत्तिष्ठन्ति) १. ५२.

–उट्ठिअ (उत्थित) १. ५३, ४. ५, ६. १२.

–ओट्ठिअ " १. ७१

+सम्. संठविअ (संस्थापित) १. ४७.

–सठाविय " १. ४७.

√स्ना

ण्हाएइ (स्नाति) ५. २३

ण्हायइ " ५. २२

ण्हाय (कृतस्नान) ५. ६०.

सिनात " ८. ८.

ण्हाऊण (स्नात्वा) १. ६४.

न्हाउं " ६. ११.

√स्निह्

णिद्ध (स्निग्ध) २. ३७, ३५४

सणिद्ध " ३. ५४.

सिणिद्ध " ३. ५४.

√स्फाटय्

+परि. परिफाडिअ(परिस्फाटित) ७. १८.

√स्फुट्

फुट्टिअ (स्फुटित) ७ ६४.

फुडिअ " ३. १२

√स्फुर्

फुरन्ति (स्फुरन्ति) ५. ५६

+वि. विप्फुरन्ति (विस्फुरन्ति) ५. ६७.

–विप्फुरन्ते " ५. ६६

√स्मृ
सुमरि (स्मर) ८. ४२.
सरन्त (स्मरत्) ६. ४६.
सुमरिअ (स्मृत्वा) ३. ५५.
+अनु. अणुसरन्त (अनुस्मरत्) ७. ४९.
√स्वप्
सुवइ (स्वपिति) १. ४४.
सोवइ ,, १. ४४.
सुअन्ति (स्वपन्ति) ६. १००.
सुत्त (सुप्त) ३. ३२; ४. ७.

ह

१हंस (SK) ५. ४६, ४९, ६५.
२हंस (SK=आत्मा) ८. १५.
हंहो (SK=सबोधने) ७. ९४.
√हक्क P (नि-सिध्)
हक्किअ (निषिद्ध) ६. ६७.
हक्कमाण (निषेधत्) ६. ९१.
√हक्खुव P (उद्-क्षिप्)
हक्खुविअ (उत्क्षिप्त) ६. ९८.
हञ्जे (चेट्याह्वाने) ७. १०१.
√हण P (श्रु)
हणिअ (श्रुत) ६. ३९.
हणुमन्त (हनूमत्) १. ७४.
हणुमा ,, ३. ८४.
हत्थ (हस्त) १. ७८, २. १०, ३. ६९; ४. २८; ५ ४२; ६. ९८.
हत्थि (हस्तिन्) ६ ७६.
हद्धी (निर्वेदे) ४. ८.
√हन्
हणइ (हन्ति) ७. २७.
हम्मइ ,, ७. ७९.
हणीअ (जघन) ४. ४७.
हणिही (हनिष्यति) ४. २२.
हणिज्जइ (हन्यते) ७. ७८.
हणिज्जए ,, ७. ७७.
हम्मइ ,, ७. ७७, ७८.
हणिअ (हत) ३. २४, ५६, ८४.
हय ,, १. ७, ४९, ६५, ८९, २. ३, ४. ४२.
हणन्तअ (घ्नत्) ८. २५.
हन्तूण (हत्वा) ७. ७९.
+आ. आहअ (आहत) ३. २९.
–आहय ,, ४. ४२.
हन्तव्व (हन्तव्य) ७. ७५.
हन्द (गृहाणार्थे) ४. ३.
हन्दि (विकल्पे) ४. २; (सत्ये) ४. २; (पश्चात्तापे) ४. २, (निश्चये) ४. २. (विषादे) ४. २, (गृहाणार्थे) ४. ३.
हय (SK) २. ६३, ८७; ६. ६४, ७६, ९०.
१हर (SK) १. २६, ३७; ३. ४४.
२°हर S घर.
°हरअ S घर.
हरडई (हरीतकी) १. ६५.
१हरण (SK) १. ८२; २. ४५, ४६, ६६, ७०, ८९; ३. २८, ३७, ३८, ५२; ५. ७३.
२हरण (ग्रहण) ७. ४८.
°हरय S घर.
१हरि (SK=विष्णु) १. २६, ३०, ४०, ४४, ४७.
२हरि (SK=इन्द्र) ७ ९७.

३ हरि (SK=सिंह) २. १.
हरिअन्द (हरिश्चन्द्र) ३. ३९.
हरिआ (हीका) ७ ९.
हरिआल (हरिताल) ३. ६१.
हरिण (SK) ५. ७५.
हरिणच्छी (हरिणाक्षी) ३. ६७.
हरिस (हर्ष) १. १४; ३. ५०, ६५; ४. २३; ५. १४, ७८, ८६; ६. १३, २७, ७६; ७. ६५.
हरिसओ (हर्षतः) ५. ९४.
हरे (संभाषणे रतिकलहे क्षेपे च) ४. १३.
हलद्द° (हरिद्रा) १. ५८; ४. ५०.
हलद्दि° ,, १. ५९; ४. ५०.
हलबोल (कोलाहल) ४. ७१.
हला (SK) ४. १०.
हलिआर (हरिताल) ३. ६१.
हलिद्द° (हरिद्रा) २. ६३.
हलिद्दि° ,, १. ५९.
हलिद्दी ,, ७. १६.
हलुअ (लघुक) ३. ६१.
हले (सख्या आमन्त्रणे) ४. १०.
हल्लप्फल (औत्सुक्य) ५ ७४.
हव s भू.
√हस्
हसइ (हसति) ५. ६८.
हसए ,, ५. ९१.
हसेइ ,, ४. १२.
हसन्ति ५. ६०, ७१.
हसामु (हसामि) ५. ९६.
हसामो (हसामः) ५. ९०.
हसउ (हसतु) ५. ८४, ९६.
हसेउ ,, ५. ८४.
हसन्तु ५. ९९.
हससु (हस) ५. ९६.
हसह (हसत) ५. ९९.
हासाविअ (हासित) ५. ७८.
हसन्तअ (हसत) ५. १०६.
हसई (हसन्ती) ५. १०६.
हसन्तीआ ,, ४. ४२.
हसिऊणं (हसित्वा) ५. ८२.
+उप. उवहससे (उपहससि) ५. ६५.
–उवहसिअ (उपहसित) २. ९९.
–ऊहसिअ ,, २. ९९.
–ओहसिअ ,, २. ९९.
–उवहसमाणी (उपहसन्ती) ५. १०६.
+वि. विहसइ (विहसति) ५. ८३.
–विहसए ,, ५. ६४.
–विहसेइ ,, ५. ८३.
–विहासिहिइ (विहासिष्यति) ५. ८३
–विहसेहिइ ,, ५. ८३.
–विहसेज्ज (विहसेत्) ५. ८५.
–विहसेज्जा ,, ५. ८५.
–विहसिय (विहासित) ५. १.
–विहसन्त (विहसत्) ३ ८८; ५. ८४, १०६.
–विहसेन्त ,, ५. ८४.
विहसन्ती ५. १०६
विहासिउ (विहासितुम्) ५. ८२
विहसेउं ,, ५. ८२.
–विहसेऊण (विहस्य) ५. ८२.

हसिर (हसनशील) ३. ७४, ८९; ७. ४१.

√हस्तय्

हत्थउ (हस्तयतु) ८. ३८.

√हा

हीण (हीन) १. ३६.

हाणि (हानि) ७. ७.

हार (SK) १. ४३; २. ३८; ४. ९८; ६. २९.

√हारव P (नाशय्)

हारविअ (नाशित) ६. २०.

हारावलि (SK) ४. ८२.

°हारि (हारिन्) ३. ४३.

हाहा (SK) ५. ५१.

हि (SK) ५. ७९; ८. १७.

हिअ (हृदय) २. ७५; ५. ८४; ६. २९.

हिअअ ,, १. ८०; २. ४७, ७५; ६. १७, २७, ३६; ७. २८, ३१, ८१. हिअय ३. ५१; ६. १०१; ७. १९, २०, २९, ४५. हिदय ३. ३५.

हिअउल्ल (हृदयक) ८. ७३.

हित (SK) ८. २७.

हितपक (हृदय) ८. ७.

हिन्थ (त्रस्त) ३. ६७, ७३.

हिदा (हृदि) ८. ५.

हिन्ताल (SK) ३. ६५.

हिम-गिरि (SK) ८. २०.

हियय ˢ हिअअ.

हिर (किलार्थे) ४. ७.

हिरिआ (ह्रीका) ३. ८९; ७. ३०.

ही (खेदे) ७. २, ५, १२.

हीमाणहे (निर्वेदे) ७. १०२, (आश्चर्ये) ७. १०२.

हीर (हर) १. ३७.

हीही (विदूषकाणां हर्षद्योतने) ७. १०२.

१ √हु

हुणइ (जुहोति) ७. ७०.

हुणिज्जइ (हूयते) ७. ७१.

हुणिज्जए ,, ७. ७५.

हुव्वइ ,, ७. ७१, ७५.

२ हु (निश्चये) १. ५, ६, १६, १७; २. ५९, ६०, ६५; ३. ५८, ७६, ८१, ८२; ४. ११, ६५, ७१, ७३; ५. १२, ९६, १०१; ७. ६, १६, २६, २८, ४३, ६२, ८७, ८. १६, २४, ६९, ७४, (ऊहे) ४. ११; (संभवने) ४. ११, २२; ६. ९९; (संशये) ४. १२; (विस्मये) ४. १२, ८९.

३ हु (पादपूरणे) ८. २६, २७, ४९.

हुं (दाने) ४. १०, (पृच्छायाम्) ४. ११; (निवारणे) ४. ११.

हुअ ˢ भू.

हुप्प ˢ भू.

हुलण (क्षेपण) ६. ९७.

हुव ˢ भू.

हुडुक्क (एतन्नामवाद्य) ८. ६८.

हूण (SK) ४. ६१.

√हृ

हरइ (हरति) ५. ६
हरउ (हरतु) ७ ४२.
हरिअ (हृत) १ ८६
हरिज्जन्ती (ह्रियमाणा) ७ ८.
+ अप अवहरमाण (अपहरमाण) १. १
+ उद् उद्धरिअ (उद्धरित) ८ २५
+ परि. परिहरि (परिहर) ८ १८, ४८.
+ प्र. पहरिउ (प्रहर्तुम्) ६ ०२, ५४
+ वि विहरदु (विहरतु) ७ ९२
+ व्या वाहरिज्जन्ती (व्याह्रियमाणा) ७ ८९.
+ सम् सहर ४. ५८

हट्ट (अध स्थल) ३ ७२, ५ ५१
हेमन्त (sk) ५. ६६.
हो s भू

√ह्वल

+ वि. विब्भलिआ (विह्वला) ३ २१.
–विहालिअ (विह्वलित) ३ ४२.

# APPENDIX

BEING

THE EIGHTH ADHYĀYA ( Chapter )

OF

## SIDDHA-HEMA-ŚABDĀNUŚĀSANA

( HEMACANDRA'S PRAKRIT GRAMMAR )

WITH

HIS OWN COMMENTARY, PRAKĀŚIKĀ

---

# परिशिष्टम् ।

आचार्यश्रीहेमचन्द्रविरचितस्य

सिद्धहेमचन्द्राभिधस्य शब्दानुशासनस्य

प्रकाशिकानामस्वोपज्ञवृत्तिसहितस्याष्टमोऽध्यायः ॥

√हृ

हरइ (हरति) ५ ८
हरउ (हरतु) ७ ४२
हरिअ (हृत) १ २६
हरिज्जन्तं (ह्रियमाणा) ७ ८६
+ अप अवहरमाण (अपहरमाण) १ १
+ उद् उद्धरिअ(उद्धरित)६ २५
+ परि परिहरि (परिहर) ८ १४, ८८
+ प्र पहरिउ (प्रहर्तुम्) ६ ५२, ५४
+ वि विहरदु (विहरतु)७ १३
+ व्या वाहरिज्जन्ती (व्याह्रियमाणा) ७ ८९
+ सम् सहर ४ ५८

हेट्ठ (अध स्थल) ३ ७२ ५ ५१
हेमन्त (SK) ५ ६६
हो s भू

√ह्वल

+ वि विब्भलिआ (विह्वला) ३ २१
–विह्वलिअ (विह्वलित) ३ ४३

# APPENDIX

BEING

## THE EIGHTH ADHYĀYA ( Chapter )

OF

## SIDDHA-HEMA-ŚABDĀNUŚĀSANA

( HEMACANDRA'S PRAKRIT GRAMMAR )

WITH

HIS OWN COMMENTARY, PRAKĀŚIKĀ

---

# परिशिष्टम् ।

आचार्यश्रीहेमचन्द्रविरचितस्य

सिद्धहेमचन्द्राभिधस्य शब्दानुशासनस्य

प्रकाशिकानामस्वोपज्ञवृत्तिसहितस्याष्टमोऽध्यायः ॥

ॐ ॥ अथ प्राकृतम् ॥ १ ॥

अथशब्द आनन्तर्यार्थोऽधिकारार्थश्च ॥ प्रकृतिः संस्कृतम् । तत्र भवं तत आगतं वा प्राकृतम् । संस्कृतानन्तरं प्राकृतमधिक्रियते ॥ संस्कृतानन्तरं च प्राकृतस्यानुशासनं सिद्धसाध्यमानभेदसंस्कृतयोनेरेव तस्य लक्षणं न देश्यस्य इति ज्ञापनार्थम् । संस्कृतसमं तु संस्कृतलक्षणेनैव गतार्थम् । प्राकृते च प्रकृतिप्रत्ययलिङ्गकारकसमाससंज्ञादयः संस्कृतवद् वेदितव्याः ॥ लोकाद् इति च वर्तते । तेन ऋ-ॠ-ऌ-ॡ-ऐ-औ-ङ-ञ-श-ष-विसर्जनीय-प्लुत-वर्जो वर्णसमाम्नायो लोकाद् अवगन्तव्यः । ङ-ञौ स्ववर्ग्यसंयुक्तौ भवत एव । ऐदौतौ च केषांचित् । कैतवम् । कैअवं ॥ सौन्दर्यम् । सौंअरिअं ॥ कौरवाः । कौरवा ॥ तथा अस्वरं व्यञ्जनं द्विवचनं चतुर्थीबहुवचनं च न भवति ॥

बहुलम् ॥ २ ॥

बहुलम् इत्यधिकृतं वेदितव्यम् आ शास्त्रपरिसमाप्तेः ॥ ततश्च । क्वचित् प्रवृत्तिः क्वचिद् अप्रवृत्तिः क्वचिद् विभाषा क्वचिद् अन्यदेव भवति । तच्च यथास्थानं दर्शयिष्यामः ॥

आर्षम् ॥ ३ ॥

ऋषीणाम् इदम् आर्षम् । आर्षं प्राकृतं बहुलं भवति । तदपि यथास्थानं दर्शयिष्यामः । आर्षे हि सर्वे विधयो विकल्प्यन्ते ॥

दीर्घ-ह्रस्वौ मिथो वृत्तौ ॥ ४ ॥

वृत्तौ समासे स्वराणां दीर्घह्रस्वौ बहुलं भवतः । मिथः परस्परम् ॥ तत्र ह्रस्वस्य दीर्घः ॥ अन्तर्वेदिः । अन्तावेई ॥ सप्तविंशतिः । सत्ता-

१ P ॐ नमः सिद्धेभ्यः. २ B °र प्रा°. ३ A प्राकृतानु°. ४ B दे नेरेव. ५ B °ज्जौ. ६ PB °वर्ग°. ७ AB सौअ°. ८ B °था च स°.

वीसा ॥ क्वचिन्न भवति । जुवइ-अणो ॥ क्वचिद् विकल्पः । वारी-मई वारि-मई ॥ भुजयन्त्रम् । भुआ-यन्तं भुअ-यन्तं ॥ पतिगृहम् । पई-हरं पइ-हरं ॥ वेलू-वणं वेलु-वणं ॥ दीर्घस्य ह्रस्वः । निअम्बसिलें-खलिअ-वीइ-मालस्स ॥ क्वचिद् विकल्पः । जउँण-यडं जउँणा-यडं । नइ-सोत्तं नई-सोत्तं । गौरि-हरं गौरी-हरं । वहु-मुहं वहू-मुहं ॥

## पदयोः संधिर्वा ॥ ५ ॥

संस्कृतोक्तः संधिः सर्वः प्राकृते पदयोर्व्यवस्थितविभाषया भवति ॥ वासेसी वास-इसी । विसमायवो विसम-आयवो । दहि ईसरो दही-सरो । साऊअयं साउ-उअयं ॥ पदयोरिति किम् । पाओ । पई । वॅच्छाओ । मुद्धाइ । मुद्धाए । महइ । महए ॥ बहुलाधिकारात् क्वचिद् एकपदेपि । काहिइ काही । विइओ वीओ ॥

## न युवर्णस्यास्वे ॥ ६ ॥

इवर्णस्य उवर्णस्य च अस्वे वर्णे परे संधिर्न भवति ॥ न वेरि-वग्गे वि अवयासो ॥ वन्दामि अज्ज-वइरं ।

> दणुइन्द-रुहिर-लित्तो सहइ उइन्दो नह-प्पहावलि-अरुणो ।
> संझा-वहु-अवऊढो णव-वारिहरो व्व विज्जुला-पडिभिन्नो ॥

युवर्णस्येति किम् ।

> गूढोअर-तामरसाणुसारिणी भमर-पन्ति व्व ॥

अस्व इति किम् । पुहवीसो ॥

## एदोतोः स्वरे ॥ ७ ॥

एकार-ओकारयोः स्वरे परे संधिर्न भवति ॥

> वहुआइ नहल्लिहणे आबन्धन्तीएँ कञ्चुअं अङ्गे ।
> मयरद्धय-सर-धोरणि-धारा-छेअ व्व दीसन्ति ॥ १ ॥

---

१ B °ई । वेणुवनं । वेलू° . २ A °ल-अल° . ३ B गोरिहरं. ४ B गौरीहरं. ५ A वच्छा°. ६ B छेउ व्व.

*उवमासु अपज्जत्तेभ-कलभ-दन्तावहासमूरुजुअं ।*
*तं चेवं मलिअ-बिस-दण्ड विरसमालक्खिमो एण्हिं ॥ २ ॥*

अहो अच्छरिअं ॥ एदोतोरिति किम् ।

*अत्थालोअण तरला इअर-कईणं भमन्ति बुद्धीओ ।*
*अत्थ च्चेअ निरारम्भमेन्ति हिअअं कइन्दाणं ॥ ३ ॥*

स्वरस्योद्वृत्ते ॥ ८ ॥

व्यञ्जनसंपृक्तः स्वरो व्यञ्जने लुप्ते योवशिष्यते स उद्वृत्त इहोच्यते । स्वरस्य उद्वृत्ते स्वरे परे संधिर्न भवति ॥

*विससिज्जन्त महा-पसु-दंसण संभम परोप्परारूढा ।*
*गयणे च्चिअ गन्ध-उडिं कुणन्ति तुह कउल-णारीओ ॥ १ ॥*

निसा-अरो । निसि अरो । रयणी-अरो । मणुअत्तं ॥ बहुलाधिकारात् क्वचिद् विकल्पः । कुम्भ-आरो कुम्भारो । सु-उरिसो सूरिसो ॥ क्वचित् संधिरेव । सालाहणो । चक्काओ ॥ अत एव प्रतिषेधात् समासेपि स्वरस्य संधौ भिन्नपदत्वम् ॥

त्यादेः ॥ ९ ॥

तिवादीनां स्वरस्य स्वरे परे संधिर्न भवति ॥ भवति इह । होइ इह ॥

लुक् ॥ १० ॥

स्वरस्य स्वरे परे बहुलं लुग् भवति ॥ त्रिदशेशः । तिअसीसो । निःश्वासोच्छ्वासौ । नीसासूसासा ॥

अन्त्यव्यञ्जनस्य ॥ ११ ॥

शब्दानां यद् अन्त्यव्यञ्जनं तस्य लुग् भवति ॥ जाव । ताव । जसो । तमो । जम्मो ॥ समासे तु वाक्यविभक्त्यपेक्षायाम् अन्त्यत्वम् अनन्त्यत्वं च । तेनोभयमपि भवति । सद्भिक्षुः । सभिक्खू ॥ सज्जनः । सज्जणो ॥ एतद्गुणाः । एअ-गुणा ॥ तद्गुणाः । तग्गुणा ॥

---

१ B चेअ. २ A निरिअ. ३ B अच्छ च्चिअ. ४ B °सभेति. ५ B °कविन्द°. ६ B सभिक्खू. ७ B सज्जणो.

न श्रदुदो[1] ॥ १२ ॥

श्रद् उद् इत्येतयोरन्त्यव्यञ्जनस्य लुग् न भवति ॥ सद्दहिअं। सद्धा। उग्गय। उन्नय ॥

निर्दुरोर्वा ॥ १३ ॥

निर् दुर् इत्येतयोरन्त्यव्यञ्जनस्य वा लुग् भवति ॥ निस्सह नीसह। दुस्सहो दूसहो। दुक्खिओ दूहिओ ॥

स्वरेन्तरश्च ॥ १४ ॥

अन्तरो निर्दुरोश्चान्त्यव्यञ्जनस्य स्वरे परे लुग् न भवति ॥ अन्तरप्पा ॥ निरन्तर। निरवसेस ॥ दुत्तर। दुरवगाह ॥ क्वचिद् भवत्यपि। अन्तोवरि ॥

स्त्रियामादविद्युत[1] ॥ १५ ॥

स्त्रियां वर्तमानस्य शब्दस्यान्त्यव्यञ्जनस्य आत्व भवति विद्युच्छब्द वर्जयित्वा। लुगपवाद ॥ सरित्। सरिआ ॥ प्रतिपद्। पाडिवआ ॥ सपद्। सपआ ॥ बहुलाधिकाराद् ईषत्स्पृष्टतरयश्रुतिरपि। सरिया। पाडिवया। सपया ॥ अविद्युत इति किम्। विज्जू ॥

रो रा ॥ १६ ॥

स्त्रियां वर्तमानस्यान्त्यस्य रेफस्य रा इत्यादेशो भवति। आत्त्वापवाद ॥ गिरा। धुरा। पुरा ॥

क्षुधो हा ॥ १७ ॥

क्षुधशब्दस्यान्त्यव्यञ्जनस्य हादेशो भवति ॥ छुहा ॥

शरदादेरत् ॥ १८ ॥

शरदादेरन्त्यव्यञ्जनस्य अत् भवति ॥ शरद्। सरओ ॥ भिषक्। भिसओ ॥

१ P °न्त्यस्य व्य°  २ A लुग न भवते  ३ B °वरि।  ४ P दर्त व°
५ A व[illegible]°  ६ A °रा

दिक्-प्रावृषोः सः ॥ १९ ॥

एतयोरन्त्यव्यञ्जनस्य सो भवति ॥ दिसा । पाउसो ॥

आयुरप्सरसोर्वा ॥ २० ॥

एतयोरन्त्यव्यञ्जनस्य सो वा भवति ॥ दीहाउसो दीहाउ । अच्छरसा अच्छरा ॥

ककुभो हः ॥ २१ ॥

ककुभ्शब्दस्यान्त्यव्यञ्जनस्य हो भवति ॥ कउहा ॥

धनुषो वा ॥ २२ ॥

धनुःशब्दस्यान्त्यव्यञ्जनस्य हो वा भवति ॥ धणुहं धणू ॥

मोनुस्वारः ॥ २३ ॥

अन्त्यमकारस्यानुस्वारो भवति ॥ जलं फलं वच्छं गिरिं पेच्छ ॥ क्वचिद् अनन्त्यस्यापि । वणम्मि । वणंमि ॥

वा स्वरे मश्च ॥ २४ ॥

अन्त्यमकारस्य स्वरे परेनुस्वारो वा भवति । पक्षे लुगपवादो मस्य मकारश्च भवति ॥ वन्दे उसभं अजिअं । उसभमजिअं च वन्दे ॥ बहुलाधिकाराद् अन्यस्यापि व्यञ्जनस्य मकारः ॥ साक्षात् । सक्खं ॥ यत् । जं ॥ तत् । तं ॥ विष्वक् । वीसुं ॥ पृथक् । पिहं ॥ सम्यक् । सम्मं ॥ इहं । इहयं । आलेट्ठुअं[1] इत्यादि ॥

ङ-ञ-ण-नो व्यञ्जने ॥ २५ ॥

ङ ञ ण न इत्येतेषां[2] स्थाने व्यञ्जने परे अनुस्वारो भवति ॥ ङ । पङ्क्ति । पंती ॥ पराङ्मुखः । परंमुहो ॥ ञ । कञ्चुकः । कंचुओ ॥ लाञ्छनम् । लंछणं ॥ ण । षण्मुखः छंमुहो ॥ उत्कण्ठा । उक्कंठा ॥ न । सन्ध्या । संझा ॥ विन्ध्यः । विंझो ॥

वक्रादावन्तः ॥ २६ ॥

वक्रादिषु यथादर्शनं प्रथमादेः स्वरस्य अन्त[3] आगमरूपोनुस्वारो

---

१ P आलेट्ठुअ २ B इत्येषां ३ A अन्ते आ

भवति ॥ वकं । तंसं । अंसुं । मंसू । पुंछं । गुंछं । मुंढा । पंसू । बुंधं । कंकोडो । कुंपल । दंसण । विंछिओ । गिंठी । मंजारो । एष्वाद्यस्य । वयंसो । मंणसी । मंणसिणी । मणसिला । पडंसुआ । एषु द्वितीयस्य ॥ अवरिं । अणिउंतय । अइमुतयं । अनयोस्तृतीयस्य ॥ वक्र । त्र्यस्र । अश्रु । श्मश्रु । पुच्छ । गुच्छ । मूर्द्धन् । पर्शु । बुध्न । कर्कोट । कुद्मल । दर्शन । वृश्चिक । गृष्टि । मार्जार । वयस्य । मनस्विन् । मनस्विनी । मन शिला । प्रतिश्रुत् । उपरि । अतिमुक्तक । इत्यादि ॥ क्वचिच्छन्दः पूरणेपि । देव-नाग-सुवण्ण ॥ क्वचिन्न भवति । गिट्ठी । मज्जारो । मणसिला । मणासिला ॥ आर्षे ॥ मणोसिला । अइमुत्तय ॥

## क्त्वा-स्यादेर्ण-स्वोर्वा ॥ २७ ॥

क्त्वाया स्यादीना च यौ णसू तयोरनुस्वारोन्तो वा भवति ॥ क्त्वा । काऊण काऊण । काउआण काउआण ॥ स्यादि । वच्छेण वच्छेण । वच्छेसु वच्छेसु ॥ णस्वोरिति किम् । करिअ । अग्गिणो ॥

## विंशत्यादेर्लुक् ॥ २८ ॥

विंशत्यादीनाम अनुस्वारस्य लुग् भवति । विंशति । वीसा ॥ त्रिंशत् । तीसा ॥ सस्कृतम् । सक्कय ॥ सस्कार । सक्कारो इत्यादि ॥

## मांसादेर्वा ॥ २९ ॥

मांसादीनामनुस्वारस्य लुग् वा भवति । मासं मंसं । मासल मंसलं । कासं कंसं । पासू पंसू । कह कहं । एव एवं । नूण नूणं । इआणि इआणिं । दाणि दाणिं । कि करेमि किं करेमि । समुह संमुहं । केसुअं किंसुअं । सीहो सिंघो ॥ मास । मासल । कास्य । पासुं । कथम् । एवम् । नूनम । इदानीम् । किम । समुख । किंशुक । सिंह । इत्यादि ॥

---

१ B अंसु, A अंसूं. २ A मसूं ३ B °यस्यास्तिन् ४ P माणसी ५ P मण° ६ B कुड्मल ७ A मन शिला ८ P °श्छन्दस पू°. ९ B मांसादेर°. १० B किंसुअं ११ A पासु १२ A adds दाणि after इदानीम.

## वर्गेन्त्यो वा ॥ ३० ॥

अनुस्वारस्य वर्गे परे प्रत्यासत्तेस्तस्यैव वर्गस्यान्त्यो वा भवति ॥ पङ्को पंको। सङ्खो संखो। अङ्गणं अंगणं। लङ्घणं लंघणं। कञ्चुओ कंचुओ। लञ्छणं लंछणं। अञ्जिअं अंजिअं। सञ्झा संझा। कण्टओ कंटओ। उक्कण्ठा। उक्कंठा। कण्डं कंडं। सण्ढो संढो। अन्तरं अंतरं। पन्थो पंथो। चन्दो चंदो। बन्धवो बंधवो। कम्पइ कंपइ। वम्फइ वंफइ। कलम्बो कलंबो। आरम्भो आरंभो॥ वर्ग इति किम्। संसओ। संहरइ॥ नित्यमिच्छन्त्यन्ये॥

## प्रावृट्-शरत्तरणयः पुंसि ॥ ३१ ॥

प्रावृष् शरद् तरणि इत्येते शब्दाः पुंसि पुल्लिङ्गे प्रयोक्तव्या ॥ पाउसो। सरओ। एस तरणी॥ तरणिशब्दस्य पुंस्त्रीलिङ्गत्वेन नियमार्थमुपादानम्॥

## स्नमदाम-शिरो-नभः ॥ ३२ ॥

दामन्शिरस्नभस्वर्जितं सकारान्तं नकारान्तं च शब्दरूपं पुंसि प्रयोक्तव्यम्॥ सान्तम्। जसो। पओ। तमो। तेओ। उरो॥ नान्तम्। जम्मो नम्मो। मम्मो॥ अदामशिरोनभ इति किम्। दामं। सिरं। नहं॥ यच्च सेयं वयं सुमणं सम्मं चम्ममिति दृश्यते तद् बहुलाधिकारात्॥

## वाक्ष्यर्थ-वचनाद्याः ॥ ३३ ॥

अक्षिपर्याया वचनादयश्च शब्दाः पुंसि वा प्रयोक्तव्याः॥ अक्ष्यर्थाः। अज्ज वि सा सवइ ते अच्छी। नच्चावियाइँ तेणम्ह अच्छीइं॥ अञ्जल्यादिपाठादक्षिशब्दः स्त्रीलिङ्गेपि। एसा अच्छी। चक्खू चक्खूइं। नयणा नयणाइं। लोअणा लोअणाइं॥ वचनादि। वयणा वयणाइं। विज्जुणा विज्जूए। कुलो कुलं। छन्दो छन्दं।

---

१ PB °वृट् श°. २ A सान्त. ३ A नान्त°. ४ A °अक्ष्यर्थ ५ B °नादि ६ B विज्जुए.

माहप्पो माहप्पं । दुक्खा दुक्खाइं ॥ भायणा भायणाइं । इत्यादि । इति वचनादय ॥ नेत्ता नेत्ताइं । कमला कमलाइं इत्यादि तु संस्कृत वदेव सिद्धम् ॥

## गुणाद्याः क्लीबे वा ॥ ३४ ॥

गुणादय क्लीबे वा प्रयोक्तव्या. ॥ गुणाइं गुणा । विहवेहिँ गुणाइँ मग्गन्ति । देवाणि देवा । बिन्दूइं बिन्दुणो । खग्गं खग्गो । मण्डलग्गं मण्डलग्गो । कररुहं कररुहो । रुक्खाइं रुक्खा । इत्यादि । इति गुणादय ॥

## वेमाञ्जल्याद्याः स्त्रियाम् ॥ ३५ ॥

इमान्ता अञ्जल्यादयश्च शब्दा. स्त्रियां वा प्रयोक्तव्या. ॥ एसा गरिमा एस गरिमा । एसा महिमा एस महिमा । एसा निल्लज्जिमा एस निल्लज्जिमा । एसा धुत्तिमा एस धुत्तिमा ॥ अञ्जल्यादि । एसा अञ्जली एस अञ्जली । पिट्ठी पिट्ठं । पृष्ठमित्वे कृते स्त्रियामेवेत्यन्ये ॥ अच्छी अच्छिं । पण्हा पण्हो । चोरिआ चोरिअं । एव कुच्छी । बली । निही । विही । रस्सी । गण्ठी । इत्यञ्जल्यादय ॥ गड्डा गड्डो इति तु संस्कृतवदेव सिद्धम् ॥ इमेति तन्त्रेण त्वादेशस्य डिमा इत्यस्य पृथ्वादीम्नश्च सग्रह । त्वादेशस्य क्लीबत्वमेवेच्छन्त्येके ॥

## बाहोरात् ॥ ३६ ॥

बाहुशब्दस्य स्त्रियामाकारोन्तादेशो भवति ॥ बाहाए जेण धरिओ एक्काए ॥ स्त्रियामित्येव । वामेअरो बाहू ॥

## अतो डो विसर्गस्य ॥ ३७ ॥

संस्कृतलक्षणोत्पन्नस्यात. परस्य विसर्गस्य स्थाने डो इत्यादेशो भवति ॥ सर्वत । सव्वओ ॥ पुरत. । पुरओ ॥ अग्रतः । अग्गओ ॥ मार्गत । मग्गओ ॥ एवं सिद्धावस्थापेक्षया । भवत । भवओ ॥ भवन्त । भवन्तो ॥ सन्त । सन्तो ॥ कुत. । कुदो ॥

---

१ BP °त्यादि व° २ A °त्यादि सं°. ३ P °णाइं दे°. ४ B °च्छन्त्यन्ये

निष्प्रती ओत्परी माल्य-स्थोर्वा ॥ ३८ ॥

निर् प्रति इत्येतौ माल्यशब्दे स्थाधातौ च परे यथासंख्यम् ओत् परि इत्येवंरूपौ वा भवतः । अभेदनिर्देशः सर्वादेशार्थः ॥ ओमालं । निम्मल्लं । ओमालयं वहइ । परिट्ठा पइट्ठा । परिट्ठिअं पइट्ठिअं ॥

आदेः ॥ ३९ ॥

आदेरित्यधिकारः कगचज° [१.१७७] इत्यादिसूत्रात् प्रागविशेषे वेदितव्यः ॥

त्यदाद्यव्ययात् तत्स्वरस्य लुक् ॥ ४० ॥

त्यदादेरव्ययाच्च परस्य तयोरेव त्यदाद्यव्यययोरादेः स्वरस्य बहुलं लुग् भवति ॥ अम्हेत्थ अम्हे एत्थ । जइमा जइ इमा । जइहं जइ अहं ॥

पदादपेर्वा ॥ ४१ ॥

पदात् परस्य अपेरव्ययस्यादेर्लुग् वा भवति ॥. तं पि तमवि । किं पि किमवि । केण वि । केणावि । कहं पि कहमवि ॥

इतेः स्वरात् तश्च द्विः ॥ ४२ ॥

पदात् परस्य इतेरादेर्लुग् भवति स्वरात् परश्च तकारो द्विर्भवति ॥ किं ति । जं ति । दिट्ठं ति । न जुत्तं ति ॥ स्वरात् । तह त्ति । झ त्ति । पिओ त्ति । पुरिसो त्ति ॥ पदादित्येव । इअ विञ्झ-गुहा-निलयाए ॥

लुप्त-य-र-व-श-ष-सां श-ष-सां दीर्घः ॥ ४३ ॥

प्राकृतलक्षणवशाल्लुप्ता याद्या उपरि अधो वा येषां शकारषकारसकाराणां तेषामादेः स्वरस्य दीर्घो भवति ॥ शस्य यलोपे । पश्यति । पासइ ॥ कश्यपः । कासवो ॥ आवश्यकं । आवासयं ॥ रलोपे । विश्राम्यति वीसमइ ॥ विश्रामः । वीसामो ॥ मिश्रम् । मीसं ॥ संस्पर्शः । संफासो ॥ वलोपे । अश्वः । आसो ॥ विश्वसिति । वीससइ ॥ विश्वासः । वी-

१ A निःप्र°. २ B उत्त°. ३ B प्राग् वि°. ४ A तदा°. ५ A °इ अह. ६ A तमवि । केण वि कहं पि. ७ B परस्य. ८ A सकास. ९ A विश्वसति.

सासो । शलोपे । दुश्शासनं । दूसासणो ॥ मन शिला । मणासिला ॥ पस्य यलोपे । शिष्य सीसो ॥ पुष्य । पूसो ॥ मनुष्य । मणूसो ॥ रलोपे । कर्षक । कासओ । वर्षा । वासा ॥ वर्ष । वासो ॥ वलोपे । विष्वाण । वीसाणो ॥ विष्वक् । वीसु ॥ पलोपे । निष्पिक्त । नीसित्तो ॥ सस्य यलोपे । सस्यम् । सास ॥ कस्यचित् । कासइ ॥ रलोपे । उस्र । ऊसो ॥ विस्रम्भ । वीसम्भो ॥ वलोपे । विकस्वर । विकासरो ॥ नि स्वं । नीसो ॥ सलोपे । निस्सह । नीसहो ॥ न दीर्घानुस्वारात् [ २ ९२ ] इति प्रतिषेधात् सर्वत्र अनादौ शेषादेशयो र्द्वित्वम् [ २.८९ ] इति द्वित्वाभाव ॥

### अतः समृद्ध्यादौ वा ॥ ४४ ॥

समृद्धि इत्येवमादिषु शब्देषु आदेरकारस्य दीर्घो[1] वा भवति । सामिद्धी समिद्धी । पासिद्धी पसिद्धी । पायड । पयड । पाडिवआ पडिवआ । पासुत्तो । पसुत्तो । पाडिसिद्धी पडिसिद्धी । सारिच्छो सरिच्छो । माणसी मणसी । माणसिणी मणसिणी । आहिआई अहिआई । पारोहो परोहो । । पावासू पवासू । पाडिप्फद्धी पडिप्फद्धी[5] ॥ समृद्धि । प्रसिद्धि । प्रकट । प्रतिपत् । प्रसुप्त । प्रतिसिद्धि । सदृक्ष । मनस्विन्[2] । मनस्विनी । अभियाति । प्ररोह । प्रवासिन् । प्रतिस्पर्द्धिन ॥ आकृति गणोयम् । तेन । अस्पर्श । आफसो ॥ परकीयम् । पारकेर । पारक ॥ प्रवचनम् । पावयण ॥ चतुरन्तम्[10] । चाउरन्त इत्याद्यपि भवति ॥

### दक्षिणे हे ॥ ४५ ॥

दक्षिणशब्दे आदेरतो हे परे दीर्घो भवति ॥ दाहिणो ॥ ह इति किम् । दक्खिणो ॥

### इः स्वप्नादौ ॥ ४६ ॥

स्वप्न इत्येवमादिषु आदेरस्य इत्व भवति ॥ सिविणो । सिमिणो ॥ आर्षे उकारोपि । सुमिणो । ईसि । वेडिसो । विलिअ । विअण ।

---

१ A °सन २ B मणसिग ३ A वर्षा ४ A उस्र ५ A °म्भो । विक° ६ A निस्व ७ B °र्धो म° ८ A °द्धि । प्रसि° ९ A °स्विन् । अभिजाति १० B चउरत्त, A चतुरन्त चाद्दुरन्तम्

मुइङ्गो । किविणो । उत्तिमो । मिरिअं । दिण्णं ॥ बहुलाधिकाराण्णत्वाभावे न भवति । दत्तं । देवदत्तो ॥ स्वप्न । ईषत् । वेतस । व्यलीक । व्यजन । मृदङ्ग । कृपण । उत्तम । मरिच । दत्त । इत्यादि ॥

पक्वाङ्गार-ललाटे वा ॥ ४७ ॥

एष्वादेरत इत्वं वा भवति ॥ पिक्कं पक्कं । इङ्गालो अङ्गारो । णिडालं णडालं ॥

मध्यम-कतमे द्वितीयस्य ॥ ४८ ॥

मध्यमशब्दे कतमशब्दे च द्वितीयस्यात इत्वं भवति ॥ मज्झिमो । कइमो ॥

सप्तपर्णे वा ॥ ४९ ॥

सप्तपर्णे द्वितीयस्यात इत्वं वा भवति ॥ छत्तिवंण्णो । छत्तवण्णो ॥

मयट्यइर्वा ॥ ५० ॥

मयट्प्रत्यये आदेरतः स्थाने अइ इत्यादेशो भवति वा ॥ विषमय- । विसमइओ विसमओ ॥

ईर्हरे वा ॥ ५१ ॥

हरशब्दे आदेरत ईर्वा भवति ॥ हीरो हरो ॥

ध्वनि-विष्वचोरुः ॥ ५२ ॥

अनयोरादेरस्य उत्वं भवति ॥ झुणी । वीसुं ॥ कथं सुणओ । शुनक इति प्रकृत्यन्तरस्य ॥ श्वन्शब्दस्य तु सा साणो इति प्रयोगौ भवत ॥

वन्द्र-खण्डिते णा वा ॥ ५३ ॥

अनयोरादेरस्य णकारेण सहितस्य उत्वं वा भवति ॥ वुंन्द्रं वन्द्रं । खुडिओ खण्डिओ ॥

गवये वः ॥ ५४ ॥

गवयशब्दे वकाराकारस्य उत्वं भवति ॥ गउओ । गउआ ॥

---

A छत्तिपण्णो. २ P वन्द्; B चण्ड. ३ P वुद्र वन्द्र; B चुड चण्ड, ४ A वकारस्य उ°.

## प्रथमे प-थोर्वा ॥ ५५ ॥

प्रथमशब्दे पकारथकारयोरकारस्य युगपत् क्रमेण च उकारो वा भवति॥ पुढुम पुढम पढुम पढम ॥

## ज्ञो णत्वेभिज्ञादौ ॥ ५६ ॥

अभिज्ञ एवंप्रकारेषु ज्ञस्य णत्वे कृते ज्ञस्यैव अत उत्वं भवति ॥ अहिण्णू। सव्वण्णू । कयण्णू । आगमण्णू ॥ णत्व इति किम् । अहिज्जो। सव्वज्जो ॥ अभिज्ञादाविति किम् । प्राज्ञ । पण्णो ॥ येषां ज्ञस्य णत्वे उत्वं दृश्यते ते अभिज्ञादयः ॥

## एच्छय्यादौ ॥ ५७ ॥

शय्यादिषु आदेरस्य एत्वं भवति ॥ सेज्जा । सुन्देरं । गेन्दुअं । एत्थ ॥ शय्या । सौन्दर्य । कन्दुक । अत्र ॥ आर्षे पुरेकम्मं ॥

## वल्ल्युत्कर-पर्यन्ताश्चर्ये वा ॥ ५८ ॥

एषु आदेरस्य एत्वं वा भवति ॥ वेल्ली वल्ली । उक्केरो उक्करो । पेरन्तो पज्जन्तो । अच्छेरं अच्छरिअं अच्छअरं अच्छरिज्जं अच्छरीअं ॥

## ब्रह्मचर्ये चः ॥ ५९ ॥

ब्रह्मचर्यशब्दे चस्य अत एत्वं भवति ॥ बम्हचेरं ॥

## तोन्तरि ॥ ६० ॥

अन्तरशब्दे तस्य अत एत्वं भवति ॥ अन्तःपुरम् । अन्तेउरं ॥ अन्तश्चारी । अन्तेआरी ॥ क्वचिन्न भवति । अन्तग्गयं । अन्तो-वीसम्भ निवेसिआणं ॥

## ओत्पद्मे ॥ ६१ ॥

पद्मशब्दे आदेरत ओत्वं भवति ॥ पोम्मं ॥ पद्म-छद्म० [ २ ११२ ] इति विश्लेषे न भवति । पउमं ॥

---

१ A अहिण्णू, २ A अहिज्जो । अभि° ३ B °त्वं वा भ°, ४ B एत्थ
५ बम्हचेरं

नमस्कार-परस्परे द्वितीयस्य ॥ ६२ ॥

अनयोर्द्वितीयस्य अत ओत्वं भवति ॥ नमोक्कारो । परोप्परं ॥

वार्पौ ॥ ६३ ॥

अर्पयतौ धातौ आदेरस्य ओत्वं वा भवति ॥ ओप्पेइ अप्पेइ । ओप्पिअं अप्पिअं ॥

स्वपावुच्च ॥ ६४ ॥

स्वपितौ धातौ आदेरस्य ओत् उत् च भवति ॥ सोवइ । सुवइ ॥

नात्पुनर्यादाई वा ॥ ६५ ॥

नञः परे पुनःशब्दे आदेरस्य आ आइ इत्यादेशौ वा भवतः ॥ न उणा । न उणाइ । पक्षे । न उण । न उणो ॥ केवलस्यापि दृश्यते । पुणाइ ॥

वालाब्वरण्ये लुक् ॥ ६६ ॥

अलाब्वरण्यशब्दयोरादेरस्य लुग् वा भवति ॥ लाउं अलाउं । लाऊ अलाऊ । रण्णं अरण्णं ॥ अत इत्येव । आरण्ण-कुञ्जरो व्व वेल्लन्तो ॥

वाव्ययोत्खातादावदातः ॥ ६७ ॥

अव्ययेषु उत्खातादिषु च शब्देषु आदेराकारस्य अद् वा भवति ॥ अव्ययम्[2] । जह जहा । तह तहा । अहव अहवा । व वा । ह हा । इत्यादि ॥ उत्खातादि । उक्खयं उक्खायं । चमरो चामरो । कलओ कालओ । ठविओ ठाविओ । परिट्ठविओ । परिट्ठाविओ । संठविओ संठाविओ । पययं पाययं । तलवेण्टं तालवेण्टं । तलवोण्टं तालवोण्टं । हलिओ हालिओ । नराओ नाराओ । वलया वलाया[1] । कुमरो कुमारो । खइरं खाइरं ॥ उत्खात । चामर । कालक स्थापित । प्राकृत । तालवृन्त । हालिक । नाराच । वलाका । कुमार । खादिर । इत्यादि ॥ केचिद् ब्राह्मणपूर्वाह्णयोरपीच्छन्ति । बम्हणो बाम्हणो ।

---

१ P °इर्वा. २ A अव्यय; B अव्यये.

पुव्वण्हो पुव्वाण्हो ॥ दवग्गी । दावग्गी । चडू । चाडू । इति शब्दभेदात् सिद्धम् ॥

घञ्वृद्धेर्वा ॥ ६८ ॥

घञ्निमित्तो यो वृद्धिरूप आकारस्तस्यादिभूतस्य अद् वा भवति ॥ पवहो पवाहो । पहरो पहारो । पयरो पयारो । प्रकार प्रचारो वा । पत्थवो पत्थावो ॥ क्वचिन्न भवति । राग । राओ ॥

महाराष्ट्रे ॥ ६९ ॥

महाराष्ट्रशब्दे[1] आदेराकारस्य अद्[2] भवति ॥ मरहट्ठं । मरहट्ठो[3] ॥

मांसादिष्वनुस्वारे ॥ ७० ॥

मासप्रकारेषु अनुस्वारे सति आदेरात अद् भवति ॥ मंस । पंसू । पंसणो । कंस । कंसिओ । वंसिओ । पंडवो । संसिद्धिओ । संजत्तिओ[4] ॥ अनुस्वार इति किम् । मास । पासू ॥ मास । पासु । पासन । कांस्य । कासिक । वाशिक । पाण्डव । सांसिद्धिक । सायात्रिक । इत्यादि ॥

श्यामाके मः ॥ ७१ ॥

श्यामाके मस्य आत अद् भवति ॥ सामओ ॥

इः सदादौ वा ॥ ७२ ॥

सदादिषु शब्देषु आत इत्वं वा भवति ॥ सइ सया । निसि-अरो निसा-अरो । कुप्पिसो कुप्पासो ॥

आचार्ये चोच ॥ ७३ ॥

आचार्यशब्दे चस्य आत इत्वम् अत्वं च भवति ॥ आइरिओ । आयरिओ ॥

ई: स्त्यान-खल्वाटे ॥ ७४ ॥

स्त्यानखल्वाटयोरादेरात ईर्भवति ॥ ठीणं । थीणं । थिण्णं । खल्लीडो ॥ संखायं इति तु सम स्त्य ख्या [४.१५] इति खादेशे सिद्धम् ॥

१ B °राष्ट्रस°. २ B °अद् वा भ° ३ B मारहट्ठो ४ A संजित्तिओ. ५ B °मरयादृव°

ओदाल्यां पङ्क्तौ ॥ ८३ ॥

आलीशब्दे पङ्क्तिवाचिनि आत ओत्वं भवति ॥ ओली ॥ पङ्क्ताविति किम् । आली सखी ॥

ह्रस्वः संयोगे[1] ॥ ८४ ॥

दीर्घस्य यथादर्शन संयोगे परे ह्रस्वो भवति ॥ आत् । आम्रम् । अम्ब ॥ ताम्रम् । तम्ब ॥ विरहाग्नि । विरहग्गी ॥ आस्यम् । अस्स ॥ ईत् । मुनीन्द्र । मुणिन्दो ॥ तीर्थम् । तित्थ ॥ ऊत् । गुरूल्लापा । गुरुल्लावा ॥ चूर्ण । चुण्णो ॥ एत् । नरेन्द्र । नरिन्दो ॥ म्लेच्छ । मिलिच्छो ॥ दिट्ठिक्-थण वट्ट ॥ ओत् । अधरोष्ठ । अहरुट्ठ ॥ नीलोत्पलम् । नीलुप्पल ॥ संयोग इति किम् । आयासं । ईसरो । ऊसवो ॥

इत एद्वा ॥ ८५ ॥

संयोग इति वर्तते । आदेरिकारस्य संयोगे परे एकारो वा भवति ॥ पेण्डं पिण्डं । धम्मेल्लं धम्मिल्लं । सेन्दूरं सिन्दूरं । वेण्हू विण्हू । पेट्ठं पिट्ठं । वेल्लं विल्लं ॥ कचिन्न भवति । चिन्ता ॥

किंशुके वा ॥ ८६ ॥

किंशुकशब्दे आदेरित एकारो वा भवति ॥ केसुअं किंसुअं ॥

मिरायाम् ॥ ८७ ॥

मिराशब्दे इत एकारो[2] भवति ॥ मेरा ॥

पथि-पृथिवी-प्रतिश्रुन्मूषिक-हरिद्रा-बिभीतकेष्वत् ॥ ८८ ॥

एषु आदेरितोकारो भवति ॥ पहो । पुहई । पुढवी । पडंसुआ । मूसओ । हलद्दी । हलद्दा । वहेडओ ॥ पन्थं किर देसित्तेति तु पथिशब्द-समानार्थस्य[3] पन्थशब्दस्य भविष्यति ॥ हरिद्रायां विकल्प इत्यन्ये[4] । हलिद्दी हलिद्दा ॥

---

१ B °गे दीर्घस्य ॥ ८४ ॥ य°. २ A °रो वा भ°. ३ B पथिशब्दार्थसमा° ४. A पथिद्र°.

### शिथिलेङ्गुदे वा ॥ ८९ ॥

अनयोरादेरितोद् वा भवति ॥ सढिलं । पसढिलं । सिढिलं । प-सिढिलं । अङ्गुअं । इङ्गुअं ॥ निर्मितशब्दे तु वा आत्वं न विधेयम् । निर्मातनिर्मितशब्दाभ्यामेव सिद्धेः ॥

### तित्तिरौ रः ॥ ९० ॥

तित्तिरिशब्दे रस्येतोद् भवति ॥ तित्तिरो ॥

### इतौ तो वाक्यादौ ॥ ९१ ॥

वाक्यादिभूते इतिशब्दे यस्तस्तत्संबन्धिन इकारस्य अकारो भवति[3] ॥ इअ जम्पिआवसाणे । इअ विअसिअ-कुसुम-सरो ॥ वाक्यादाविति किम् । पिओ त्ति । पुरिसो त्ति ॥

### ईर्जिह्वा-सिंह-त्रिंशद्विंशतौ त्या ॥ ९२ ॥

जिह्वादिषु इकारस्य तिशब्देन सह ईर्भवति ॥ जीहा । सीहो । तीसा । वीसा ॥ बहुलाधिकारात् क्वचिन्न भवति । सिंह-दत्तो । सिंह-राओ ॥

### र्लुकि निरः ॥ ९३ ॥

निर् उपसर्गस्य रेफलोपे सति इत ईकारो भवति ॥ नीसरइ । नीसासो ॥ र्लुकीति किम् । निण्णओ । निस्सहाइँ अङ्गाइं ॥

### द्विन्योरुत् ॥ ९४ ॥

द्विशब्दे नावुपसर्गे च इत उद् भवति ॥ द्वि । दु-मत्तो । दु-आई । दु-विहो । दु-रेहो । दु-वयणं ॥ बहुलाधिकारात् क्वचिद् विकल्पः । दु-उणो वि-उणो । दुइओ । विइओ ॥ क्वचिन्न भवति । द्विजः । दिओ ॥ द्विरदः । दिरओ ॥ क्वचिद् ओत्वमपि । दो-वयणं ॥ नि । णुमज्जइ । णुमन्नो ॥ क्वचिन्न भवति । निवडइ ॥

---

१ A सर्त. २ A°यं । निर्मि°. ३ P °ति । इअ विअ°. ४ A सरे. ५ B पिट त्ति. ६ A ईद्ध°. ७ B लुकीति. ८ B निसहो. ९ A दुआइं. १० P णुमण्णो.

**प्रवासीक्षौ ॥ ९५ ॥**

अनयोरादेरित उत्वं भवति ॥ पावासुओ । उच्छू ॥

**युधिष्ठिरे वा ॥ ९६ ॥**

युधिष्ठिरशब्दे आदेरित उत्वं वा भवति ॥ जहुट्ठिलो । जहिट्ठिलो ॥

**ओच्च द्विधाकृगः[1] ॥ ९७ ॥**

द्विधाशब्दे कृगधातोः प्रयोगे इत ओत्वं चकारादुत्वं च भवति ॥ दोहा किज्जइ । दुहा किज्जइ ॥ दोहा इअ । दुहा इअ ॥ कृग इति किम् । दिहा गयं ॥ क्वचित् केवलस्यापि ॥ दुहा वि सो सुर वहू सत्थो ॥

**वा निर्झरे ना ॥ ९८ ॥**

निर्झरशब्दे नकारेण सह इत ओकारो वा भवति ॥ ओज्झरो निज्झरो ॥

**हरीतक्यामीतोत् ॥ ९९ ॥**

हरीतकीशब्दे आदेरीकारस्य अद् भवति ॥ हरडई ॥

**आत्कश्मीरे ॥ १०० ॥**

कश्मीरशब्दे ईत आद् भवति ॥ कम्हारा ॥

**पानीयादिष्वित् ॥ १०१ ॥**

पानीयादिषु शब्देषु ईत इद् भवति ॥ पाणिअं । अलिअं । जिअइ । जिअउ । विलिअं । करिसो । सिरिसो । दुइअं । तइअं । गहिरं । उवणिअं । आणिअं । पलिविअं । ओसिअन्तं । पसिअ । गहिअं । वम्मिओ । तयाणिं ॥ पानीय । अलीक ॥ जीवति । जीवतु । व्रीडित । करीष । शिरीष । द्वितीय । तृतीय । गभीर । उपनीत । आनीत । प्रदीपित । अवसीदत् । प्रसीद । गृहीत । वल्मीक । तदानीम् । इति पानीयादयः ॥ बहुलाधिकारादेषु क्वचिन्नित्यं क्वचिद् विकल्पः । तेन । पाणीअं । अलीअं । जीअइ । करीसो । उवणीओ । इत्यादि सिद्धम् ॥

---

१ P °ष्ठिरे वा° २ P कृगः ३ P कृग्° ४ P कृग A कृगइ० ५ A °लि । इयाणि । पा°

उज्जीर्णे ॥ १०२ ॥

जीर्णशब्दे ईत उद् भवति ॥ जुण्ण-सुरा ॥ क्वचिन्न भवति । जिण्णे भोअणमत्ते[1] ॥

ऊर्हीन-विहीने वा ॥ १०३ ॥

अनयोरीत ऊत्वं वा भवति ॥ हूणो हीणो । विहूणो विहीणो ॥ विहीन इति किम् । पहीण जर-मरणा ॥

तीर्थे हे ॥ १०४ ॥

तीर्थशब्दे हे सति ईत ऊत्वं भवति ॥ तूहं ॥ ह इति किम् । तित्थं ॥

एत्पीयूषापीड-बिभीतक-कीदृशेदृशे ॥ १०५ ॥

एषु ईत एत्वं भवति ॥ पेऊसं । आमेलो । बहेडओ । केरिसो । एरिसो ॥

नीड-पीठे वा ॥ १०६ ॥

अनयोरीत एत्वं वा भवति ॥ नेडं[3] नीडं । पेढं पीढं ॥

उतो मुकुलादिष्वत् ॥ १०७ ॥

मुकुल इत्येवमादिषु शब्देषु आदेरुतोत्वं भवति ॥ मउलं । मउलो । मउरं । मउडं । अगरुं । गरुई । जहुट्ठिलो । जहिट्ठिलो । सोअमल्लं । गलोई ॥ मुकुल । मुकुर । मुकुट । अगुरु । गुर्वी । युधिष्ठिर । सौकुमार्य । गुडूची । इति मुकुलादयः ॥ क्वचिदाकारोपि । विद्रुतः । विद्दाओ ॥

वोपरौ ॥ १०८ ॥

उपरावुतोद् वा भवति ॥ अवरिं । उवरिं ॥

गुरौ के वा ॥ १०९ ॥

गुरौ स्वार्थे के सति आदेरुतोद् वा भवति ॥ गरुओ गुरुओ ॥ क इति किम् । गुरू ॥

---

१ AB °मत्तेओ २ B ऊ हीन°. ३ P नेड्डु. ४ A इत्यादि मु°.

इर्भ्रुकुटौ ॥ ११० ॥

भ्रुकुटावादेरुत इर्भवति ॥ भिउडी ॥

पुरुषे रोः ॥ १११ ॥

पुरुषशब्दे रोरुत इर्भवति ॥ पुरिसो । पउरिसं ॥

[2]ईः क्षुते ॥ ११२ ॥

क्षुतशब्दे आदेरुत ईत्वं भवति ॥ छीअं ॥

ऊत्सुभग-मुसले वा ॥ ११३ ॥

अनयोरादेरुत ऊद् वा भवति ॥ सूहवो सुहओ । मूसलं मुसलं ॥

अनुत्साहोत्सन्ने त्सच्छे ॥ ११४ ॥

उत्साहोत्सन्नवर्जिते शब्दे यौ त्सच्छौ तयो[4] परयोरादेरुत ऊद् भवति ॥ त्स । ऊसुओ[5] । ऊसवो । ऊसित्तो । ऊसरइ ॥ छ । उद्गता शुका यस्मात् स ऊसुओ । ऊससइ ॥ अनुत्साहोत्सन्न इति किम् । उच्छाहो[6] । उच्छन्नो ॥

लुकि दुरो वा ॥ ११५ ॥

दुरुपसर्गस्य रेफस्य[7] लोपे सति उत ऊत्वं वा भवति ॥ दूसहो दुसहो । दूहवो दुहवो[8] ॥ लुकीति किम् । दुस्सहो विरहो ॥

ओत्संयोगे ॥ ११६ ॥

संयोगे परे आदेरुत ओत्वं भवति ॥ तोण्डं । मोण्ड । पोक्खरं । कोट्टिमं । पोत्थओ । लोद्धओ । मोत्था । मोग्गरो । पोग्गलं । कोण्ढो । कोन्तो । वोक्कन्तं ॥

कुतूहले वा ह्रस्वश्च ॥ ११७ ॥

कुतूहलशब्दे उत ओद् वा भवति तत्संनियोगे ह्रस्वश्च वा ॥ कोऊहलं कुऊहलं कोउहल्लं[9] ॥

---

१ B त्त्व म°. २ B ई क्षुते ३ A °होछन्ने ४ P तयोरा° ५ B ऊसओ ६ A उगाहो ७ PB रेफलो°. ८ A दुहओ. ९ AB कोउहल

अदूतः सूक्ष्मे वा ॥ ११८ ॥

सूक्ष्मशब्दे ऊतोद् वा भवति ॥ सण्हं सुण्हं ॥ आर्षे । सुहुमं ॥

दुकूले वा लश्च द्विः ॥ ११९ ॥

दुकूलशब्दे ऊकारस्य अत्वं वा भवति तत्संनियोगे च लकारो द्विर्भवति॥ दुअल्लं दुऊलं ॥ आर्षे दुगुल्लं ॥

ईर्वोद्व्यूढे ॥ १२० ॥

उद्व्यूढशब्दे ऊत ईत्वं वा भवति ॥ उव्वीढं । उव्वूढं ॥

उर्भ्रू-हनूमत्कण्डूय-वातूले ॥ १२१ ॥

एषु ऊत उत्वं भवति ॥ भुमया । हणुमन्तो । कण्डुअइ । वाउलो ॥

मधूके वा ॥ १२२ ॥

मधूकशब्दे ऊत उद् वा भवति ॥ महुअं महूअं ॥

इदेतौ नूपुरे वा ॥ १२३ ॥

नूपुरशब्दे ऊत इत् एत् इत्येतौ वा भवतः ॥ निउरं नेउरं । पक्षे नूउरं[2]॥

ओत्कूष्माण्डी-तूणीर-कूर्पर-स्थूल-ताम्बूल-गुडूची-मूल्ये १२४

एषु ऊत ओद् भवति ॥ कोहण्डी कोहली । तोणीरं । कोप्परं । थोरं । तम्बोलं । गलोई । मोल्लं ॥

स्थूणा-तूणे वा ॥ १२५ ॥

अनयोरूत ओत्वं वा भवति ॥ थोणा थूणा । तोणं तूणं ॥

ऋतोत् ॥ १२६ ॥

आदेर्ऋकारस्य अत्वं भवति ॥ घृतम् । घयं ॥ तृणम् । तणं ॥ कृतम् । कयं ॥ वृषभः । वसहो ॥ मृगः । मओ ॥ घृष्टः । घट्ठो ॥ दुहाइअमिति कृपादिपाठात् ॥

---

१ P उत्त्वं. २ B नूपुरं.

आत्कृशा-मृदुक-मृदुत्वे वा ॥ १२७ ॥

एषु आदेर्ऋत आद् वा भवति ॥ कासा किसा । माउक्क मउअ । माउक्क मउत्तण ॥

इत्कृपादौ ॥ १२८ ॥

कृपा इत्यादिषु शब्देषु आदेर्ऋत इत्व भवति ॥ किवा । हियय । मिट्ठ रसे एव । अन्यत्र मट्ठ । दिट्ठ । दिट्ठी । सिट्ठ । सिट्ठी । गिण्ठी । पिच्छी । भिउ । भिङ्गो । भिङ्गारो । सिङ्गारो । सिआलो । घिणा । घुसिण । विद्ध कई । समिद्धी । इद्धी । गिद्धी । किसो । किसाणू । किसरा । किच्छ । तिप्प[१] किसिओ । निवो । किच्चा । किई । धिई । किवो । किविणो । किवाण । विञ्चुओ[२] । वित्त । वित्ती । हिअ । वाहित्त । विंहिओ । विसी । इसी । विइण्हो । छिहा । सइ । उक्किट्ठ । निससो ॥ क्वचिन्न भवति । रिद्धी[३] ॥ कृपा । हृदय । मृष्ट । दृष्ट । दृष्टि । सृष्ट । सृष्टि । गृष्टि । पृथ्वी । भृगु । भृङ्ग । भृङ्गार । शृङ्गार । शृगाल । घृणा । घुसृण । वृद्धकवि । समृद्धि । ऋद्धि । गृद्धि । कृश । कृशानु । कृसरा । कृच्छ्र । तृप्त । कृषित । नृप । कृत्या । कृति । धृति । कृप । कृपण । कृपाण । वृश्चिक[४] । वृत्त । वृत्ति । हृत । व्याहृत । बृंहित । बृसी । ऋषि । वितृष्ण । स्पृहा । सकृत् । उत्कृष्ट । नृशंस ॥

पृष्ठे वानुत्तरपदे ॥ १२९ ॥

पृष्ठशब्देनुत्तरपदे ऋत इद् भवति वा ॥ पिट्ठी पट्ठी । पिट्ठिपरिट्ठविअं[५] ॥ अनुत्तरपद इति किम् । महि-वट्ठ[६] ॥

मसृण-मृगाङ्क-मृत्यु-शृङ्ग-धृष्टे वा ॥ १३० ॥

एषु ऋत इद् वा भवति ॥ मसिण मसण । मिअङ्को । मयङ्को । मिच्चु मच्चु । सिङ्ग । सङ्ग । धिट्ठो धट्ठो ॥

---

१ A इ इत्य° २ A गिट्ठी ३ A,इड्डी ४ B वि[ञ्च]ुओ ५ BP ठाविअ° ६ B उत्तर ॥ पृ, P उत्तर इत्यादि ॥ पृ° ७ A पृष्ठेऽनु°

### उदृत्वादौ ॥ १३१ ॥

ऋतु इत्यादिषु शब्देषु आदेर्ऋत उद् भवति ॥ उऊ । परामुट्ठो । पुट्ठो । पउट्ठो । पुहई । पउत्ती । पाउसो । पाउओ । भुई । पहुडि । पाहुडं । परहुओ । निहुअं । निउअं । विउअं । संवुअं । वुत्तन्तो । निव्वुअं । निव्वुई । वुन्दं । वुन्दावणो । वुड्ढो । वुड्ढी । उसहो । मुणालं । उज्जू । जामाउओ । माउओ । माउआ । भाउओ । पिउओ । पुहुवी ॥ ऋतु । परामृष्ट । स्पृष्ट । प्रवृष्ट । पृथिवी । प्रवृत्ति । प्रावृप् । प्रावृत । भृति । प्रभृति । प्राभृत । परभृत । निभृत । निवृत । विवृत । संवृत । वृत्तान्त । निर्वृत । निर्वृति । वृन्द । वृन्दावन । वृद्ध । वृद्धि । ऋषभ । मृणाल । ऋजु । जामातृक । मातृकं । मातृका । भ्रातृक । पितृक । पृथ्वी । इत्यादि ॥

### निवृत्त-वृन्दारके वा ॥ १३२ ॥

अनयोर्ऋत उद् वा भवति ॥ निवुत्तं निअत्तं । वुन्दारया वन्दारया ॥

### वृषभे वा वा ॥ १३३ ॥

वृषभे ऋतो वेन सह उद् वा भवति ॥ उसहो वसहो ॥

### गौणान्त्यस्य ॥ १३४ ॥ ?

गौणशब्दस्य योन्त्य ऋत् तस्य उद् भवति ॥ माउ-मण्डलं । माउ-हरं । पिउ-हरं । माउ सिआ । पिउ-सिआ । पिउ वणं । पिउ-वई ॥

### मातुरिद्वा ॥ १३५ ॥

मातृशब्दस्य गौणस्य ऋत इद् वा भवति ॥ माइ-हरं । माउ हरं ॥ क्वचिदगौणस्यापि । माईणं ॥

### उदूदोन्मृषि ॥ १३६ ॥

मृषाशब्दे ऋत उत् ऊत् ओच्च भवन्ति ॥ मुसा । मूसा । मोसा । मुसा वाओ । मूसा-वाओ । मोसा-वाओ ॥

---

१ B उज्जू २ A जामाउओ । माउओ । माउआ । भा°, P जामाउओ । माउआ । भा°. ३ AB पुहवी ४ A मातृक । भ्रा°. ५ PB °णपदस्य ६ B माईण ७ P भवति.

इदुतौ वृष्ट-वृष्टि-पृथङ्-मृदङ्ग-नप्तृके ॥ १३७ ॥

एषु ऋत इकारोकारौ भवतः ॥ विट्ठो वुट्ठो । विट्ठी वुट्ठी । पिहं पुहं । मिइङ्गो मुइङ्गो । नत्तिओ नत्तुओ ॥

वा बृहस्पतौ ॥ १३८ ॥

बृहस्पतिशब्दे ऋत इदुतौ वा भवतः ॥ बिहप्फई बुहप्फई । पक्षे । बहप्फई ॥

इदेदोद्वृन्ते ॥ १३९ ॥

वृन्तशब्दे ऋत इत् एत् ओच्च भवन्ति ॥ विण्टं वेण्टं वोण्टं ॥

रिः केवलस्य ॥ १४० ॥

केवलस्य व्यञ्जनेनासंपृक्तस्य ऋतो रिरादेशो भवति ॥ रिद्धी । रिच्छो ॥

ऋणर्ज्वृषभर्त्वृषौ वा ॥ १४१ ॥

ऋणऋजुऋषभऋतुऋषिषु ऋतो रिर्वा भवति ॥ रिणं अणं । रिज्जू उज्जू । रिसहो उसहो । रिऊ उऊ । रिसी इसी ॥

दृशः क्विप्-टक्सकः ॥ १४२ ॥

क्विप् टक् सक् इत्येतदन्तस्य दृशेर्धातोर्ऋतो रिरादेशो भवति ॥ सदृक् । सरि-वण्णो । सरि-रूवो । सरि-वन्दीणं ॥ सदृशः । सरिसो ॥ सदृक्षः । सरिच्छो ॥ एवम् एआरिसो । भवारिसो । जारिसो । तारिसो । केरिसो । एरिसो । अन्नारिसो । अम्हारिसो । तुम्हारिसो ॥ टक्सक्साहचर्यात् त्यदाद्यन्यादि [ हे० ५.१ ] सूत्रविहितः क्विबिह गृह्यते ॥

आदृते ढिः ॥ १४३ ॥

आदृतशब्दे ऋतो ढिरादेशो भवति ॥ आढिओ ॥

अरिर्दृप्ते ॥ १४४ ॥

दृप्तशब्दे ऋतोऽरिरादेशो भवति ॥ दरिओ । दरिअ-सीहेण ॥

---

१ A मुयङ्गो. २ B °तो वा°. ३ P भवति. ४ B रिजू. B ५ उजू. ६ B दृशे..

लत इलिः क्लृप्त-क्लृन्ने ॥ १४५ ॥

अनयोर्लृत इलिरादेशो भवति ॥ किलिन्न-कुसुमोवयारेसु ॥ धारा-किलिन्न-वत्तं ॥

एत इद्वा वेदना-चपेटा-देवर-केसरे ॥ १४६ ॥

वेदनादिषु एत इत्त्वं वा भवति ॥ विअणा वेअणा । चविडा । विअड-चवेडा-विणोआ । दिअरो देवरो ॥ महमहिअ-दसण-किसरं । केसरं ॥ महिला महेला इति तु महिलामहेलाभ्यां शब्दाभ्यां सिद्धम् ॥

ऊः स्तेने वा ॥ १४७ ॥

स्तेने एत ऊद् वा भवति ॥ थूणो थेणो ॥

ऐत एत् ॥ १४८ ॥

ऐकारस्यादौ वर्तमानस्य एत्त्वं भवति ॥ सेला । तेलोकं । एरावणो । केलासो । वेज्जो । केढवो । वेहव्वं ॥

इत्सैन्धव-शनैश्चरे ॥ १४९ ॥

एतयोरैत इत्त्वं भवति ॥ सिन्धवं । सणिच्छरो ॥

सैन्ये वा ॥ १५० ॥

सैन्यशब्दे ऐत इद् वा भवति ॥ सिन्नं सेन्नं ॥

अइर्दैत्यादौ च ॥ १५१ ॥

सैन्यशब्दे दैत्य इत्येवमादिषु च ऐतो अइ इत्यादेशो भवति । एत्वापवादः ॥ सइन्नं । दइच्चो । दइन्नं । अइसरिअं । भइरवो । वइजवणो । दइवअं । वइआलीअं । वइएसो । वइएहो । वइदब्भो । वइस्साणरो । कइअवं । वइसाहो । वइसालो । सइरं । चइत्तं ॥ दैत्य । दैन्य । ऐश्वर्य । भैरव । वैजवन । दैवत । वैतालीय । वैदेश । वैदेह ।

---

१ P वत्तं; B वन्तं. २ P °विडा । चवेडा । विअ°. ३ B दसण°. ४ P °महेलाशब्दा°; B °महेलाभ्यां सि°. ५ B सेला । सेन्नं । ते°.

वैदर्भ । वैश्वानर । कैतव । वैशाख । वैशाल । स्वैर । चैत्य। इत्यादि ॥ विश्लेषे न भवति । चैत्यम् । चेइअं ॥ आर्षे । चैत्यवन्दनम्। ची-वन्दणं ॥

वैरादौ वा ॥ १५२ ॥

वैरादिषु ऐतः अइरादेशो वा भवति ॥ वइरं वेरं । कइलासो केलासो। कइरवं केरवं । वइसवणो वेसवणो । वइसम्पायणो वेसम्पायणो। वइआलिओ वेआलिओ । वइसिअं वेसिअं । चइत्तो चेत्तो ॥ वैर। कैलास । कैरव । वैश्रवण । वैशम्पायन । वैतालिक । वैशिक। चैत्र । इत्यादि ॥

एच्च दैवे ॥ १५३ ॥

दैवशब्दे ऐत एत् अइश्चादेशो भवति ॥ देव्वं दइव्वं दइवं ॥

उच्चैर्नीचैस्यअः ॥ १५४ ॥

अनयोरैतः अअ इत्यादेशो भवति ॥ उच्चअं । नीचअं । उच्चनीचाभ्यां के सिद्धम् । उच्चैर्नीचैसोस्तु रूपान्तरनिवृत्त्यर्थं वचनम् ॥

ईद्धैर्ये ॥ १५५ ॥

धैर्यशब्दे ऐत ईद् भवति ॥ धीरं हरइ विसाओ ॥

ओतोद्वान्योन्य-प्रकोष्ठातोद्य-शिरोवेदना-मनोहर-सरोरुहे क्तोश्च वः ॥ १५६ ॥

एषु ओतोत्त्वं वा भवति तत्संनियोगे च यथासंभवं ककारतकारयोर्वादेशः ॥ अन्नन्नं अन्नुन्नं । पवट्ठो पउट्ठो । आवज्जं आउज्जं । सिर-विअणा सिरो-विअणा । मणहरं मणोहरं । सररुहं सरोरुहं ॥

उत्सोच्छ्वासे ॥ १५७ ॥

सोच्छ्वासशब्दे ओत ऊद् भवति ॥ सोच्छ्वासः । सूसासो ॥

१ P एतोऽइ इत्यादे°. २ B देव्वं देवं दइव्वं. ३ P °रैतोऽअ इ°. ४ B केति सि°. ५ A वेदनम°. ६ A सिरवि°. ७ B °च्छ्वासे ऊ°.

गव्यउ-आअः ॥ १५८ ॥

गोशब्दे ओतः अउ आअ इत्यादेशौ भवतः ॥ गउओ । गउआ । गाओ ॥ हरस्स एसा गाई ॥

औत ओत् ॥ १५९ ॥

औकारस्यादेरोद् भवति ॥ कौमुदी कोमुई ॥ यौवनम् । जोव्वणं ॥ कौस्तुभः । कोत्थुहो ॥ कौशाम्बी । कोसम्बी ॥ क्रौञ्चः कोञ्चो ॥ कौशिकः । कोसिओ ॥

उत्सौन्दर्यादौ ॥ १६० ॥

सौन्दर्यादिषु शब्देषु औत उद् भवति ॥ सुन्देरं सुन्दरिअं । मुञ्जायणो । सुण्डो । सुद्धोअणी । दुवारिओ । सुगन्धत्तणं । पुलोमी । सुवण्णिओ ॥ सौन्दर्य । मौञ्जायन । शौण्ड । शौद्धोदनि । दौवारिक । सौगन्ध्य । पौलोमी । सौवर्णिकः ॥

कौक्षेयके वा ॥ १६१ ॥

कौक्षेयकशब्दे औत उद् वा भवति ॥ कुच्छेअयं । कोच्छेअयं ॥

अउः पौरादौ च ॥ १६२ ॥

कौक्षेयके पौरादिषु च औत अउरादेशो भवति ॥ कउच्छेअयं ॥ पौरः । पउरो । पउर-जणो ॥ कौरवः । कउरवो ॥ कौशलम् । कउसलं ॥ पौरुषम् । पउरिसं ॥ सौधम् । सउहं ॥ गौडः । गउडो ॥ मौलिः । मउली ॥ मौनम् । मउणं ॥ सौराः । सउरा ॥ कौलाः ॥ कउला ॥

आच्च गौरवे ॥ १६३ ॥

गौरवशब्दे औत आत्वम् अउश्च भवति ॥ गारवं । गउरवं ॥

नाव्यावः ॥ १६४ ॥

नौशब्दे औत आवादेशो भवति ॥ नावा ॥

---

१ B °आअ ॥ ५८ ॥. २ B शब्दे अउ. ३ B सौवर्णिक. ४ B आत्व भ°.

## एत्त्रयोदशादौ स्वरस्य सस्वरव्यञ्जनेन ॥ १६५ ॥

त्रयोदश इत्येवंप्रकारेषु संख्याशब्देषु आदेः स्वरस्य परेण सस्वरेण व्यञ्जनेन सह एद् भवति ॥ तेरह । तेवीसा । तेतीसा ॥

## स्थविर-विचकिलायस्कारे ॥ १६६ ॥

एषु आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह एद् भवति ॥ थेरो । वेइल्लं । मुद्ध-विअइल्ल-पसूणपुञ्जा इत्यपि दृश्यते । एक्कारो ॥

## वा कदले ॥ १६७ ॥

कदलशब्दे आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह एद् वा भवति ॥ केलं कयलं । केली कयली ॥

## वेतः कर्णिकारे ॥ १६८ ॥

कर्णिकारे इतः सस्वरव्यञ्जनेन सह एद् वा भवति ॥ कण्णेरो कण्णिआरो ॥

## अयौ वैत् ॥ १६९ ॥

अयिशब्दे आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ऐद् वा भवति ॥ ऐ बीहेमि । अइ उम्मत्तिए । वचनादैकारस्यापि प्राकृते प्रयोगः ॥

## ओत्पूतर-बदर-नवमालिका-नवफलिका-पूगफले ॥ १७० ॥

पूतरादिषु आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ओद् भवति ॥ पोरो । बोरं । बोरी । नोमालिआ । नोहलिआ । पोप्फलं । पोप्फली ॥

## न वा मयूख-लवण-चतुर्गुण-चतुर्थ-चतुर्दश-चतुर्वार-सुकुमार-कुतूहलोदूखलोलूखले ॥ १७१ ॥

मयूखादिषु आदेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ओद् वा भवति ॥ मोहो मऊहो । लोणं । इंअ लवणुग्गमा । चोग्गुणो । चउग्गुणो ।

१ B °शब्दिषु°. २ B °स्वरव्य°. ३ P तेत्तीसा. ४ B कणे°. ५ P अइ. ६ A °गमा. ७ P चउगुणो.

चोत्थो चउत्थो । चोत्थी चउत्थी । चोद्दह । चउद्दह । चोद्दसी चउद्दसी । चोव्वारो चउव्वारो । सोमालो सुकुमालो[1] । कोहलं कोउहलं । तह मन्ने कोहलिए । ओहलो उऊहलो । ओक्खलं । उलूहलं ॥ मोरो मऊरो इति तु मोरमयूरशब्दाभ्यां सिद्धम् ॥

## अवापोते[2] ॥ १७२ ॥

अवापयोरुपसर्गयोरुत इति विकल्पार्थनिपाते[3] च आदे स्वरस्य परेण सस्वरव्यञ्जनेन सह ओद् वा भवति ॥ अव । ओअरइ । अवयरइ । ओआसो अवयासो ॥ अप । ओसरइ अवसरइ । ओसारिअं अवसारिअं ॥ उत । ओ वणं । ओ घणो । उअ वणं । उअ घणो ॥ क्वचिन्न भवति । अवगयं । अवसद्दो । उअ रवी ॥

## ऊच्चोपे ॥ १७३ ॥

उपशब्दे आदे स्वरस्य परेण सस्वरव्यञ्जनेन सह ऊत् ओच्चादेशौ वा भवत. ॥ ऊहसिअं ओहसिअं उवहसिअं । ऊज्झाओ ओज्झाओ उवज्झाओ । ऊआसो ओआसो उववासो ॥

## उमो निषण्णे ॥ १७४ ॥

निषण्णशब्दे आदे स्वरस्य परेण सस्वरव्यञ्जनेन सह उम आदेशो वा भवति ॥ णुमण्णो । णिसण्णो ॥

## प्रावरणे अङ्ग्वाऊ ॥ १७५ ॥

प्रावरणशब्दे[4] आदे स्वरस्य परेण सस्वरव्यञ्जनेन सह अङ्गु आउ इत्येतावादेशौ वा भवत ॥ पङ्गुरणं पाउरणं पावरणं ॥

## स्वरादसंयुक्तस्यानादेः ॥ १७६ ॥

अधिकारोयम् । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्स्वरात्परस्यासंयुक्तस्यानादेर्भवतीति वेदितव्यम् ॥

---

१ B सुउमालो. २ B °पोते च ॥७२॥. ३ P °पातस्य चादे . ४ P शब्दस्यादे

## क-ग-च-ज-त-द-प-य वां प्रायो लुक् ॥ १७७ ॥

स्वरात्परेषामनादिभूतानामसंयुक्तानां कगचजतदपयवानां प्रायो लुग् भवति ॥ क । तित्थयरो । लोओ । सयढं ॥ ग । नओ । नयरं । मयङ्को ॥ च । सई । कय-ग्गहो ॥ ज । रययं । पयावई । गओ ॥ त । विआणं । रसा-यलो । जई ॥ द । गया । मयणो ॥ प । रिऊ । सुउरिसो ॥ य । दयालू । नयणं । विओओ ॥ व । लायण्णं । विउहो । वलयाणलो ॥ प्रायोग्रहणात्क्वचिन्न भवति । सुकुसुमं । पयागजलं । सुगओ । अगरू । सचावं । विजणं । सुतारं । विदुरो । सपावं । समवाओ । देवो । दाणवो ॥ स्वरादित्येव । संकरो । संगमो । नक्कंचरो । धणंजओ । विसंतवो । पुरंदरो । संवुडो । संवरो ॥ असंयुक्तस्येत्येव । अक्को । वग्गो । अच्चो । वज्जं । धुत्तो । उद्दामो । विप्पो । कज्जं । सव्वं ॥ क्वचित्संयुक्तस्यापि । नक्तंचरं । नक्कंचरो ॥ अनादेरित्येव । कालो । गन्धो । चोरो । जारो । तरू । दवो । पावं । वण्णो ॥ यकारस्य तु जत्वम् आदौ वक्ष्यते । समासे तु वाक्यविभक्त्यपेक्षया भिन्नपदत्वमपि विवक्ष्यते । तेन तत्र यथादर्शनमुभयमपि भवति । सुहकरो सुहयरो । आगमिओ आयमिओ । जलचरो जलयरो । बहुतरो बहुअरो । सुहदो । सुहओ । इत्यादि ॥ क्वचिदादेरपि । स पुनः । स उणं ॥ स च । सो अ ॥ चिह्नं । इन्धं ॥ क्वचिच्चस्य जः । पिशाची । पिसाजी ॥ एकत्वम् । एगत्तं ॥ एकः । एगो ॥ अमुकः । अमुगो ॥ असुकः । असुगो ॥ श्रावकः । सावगो ॥ आकारः । आगारो ॥ तीर्थकरः । तित्थगरो ॥ आकर्षः । आगरिसो ॥ लोगस्सुज्जोअगरा इत्यादिषु तु व्यत्ययश्च [४.४४७] इत्येव कस्य गत्वम् ॥ आर्षे अन्यदपि दृश्यते । आकुञ्चनं आउण्टणं । अत्र चस्य टत्वम् ॥

---

१ A विज॰ २ B नत्तचरा ३ A ॰स्येति किम । अचो ५ B उद्दामो । दर्भ ५ A ॰देरिति किम ६ P ॰यरो । सहकारो । सहयारो । आग॰ ७ A उणो.

यमुना-चामुण्डा-कामुकातिमुक्तके मोनुनासिकश्च ॥१७८॥

एषु मस्य लुग् भवति लुकि च मति मस्य स्थाने अनुनासिको भवति ॥ जउँणा । चाउँण्डा । काउँओ । अणिउँतयं ॥ क्वचिन्न भवति । अइमुंतयं । अइमुत्तयं ॥

नावर्णात्पः ॥ १७९ ॥

अवर्णात्परस्यानादेः पस्य लुग् न भवति ॥ सवहो । सावो ॥ अनादेरित्येव । परउट्ठो ॥

अवर्णो यश्रुतिः ॥ १८० ॥

कगचजेत्यादिना लुकि सति शेषः अवर्णः अवर्णात्परो लघुप्रयत्नतरयकारश्रुतिर्भवति ॥ तित्थयरो । सयढं । नयरं । मयङ्को । कयग्गहो । काय-मणी । रययं । पयावई । रसायलं । पायालं । मयणो । गया । नयणं । दयालू । लायण्णं ॥ अवर्ण इति किम् । सउणो । पउणो । पउरं । राईवं । निहओ । निनओ । वाऊ । कई । अवर्णादित्येव । लोअस्स । देअरो ॥ क्वचिद् भवति । पियइ ॥

कुब्ज-कर्पर-कीले[1] कः खोपुष्पे ॥ १८१ ॥

एषु कस्य खो भवति पुष्पं चेत् कुब्जाभिधेयं न भवति ॥ खुज्जो । खप्परं । खीलओ ॥ अपुष्प इति किम् । बंधेउं कुज्जय-पसूणं । आर्षेन्यत्रापि । कासितं । खासिअं[2] । कसितं[3] । खसिअं ॥

मरकत-मदकले गः कन्दुके त्वादेः ॥ १८२ ॥

अनयोः कस्य गो भवति कन्दुके त्वाद्यस्य कस्य ॥ मरगयं । मयगलो । गेन्दुअं ॥

किराते चः ॥ १८३ ॥

किराते कस्य चो भवति ॥ चिलाओ ॥ पुलिन्द एवायं विधिः । कामरूपिणि तु नेष्यते । नमिमो हर-किरायं ॥

---

१ B कीलके कः. २ B खासितं. ३ A कषित. ४ B °वस्य । म°.

## शीकरे भ-हौ वा ॥ १८४ ॥

शीकरे कस्य भहौ वा भवत ॥ सीभरो सीहरो । पक्षे । सीअरो ॥

## चन्द्रिकायां मः ॥ १८५ ॥

चन्द्रिकाशब्दे कस्य मो भवति ॥ चन्दिमा ॥

## निकष स्फटिक-चिकुरे हः ॥ १८६ ॥

एषु कस्य हो भवति ॥ निहसो । फलिहो । चिहुरो । चिहुरशब्द सस्कृतेपि इति दुर्ग ॥

## ख-घ-थ-ध-भाम् ॥ १८७ ॥

स्वरात्परेषामसयुक्तानामनादिभूताना ख घ थ ध भ इत्येतेषा वर्णाना प्रायो हो भवति ॥ ख । साहा । मुँह । मेहला । लिहइ ॥ घ । मेहो । जहण । माहो । लाहइ ॥ थ । नाहो । आवसहो । मिहुण । कहइ ॥ ध । साहू । वाहो । बहिरो । बाहइ । इन्द-हणू ॥ भ । सहा । सहावो । नह । थणहरो । सोहइ ॥ स्वरादित्येव । सखो । सघो । कंथा । बधो । खभो ॥ असंयुक्तस्येत्येव । अक्खइ । अग्घइ । कत्थइ । सिद्धओ । बन्धइ । लँब्भइ ॥ अनादेरित्येव । गर्जन्ते खे मेहा । गच्छइ घणो ॥ प्राय इत्येव । सरिसव-खलो । पलय-घणो । अथिरो । जिण-धम्मो । पणट्ठ-भओ । नंभ ॥

## पृथकि धो वा ॥ १८८ ॥

पृथकशब्दे थस्य धो वा भवति ॥ पिध पुधं । पिहं पुहं ॥

## शृङ्खले खः कः ॥ १८९ ॥

शृङ्खले खस्य को भवति ॥ सङ्कल ॥

---

१ B °करे भ°. २ P दुग्ग . ३ P गुहं ४ B मोहो ५ A इंदुपय. ६ B लुब्भइ ७ P गज्जंति ८ B °हा पुहा नीवा पणथिरा मोरा । गट्ठो पंडु थोड मायाएसो हला पत्तो । गच्छ°. ९ B अत्थिरो १० A नहं

### पुन्नाग-भागिन्योर्गो मः ॥ १९० ॥

अनयोर्गस्य मो भवति ॥ पुन्नामाइँ वसन्ते । भामिणी ॥

### छागे लः ॥ १९१ ॥

छागे[1] गस्य लो भवति ॥ छालो । छाली ॥

### ऊत्वे दुर्भग-सुभगे वः ॥ १९२ ॥

अनयोरूत्वे गस्य वो भवति ॥ दूहवो । सूहवो ॥ ऊत्व इति किम् । दुहओ । सुहओ ॥

### खचित-पिशाचयोश्चः स-ल्लौ वा ॥ १९३ ॥

अनयोश्चस्य यथासंख्यं स ल्ल इत्यादेशौ वा भवतः ॥ खसिओ खइओ । पिसल्लो पिसाओ ॥

### जटिले जो झो वा ॥ १९४ ॥

जटिले जस्य झो वा भवति ॥ झडिलो जडिलो ॥

### टो डः ॥ १९५ ॥

स्वरात्परस्यासंयुक्तस्यानादेष्टस्य डो भवति ॥ नडो । भडो । घडो । घडइ ॥ स्वरादित्येव । घंटा ॥ असंयुक्तस्येत्येव । खट्टा[2] ॥ अनादेरित्येव । टक्को ॥ क्वचिन्न भवति । अटति । अटइ ॥

### सटा-शकट-कैटभे ढः ॥ १९६ ॥

एषु टस्य ढो भवति ॥ सढा । सयढो । केढवो[3] ॥

### स्फटिके लः ॥ १९७ ॥

स्फटिके टस्य लो भवति ॥ फलिहो ॥

### चपेटा-पाटौ[4] वा ॥ १९८ ॥

चपेटाशब्दे ण्यन्ते[5] च पटिधातौ टस्य लो वा भवति ॥ चविला चविडा । फालेइ फाडेइ ॥

---

१ A छागा°. २ B खट्ठा. A ३ केढवो. ४ P °ते च पाटौ धा°; B °ते पाटौ धा°. ५ B फालइ.

## ठो ढः ॥ १९९ ॥

स्वरात्परस्यासंयुक्तस्यानादेष्टस्य ढो भवति ॥ मढो । सढो । कमढो । कुढारो । पढइ ॥ स्वरादित्येव । वेकुंठो ॥ असंयुक्तस्येत्येव । चिट्ठइ ॥ अनादेरित्येव । हिअए ठाइ ॥

## अङ्कोठे ल्लः ॥ २०० ॥

अङ्कोठे ठस्य द्विरुक्तो लो भवति ॥ अङ्कोल्लतेल्ल-तुप्पं ॥

## पिठरे हो वा रश्च डः ॥ २०१ ॥

पिठेर ठस्य हो वा भवति तत्संनियोगे च रस्य डो भवति ॥ पिहडो पिढरो ॥

## डो लः ॥ २०२ ॥

स्वरात्परस्यासंयुक्तस्यानादेर्डस्य प्रायो लो भवति ॥ वडवामुखम् । वलया-मुहं ॥ गरुलो । तलायं । कीलइ ॥ स्वरादित्येव । मोंडं । कोंडं ॥ असंयुक्तस्येत्येव । खग्गो ॥ अनादेरित्येव । रमइ डिम्भो ॥ प्रायोग्रहणात् क्वचिद् विकल्पः । वलिसं वडिसं । दालिमं दाडिमं । गुलो गुडो । णाली णाडी । णलं णंडं । आमेलो आवेडो ॥ क्वचिन्न भवत्येव । निविडं । गउडो । पीडिअं । नीडं । उडू । तडी ॥

## वेणौ णो वा ॥ २०३ ॥

वेणौ णस्य लो वा भवति ॥ वेलू । वेणू ॥

## तुच्छे तश्च-छौ वा ॥ २०४ ॥

तुच्छशब्दे तस्य च छ इत्यादेशौ[3] वा भवतः ॥ चुच्छं । छुच्छं । तुच्छं ॥

## तगर-त्रसर-तूवरे टः ॥ २०५ ॥

एषु तस्य टो भवति ॥ टगरो । टसरो । टूवरो ॥

---

१ B मढं. २ A आमेडो. ३ A °छौ भ°.

## प्रत्यादौ डः ॥ २०६ ॥

प्रत्यादिषु तस्य डो भवति ॥ पडिवन्नं । पडिहासो । पडिहारो । पाडिप्फद्धी । पडिसारो । पडिनिअत्तं । पडिमा । पडिवया । पडंसुआ । पडिकरइ । पहुडि । पाहुडं । वावडो । पडाया । बहेडओ । हरडई । मडयं ॥ आर्षे । दुष्कृतम् । दुक्कडं ॥ सुकृतम् । सुकडं ॥ आहृतम् । आहडं ॥ अवहृतम् । अवहडं । इत्यादि ॥ प्राय इत्येव । प्रतिसमयम् । पइसमयं ॥ प्रतीपम् । पईवं ॥ संप्रति । संपइ ॥ प्रतिष्ठानम् । पइट्ठाणं ॥ प्रतिष्ठा । पइट्ठा ॥ प्रतिज्ञा । पइण्णा ॥ प्रति । प्रभृति । प्राभृत । व्यापृत । पताका । बिभीतक । हरीतकी । मृतक । इत्यादि ॥

## इत्वे वेतसे ॥ २०७ ॥

वेतसे तस्य डो भवति इत्वे सति ॥ वेडिसो ॥ इत्व इति किम् । वेअसो ॥ इः स्वप्नादौ [ १.४६ ] इति इकारो न भवति इत्व इति व्यावृत्तिबलात् ॥

## गर्भितातिमुक्तके णः ॥ २०८ ॥

अनयोस्तस्य णो भवति ॥ गब्भिणो । अणिउँतयं ॥ क्वचिन्न भवत्यपि । अइमुत्तयं ॥ कथम् एरावणो । ऐरावणशब्दस्य । एरावओ इति तु ऐरावतस्य ॥

## रुदिते दिना ण्णः ॥ २०९ ॥

रुदिते दिना सह तस्य द्विरुक्तो णो भवति ॥ रुण्णं ॥ अत्र केचिद् ऋत्वादिषु द इत्यारब्धवन्तः स तु शौरसेनीमागधीविषय एव दृश्यते इति नोच्यते । प्राकृते हि । ऋतुः । रिऊ । उऊ ॥ रजतम् । रययं ॥ एतद् । एअं ॥ गतः । गओ ॥ आगतः । आगओ ॥ सांप्रतम् । संपयं ॥ यतः । जओ ॥ ततः । तओ ॥ कृतम् । कयं ॥

---

१ P °रो विकल्पेन म°; B °रो विकल्पेन भवति । इत्यव्या°. २ P °षु तस्य द°.

हतम्। हयं ॥ हताश॰ । हयासो ॥ श्रुतः । सुओ ॥ आकृतिः । आकिई॥ निर्वृतः । निव्वुओ ॥ तातः । ताओ ॥ कतरः । कयरो ॥ द्वितीय॰। दुईओ इत्यादयः प्रयोगा भवन्ति । न पुनः उँदू रयदं इत्यादि ॥ क्वचित् भावेपि व्यत्ययश्च [ ४.४४७ ] इत्येव सिद्धम् ॥ दिही इत्येतदर्थं तु धृतेर्दिहिः [ २.१३१ ] इति वक्ष्यामः ॥

## सप्ततौ रः ॥ २१० ॥

सप्ततौ तस्य रो भवति ॥ सत्तरी ॥

## अतसी-सातवाहने लः ॥ २११ ॥

अनयोस्तस्य लो भवति ॥ अलसी । सालाहणो । सालवाहणो। सालाहणी भासा ॥

## पलिते वा ॥ २१२ ॥

पलिते तस्य लो वा भवति ॥ पलिलं । पलिअं ॥

## पीते वो ले वा ॥ २१३ ॥

पीते तस्य वो वा भवति स्वार्थलकारे परे ॥ पीवलं । पीअलं ॥ ल इति किम् । पीअं ॥

## वितस्ति-वसति-भरत-कातर-मातुलिङ्गे हः ॥ २१४ ॥

एषु तस्य हो भवति ॥ विहत्थी । वसही ॥ बहुलाधिकारात् क्वचिन्न भवति । वसई । भरहो । काहलो । माहुलिङ्गं । मातुलुङ्गशब्दस्य तु माउलुङ्गं ॥

## मेथि-शिथिर-शिथिल-प्रथमे थस्य ढः ॥ २१५ ॥

एषु थस्य ढो भवति । हापवादः ॥ मेढी । सिढिलो । सिढिलो। पढमो ॥

---

१ B हयं २ B दुईओ. ३ B इदं. ४ B स्वार्थे ल॰

## निशीथ-पृथिव्योर्वा ॥ २१६ ॥

अनयोस्थस्य ढो वा भवति ॥ निसीढो । निसीहो । पुढवी ॥ पुहवी ॥

## दशन-दष्ट-दग्ध-दोला-दण्ड-दर-दाह-दम्भ-दर्भ-कदन-दोहदे दो वा डः ॥ २१७ ॥

एषु दस्य डो वा भवति ॥ डसणं दसणं । डट्ठो दट्ठो[1] । डड्ढो दड्ढो । डोला दोला । डण्डो दण्डो । डरो दरो । डाहो दाहो । डम्भो दम्भो । डब्भो दब्भो । कडणं कयणं । डोहलो दोहलो ॥ दरशब्दस्य च भयार्थवृत्तेरेव भवति । अन्यत्र दर-दलिअं[2] ॥

## दंश-दहोः ॥ २१८ ॥

अनयोर्धात्वोर्दस्य डो भवति ॥ डंसइ[3] । डहइ ॥

## संख्या-गद्गदे रः ॥ २१९ ॥

संख्यावाचिनि गद्गदशब्दे च दस्य रो भवति ॥ एआरह । बारह[4] ॥ तेरह । गग्गरं ॥ अनादेरित्येव । ते दस ॥ असंयुक्तस्येत्येव ॥ चउद्दह ॥

## कदल्यामद्रुमे ॥ २२० ॥

कदलीशब्दे अद्रुमवाचिनि दस्य रो भवति ॥ करली ॥ अद्रुम इति किम् । कयली । केली ॥

## प्रदीपि-दोहदे लः ॥ २२१ ॥

प्रपूर्वे दीप्यतौ धातौ दोहदशब्दे च दस्य लो भवति ॥ पलीवेइ । पलित्तं । दोहलो ॥

## कदम्बे वा ॥ २२२ ॥

कदम्बशब्दे दस्य लो वा भवति ॥ कलम्बो । कयम्बो ॥

---

१ B ट्ठो । डक्को । द°. २ B दलिअ. ३ B डंसइ. ४ P °ह । ग°. ५ P °व । दस.

## दीपौ धो वा ॥ २२३ ॥

दीप्यतौ[1] दस्य धो वा भवति ॥ धिप्पइ । दिप्पइ ॥

## कदर्थिते वः ॥ २२४ ॥

कदर्थिते दस्य वो भवति ॥ कवट्टिओ ॥

## ककुदे हः ॥ २२५ ॥

ककुदे दस्य हो भवति ॥ कउहं ॥

## निषधे धो ढः ॥ २२६ ॥

निषधे धस्य ढो भवति ॥ निसढो ॥

## वौषधे ॥ २२७ ॥

ओषधे धस्य ढो वा भवति ॥ ओसढं । ओसहं ॥

## नो णः ॥ २२८ ॥

स्वरात्परस्यासंयुक्तस्यानादेर्नस्य णो भवति ॥ कणयं । मयणो । वयणं । नयण । माणइ ॥ आर्षे । आरनालं । अनिलो । अनलो । इत्याद्यपि ॥

## वादौ ॥ २२९ ॥

असंयुक्तस्यादौ वर्तमानस्य नस्य णो वा भवति ॥ णरो नरो । णई नई । णेइ नेइ ॥ असंयुक्तस्येत्येव । न्याय. । नाओ ॥

## निम्ब-नापिते ल-ण्हं वा ॥ २३० ॥

अनयोर्नस्य ल ण्ह इत्येतौ वा भवत ॥ लिम्बो निम्बो । ण्हाविओ नाविओ ॥

---

१ P °तो धातो द. २ B स्य ढो भवति वा ॥ ओसढं । ओसढं ॥ ३ B अनिलो इ°. ४ P नई । अ°. ५ P °स्य यथासंख्य ल°.

पो वः ॥ २३१ ॥

स्वरात्परस्यासंयुक्तस्यानादेः पस्य प्रायो वो भवति ॥ सवहो। सावो। उवसग्गो। पईवो। कासवो। पावं। उवमा। कविल। कुणवं। कलावो। कवालं। महि-वालो। गो-वइ। तवइ॥ स्वरादित्येव। कम्पइ॥ असंयुक्तस्येत्येव। अप्पमत्तो॥ अनादेरित्येव। सुहेण पढइ॥ प्राय इत्येव। कई। रिऊ॥ एतेन पकारस्य प्राप्तयोर्लोपवकारयोर्यस्मिन् कृते श्रुतिसुखमुत्पद्यते स तत्र कार्यः॥

पाटि-परुष-परिघ परिखा-पनस पारिभद्रे फः॥ २३२ ॥

ण्यन्ते पटिधातौ परुषादिषु च पस्य फो भवति ॥ फालेइ फाडेइ। फरुसो। फलिहो। फलिहा। फणसो। फालिहद्दो॥

प्रभूते वः॥ २३३॥

प्रभूते पस्य वो भवति ॥ वहुत्तं॥

नीपापीडे मो वा ॥ २३४॥

अनयोः पस्य मो वा भवति ॥ नीमो नीवो। आमेलो आमेडो॥

पापर्द्धौ रः॥ २३५॥

पापर्द्धावपदादौ पकारस्य रो भवति ॥ पारद्धी॥

फो भ-हौ॥ २३६॥

स्वरात्परस्यासंयुक्तस्यानादेः फस्य भहौ भवतः॥ कचिद् भः। रेफः। रेभो॥ शिफा। सिभा॥ कचित्तु हः। मुत्ताहलं॥ कचिदुभावपि। सभलं सहलं। सेभालिआ सेहालिआ। सभरी सहरी। गुभइ गुहइ॥ स्वरादित्येव। गुंफइ॥ असयुक्तस्येत्येव। पुप्फ॥ अनादेरित्येव। चिट्ठइ फणी॥ प्राय इत्येव। कसण-फणी॥

---

१ B परस्य. २ P °वो। पाव ३ P पाटि° ४ B सिफा

बो वः ॥ २३७ ॥

स्वरात्परस्यासंयुक्तस्यानादेर्बस्य वो भवति ॥ अलाबू । अलावू । अलाऊ ॥ शबल । सवलो ॥

बिसिन्यां भः ॥ २३८ ॥

बिसिन्यां बस्य भो भवति ॥ भिसिणी ॥ स्त्रीलिङ्गनिर्देशादिह न भवति । बिस-तन्तु-पेलवाण ॥

कबन्धे म-यौ ॥ २३९ ॥

कबन्धे बस्य मयौ भवत ॥ कमन्धो । कयन्धो ॥

कैटभे भो वः ॥ २४० ॥

कैटभे भस्य वो भवति ॥ केढवो ॥

विषमे मो ढो वा ॥ २४१ ॥

विषमे मस्य ढो वा भवति ॥ विसढो । विसमो ॥

मन्मथे वः ॥ २४२ ॥

मन्मथे मस्य वो भवति ॥ वम्महो ॥

वाभिमन्यौ ॥ २४३ ॥

अभिमन्युशब्दे मो वो वा भवति ॥ अहिवन्नू अहिमन्नू ॥

भ्रमरे सो वा ॥ २४४ ॥

भ्रमरे मस्य सो वा भवति ॥ भसलो भमरो ॥

आदेर्यो जः ॥ २४५ ॥

पदादेर्यस्य जो भवति ॥ जसो । जमो । जाइ ॥ आदेरिति किम् । अवयवो । विणओ ॥ बहुलाधिकारात् सोपसर्गस्यानादेरपि । संजमो । संजोगो । अवजसो ॥ क्वचिन्न भवति । पओओ ॥ आर्षे लोपोपि । यथाख्यातम् । अहक्खाय ॥ यथाजातम् । अहाजाय ॥

१ P अलावू । अलावू । ए° २ B जो वा भ°. ३ B जम्मो

युष्मद्यर्थपरे तः ॥ २४६ ॥

युष्मच्छब्देऽर्थपरे यस्य तो भवति ॥ तुम्हारिसो । तुम्हकेरो ॥ अर्थपर इति किम् । जुम्हदम्ह-पयरणं ॥

यष्ट्यां लः ॥ २४७ ॥

यष्ट्यां यस्य लो भवति ॥ लट्ठी । वेणु लट्ठी । उच्छु-लट्ठी । महु-लट्ठी ॥

वोत्तरीयानीय-तीय-कृद्ये ज्जः ॥ २४८ ॥

उत्तरीयशब्दे अनीयतीयकृद्यप्रत्ययेषु च यस्य द्विरुक्तो जो वा भवति ॥ उत्तरिज्जं उत्तरीअं ॥ अनीय । करणिज्जं करणीअं । विम्हयणिज्जं[1] विम्हयणीअं । जवणिज्जं जवणीअं ॥ तीय । बिइज्जो बीओ ॥ कृद्य । पेज्जा पेआ[2] ॥

छायायां होकान्तौ वा ॥ २४९ ॥

अकान्तौ वर्तमाने छायाशब्दे यस्य हो वा भवति ॥ वच्छस्स च्छाही वच्छस्स च्छाया[3] । आतपाभावः । सच्छाहं सच्छायं ॥ अकान्ताविति किम् ॥ मुह-च्छाया । कान्तिरित्यर्थः ॥

डाह-वौ कतिपये ॥ २५० ॥

कतिपये यस्य डाह[4] व इत्येतौ पर्यायेण भवतः ॥ कइवाहं । कइअवं ॥

किरि-भेरे रो डः ॥ २५१ ॥

अनयो रस्य डो भवति ॥ किडी । भेडो ॥

पर्याणे डा वा ॥ २५२ ॥

पर्याणे रस्य डा इत्यादेशो वा भवति ॥ पडायाणं पल्लाणं ॥

करवीरे णः ॥ २५३ ॥

करवीरे प्रथमस्य रस्य णो भवति ॥ कणवीरो ॥

---

१ B विम्हणि°. २ A पेज्ञो. ३ B छाया ४ B डाहा. ५ B रो वा भ°.

हरिद्रादौ लः ॥ २५४ ॥

हरिद्रादिषु शब्देषु असंयुक्तस्य रस्य लो भवति ॥ हलिद्दी । दलिद्दाइ । दलिद्दो । दालिद्दं । हलिद्दो । जहुट्ठिलो । सिढिलो । मुहलो । चलणो । वलुणो । कलुणो । इङ्गालो । सक्कालो । सोमालो । चिलाओ । फलिहा । फलिहो । फालिहद्दो । काहलो । लुक्को । अवद्दालं । भसलो । जढलं । बढलो । निट्ठुलो ॥ बहुलाधिकाराच्चरणशब्दस्य पादार्थवृत्तेरेव[1] । अन्यत्र चरण-करणं ॥ भ्रमरे ससंनियोगे एव । अन्यत्र भमरो ॥ तथा । जढरं[2] । बढरो । निट्ठुरो इत्याद्यपि ॥ हरिद्रा । दरिद्राति । दरिद्र ॥ दारिद्र्य । हरिद्र । युधिष्ठिर । शिथिर । मुखर । चरण । वरण । करुण । अङ्गार । सत्कार । सुकुमार । किरात । परिखा । परिघ । पारिभद्र । कातर । रुग्ण । अपद्वार । भ्रमर । जरठ । बठर । निष्ठुर । इत्यादि ॥ आर्षे दुवालसङ्गे इत्याद्यपि[3] ॥

स्थूले लो र. ॥ २५५ ॥

स्थूले लस्य रो भवति ॥ थोरं ॥ कथं थूलभद्दो । स्थूरस्य[4] हरिद्रादिलत्वे भविष्यति ॥

लाहल-लाङ्गल-लाङ्गूले वादेर्णः ॥ २५६ ॥

एषु आदेर्लस्य णो वा भवति ॥ णाहलो लाहलो ॥ णङ्गलं । लङ्गलं । णङ्गूलं । लङ्गूलं ॥

ललाटे च ॥ २५७ ॥

ललाटे च आदेर्लस्य णो भवति ॥ चकार आदेरनुवृत्त्यर्थः ॥ णिडालं णडालं ॥

शबरे बो मः ॥ २५८ ॥

शबरे बस्य मो भवति ॥ समरो ॥

स्वप्न-नीव्योर्वा ॥ २५९ ॥

अनयोर्वस्य मो वा भवति ॥ सिमिणो सिविणो । नीमी नीवी ॥

---

१ A पदार्थ°. २ B जटर । बठरो. ३ A इत्यपि ४ B थूर°.

## श षोः सः ॥ २६० ॥

शकारषकारयोः सो भवति ॥ श । सद्दो । कुसो । निस्संसो । वंसो । सामा । सुद्धं । दस । सोहइ । विसइ ॥ ष । सण्डो निहसो । कसाओ । घोसइ । उभयोरपि । सेसो । विसेसो ॥

## स्नुषायां ण्हो न वा ॥ २६१ ॥

स्नुषाशब्दे षस्य ण्हः णकाराक्रान्तो हो वा भवति ॥ सुण्हा सुसा ॥

## दश-पाषाणे हः ॥ २६२ ॥

दशन्शब्दे पाषाणशब्दे च शषोर्यथादर्शनं हो वा भवति ॥ दह-मुहो दस-मुहो । दह-बलो दस-बलो । दह-रहो दस-रहो । दह दस । एआरह । बारह । तेरह । पाहाणो पासाणो ॥

## दिवसे सः ॥ २६३ ॥

दिवसे सस्य हो वा भवति ॥ दिवहो । दिवसो ॥

## हो घोनुस्वारात् ॥ २६४ ॥

अनुस्वारात्परस्य हस्य घो वा भवति ॥ सिंघो । सीहो ॥ संघारो संहारो । क्वचिदननुस्वारादपि । दाह । दाघो ॥

## षट्-शमी-शाव-सुधा-सप्तपर्णेष्वादेश्छः ॥ २६५ ॥

एषु आदेर्वर्णस्य छो भवति ॥ छट्ठो । छट्ठी । छप्पओ । छम्मुहो । छमी । छावो । छुहा । छत्तिवण्णो ॥

## शिरायां वा ॥ २६६ ॥

शिराशब्दे आदेश्छो वा भवति ॥ छिरा सिरा ॥

## लुग् भाजन-दनुज-राजकुले जः सस्वरस्य न वा ॥ २६७ ॥

एषु सस्वरस्य जकारस्य लुग् वा भवति ॥ भाणं भायणं । दणु-वहो । दणुअ-वहो । रा-उलं राय-उलं ॥

---

१ B दसो. २ A सामो. ३ B दसा. ४ B ण्हो वा ५ B °स्य णका° ६ P°शष°. ७ B हो म°. ८ B घो म°. ९ B °स्वारात्। १० P °रस्य ज°,

### व्याकरण-प्राकारागते कगोः ॥ २६८ ॥

एषु को गश्च सस्वरस्य लुग् वा भवति ॥ वारणं वायरणं । पारो पायारो ॥ आओ आगओ ॥

### किसलय-कालायस-हृदये यः ॥ २६९ ॥

एषु सस्वरयकारस्य लुग् वा भवति ॥ किसलं किसलयं । कालास कालायस । महण्णव समा सहिआ । जाला ते सहिअएहिं घेप्पन्ति । निसमणुप्पिअ हिअस्स हिअय ॥

### दुर्गादेव्युदुम्बर-पादपतन-पादपीठेन्तर्दः ॥ २७० ॥

एषु सस्वरस्य दकारस्य अन्तर्मध्ये वर्तमानस्य लुग् वा भवति ॥ दुग्गा-वी । दुग्गा एवी । उम्बरो उडम्बरो । पा-वडणं पाय-वडण । पा-वीढं पाय वीढं ॥ अन्तरिति किम् । दुर्गादेव्यामादौ मा भूत् ॥

### यावत्तावज्जीवितावर्तमानावट-प्रावारक देवकुलैवमेवे वः॥ २७१

यावदादिषु सस्वरवकारस्यान्तर्वर्तमानस्य लुग् वा भवति ॥ जा जाव । ता ताव । जीअ जीविअ । अत्तमाणो आवत्तमाणो । अडो अवडो । पारओ पावारओ । दे-उल देव-उलं । एमेव एवमेव ॥ अन्तरित्येव । एवमेवेन्त्यस्य न भवति ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ अष्टमस्याध्यायस्य प्रथमः पादः ॥

यद् दोर्मण्डलकुण्डलीकृतधनुर्दण्डेन सिद्धाधिप
क्रीतं वैरिकुलात् त्वया किल दलत्कुन्दावदातं यशः ।
भ्रान्त्वा त्रीणि जगन्ति खेदविवशं तन्मालवीनां व्यधा-
दापाण्डौ स्तनमण्डले च धवले गण्डस्थले च स्थितिम् ॥ १ ॥

१ PB °स्वरस्य व° २ A उम्बरो । उउम्बरो ३ PB °रस्य व°. ४ AB °वदात ५ B °भ्रान्त्वा° ६ P omits this verse ७ B विश°. ८ B °व्यधि°

॥ अर्हं ॥

संयुक्तस्य ॥ १ ॥

अधिकारोयं ज्यायामीत् [२.११५] इति यावत् । यदित ऊर्ध्व-मनुक्रमिष्यामस्तत्संयुक्तस्येति वेदितव्यम् ॥

शक्त-मुक्त-दष्ट-रुग्ण-मृदुत्वे को वा ॥ २ ॥

एषु संयुक्तस्य को वा भवति ॥ सक्को सत्तो । मुक्को मुत्तो । डक्को दट्ठो । लुक्को लुग्गो । माउक्कं माउत्तणं ॥

क्षः खः क्वचित्तु छ-झौ ॥ ३ ॥

क्षस्य खो भवति । खओ । लक्खणं ॥ क्वचित्तु छझावपि । खीणं । छीणं । झीणं । झिज्जइ ॥

ष्क-स्कयोर्नाम्नि ॥ ४ ॥

अनयोर्नाम्नि संज्ञायां खो भवति ॥ ष्क । पोक्खरं । पोक्खरिणी । निक्खं ॥ स्क । खन्धो । खन्धावारो । अवक्खन्दो ॥ नाम्नीति किम् । दुक्करं । निक्कम्पं । निक्कओ । नमोक्कारो । सक्कय । सक्कारो । तक्करो ॥

शुष्क-स्कन्दे वा ॥ ५ ॥

अनयो ष्कस्कयोः खो वा भवति ॥ सुक्खं सुक्कं । खन्दो कन्दो ॥

क्ष्वेटकादौ ॥ ६ ॥

क्ष्वेटकादिषु संयुक्तस्य खो भवति ॥ खेडओ । क्ष्वेटकशब्दो विषपर्याय । क्ष्वोटक । खोडओ ॥ स्फोटक । खोडओ । स्फेटक । खेडओ ॥ स्फेटिक । खेडिओ ॥

---

१ A मउत्तण. २ B छट्टो ३ AB भवति । क्वचित्तु छझावपि । खओ, ४ B छक्ता°. ५ PB °टश°.

स्थाणावहरे ॥ ७ ॥

स्थाणौ संयुक्तस्य खो भवति हरश्चेद् वाच्यो न भवति ॥ खाणू ॥ अहर इति किम् । थाणुणो रेहा ॥

स्तम्भे स्तो वा ॥ ८ ॥

स्तम्भशब्दे स्तस्य खो वा भवति ॥ खम्भो । थम्भो । काष्ठादिमय ॥

थ-ठावस्पन्दे ॥ ९ ॥

स्पन्दाभाववृत्तौ स्तम्भे स्तस्य थठौ भवतः ॥ थम्भो । ठम्भो ॥ स्तम्भ्यते । थम्भिज्जइ ठम्भिज्जइ ॥

रक्ते गो वा ॥ १० ॥

रक्तशब्दे संयुक्तस्य गो वा भवति ॥ रग्गो रत्तो ॥

शुल्के ङ्गो वा ॥ ११ ॥

शुल्कशब्दे संयुक्तस्य ङ्गो वा भवति ॥ सुङ्गं सुक्कं ॥

कृत्ति-चत्वरे चः ॥ १२ ॥

अनयोः संयुक्तस्य चो भवति । किच्ची । चच्चरं ॥

त्योऽचैत्ये ॥ १३ ॥

चैत्यवर्जिते त्यस्य चो भवति ॥ सच्चं । पच्चओ ॥ अचैत्य इति किम् । चइत्तं ॥

प्रत्यूषे षश्च हो वा ॥ १४ ॥

प्रत्यूषे त्यस्य चो भवति तत्संनियोगे च षस्य हो वा भवति ॥ पच्चूहो । पच्चूसो ॥

त्व-थ्व-द्व-ध्वां च-छ-ज-झाः क्वचित् ॥ १५ ॥

एषां यथासंख्यमेते क्वचित् भवन्ति ॥ भुक्त्वा । भोच्चा ॥ ज्ञात्वा ।

१ B स्तम्भ्यते. २ A थम्भिज्जइ ॥ र°. ३ B सुङ्गे ङ्गो, P सुङ्गे ङ्गो. ४ PB सुङ्गं°.

णश्वा ॥ श्रुत्वा । सोच्चा ॥ पृथ्वी । पिच्छी ॥ विद्वान् । विज्जं ॥ बुद्ध्वा बुज्झा ॥

> भोच्चा सयलं पिच्छि विज्जं बुज्झा अणण्णय-ग्गामि[1] ।
> चइऊण तवं काउं सन्ती पत्तो सिवं परमं ॥

वृश्चिके श्चेर्ञ्चुर्वा ॥ १६ ॥

वृश्चिके श्चेः सस्वरस्य स्थाने ञ्चुरादेशो वा भवति । छापवादः ॥ विञ्चुओ विंचुओ[2] । पक्षे । विच्छिओ ॥

छोक्ष्यादौ[3] ॥ १७ ॥

अक्ष्यादिषु[4] संयुक्तस्य छो भवति । खस्यापवादः ॥ अच्छि । उच्छू । लच्छी । कच्छो । छीअं । छीरं । सरिच्छो । वच्छो । मच्छिआ । छेत्तं । छुहा । दच्छो । कुच्छी । वच्छं । छुण्णो । कच्छा । छारो । कुच्छेअयं । छुरो । उच्छा । छयं । सारिच्छं ॥ अक्षि । इक्षु । लक्ष्मी । कक्ष । क्षुत । क्षीर । सदृक्ष । वृक्ष । मक्षिका । क्षेत्र । क्षुध् । दक्ष । कुक्षि । वक्षस् । क्षुण्ण । कक्षा । क्षार । कौक्षेयक । क्षुर । उक्षन् । क्षत । सादृश्य[5] ॥ क्वचित् स्थगितशब्देपि । छइअं ॥ आर्षे । इक्खू । खीरं । सारिक्खमित्यादयपि दृश्यते ॥

क्षमायां कौ ॥ १८ ॥

कौ पृथिव्यां वर्तमाने क्षमाशब्दे संयुक्तस्य छो भवति ॥ छमा पृथिवी ॥ लाक्षणिकस्यापि क्ष्मादेशस्य भवति । क्ष्मा । छमा ॥ काविति किम् । खमा क्षान्तिः ॥

ऋक्षे वा ॥ १९ ॥

ऋक्षशब्दे संयुक्तस्य छो वा भवति ॥ रिच्छं । रिक्खं । रिच्छो । रिक्खो ॥ कथं छूढं क्षिप्तं । वृक्ष-क्षिप्तयो रुक्ख-छूढौ [ २.१२७ ] इति भविष्यति ॥

---

१ P ग्गामि ॥ वृषि°. २ B विंचुवो. ३ A छोऽक्ष्यादे ४ A अक्षादि°. ५ P सादृस्य. ६ A छन्दोति. ७ B °स्य छो भ°.

क्षण उत्सवे ॥ २० ॥

क्षणशब्दे उत्सवाभिधायिनि संयुक्तस्य छो भवति ॥ छणो ॥ उत्सव इति किम् । खणो ॥

ह्रस्वात् थ्य-श्च-त्स-प्सामनिश्चले ॥ २१ ॥

ह्रस्वात्परेषां थ्यश्चत्सप्सां छो भवति निश्चले तु न भवति ॥ थ्य । पच्छं । पच्छा । मिच्छा ॥ श्च । पच्छिमं । अच्छेरं । पच्छा ॥ त्स । उच्छाहो । मच्छलो । मच्छरो । संवच्छलो । संवच्छरो । चिइच्छइ ॥ प्स । लिच्छइ । जुगुच्छइ । अच्छरा ॥ ह्रस्वादिति किम् । ऊसारिओ । अनिश्चल इति किम् । निच्चलो ॥ आर्षे तथ्ये चोपि । तच्चं ॥

सामर्थ्योत्सुकोत्सवे वा ॥ २२ ॥

एषु संयुक्तस्य छो वा भवति ॥ सामच्छं सामत्थं । उच्छुओ ऊसुओ । उच्छवो ऊसवो ॥

स्पृहायाम् ॥ २३ ॥

स्पृहाशब्दे संयुक्तस्य छो[1] भवति । फस्यापवाद ॥ छिहा ॥ बहुलाधिकारात्क्वचिदन्यदपि । निप्पिहो ॥

द्य-य्य-र्यां जः ॥ २४ ॥

एषां संयुक्तानां जो भवति ॥ द्य । मज्जं । अवज्जं । वेज्जो । जुई । जोओ ॥ य्य । जज्जो । सेज्जा ॥ र्य । भज्जा । चौर्यसमत्वात् भारिआ । कज्जं । वज्जं । पज्जाओ । पज्जत्तं । मज्जाया ॥

अभिमन्यौ ज-ञ्जौ वा ॥ २५ ॥

अभिमन्यौ संयुक्तस्य जो ञ्जश्च वा भवति ॥ अहिमज्जू । अहिमञ्जू । पक्षे । अहिमन्नू ॥ अभिग्रहणादिह न भवति । मन्नू ॥

---

1 B छो वा भ° २ P मज्जं । प°.

## साध्वस-ध्य-ह्यां झः ॥ २६ ॥

साध्वसे संयुक्तस्य ध्यह्ययोश्च झो भवति ॥ सज्झसं ॥ ध्य । वेज्झए[1] । झाणं । उवज्झाओ । सज्झाओ । संज्झं । विञ्झो ॥ ह्य । सज्झो । मैज्झं[2] ॥ गुज्झं । णज्झइ ॥

## ध्वजे वा ॥ २७ ॥

ध्वजशब्दे संयुक्तस्य झो वा भवति[4] ॥ झओ धओ ॥

## इन्धौ झा ॥ २८ ॥

इन्धौ धातौ संयुक्तस्य झा इत्यादेशो भवति ॥ समिज्झाइ । विज्झाइ ॥

## वृत्त-प्रवृत्त-मृत्तिका-पत्तन-कदर्थिते टः ॥ २९ ॥

एषु संयुक्तस्य टो भवति ॥ वट्टो । पयट्टो[5] । मट्टिआ । पट्टणं । कवट्टिओ ॥

## र्तस्याधूर्तादौ ॥ ३० ॥

र्तस्य टो भवति धूर्तादीन् वर्जयित्वा ॥ केवट्टो । वट्टी । जट्टो । पयट्टइ ॥ वट्टुलं । रायवट्टयं । नट्टई । संवट्टिअं ॥ अधूर्तादाविति किम् । धुत्तो । कित्ती । वत्ता । आवत्तणं । निवत्तणं । पवत्तणं । संवत्तणं । आवत्तओ । निवत्तओ । निव्वत्तओ । पवत्तओ । संवत्तओ[6] । वत्तिआ । वत्तिओ । कैत्तिओ[7] । उक्कत्तिओ । कत्तरी । मुत्ती । मुत्तो । मुहुत्तो ॥ बहुलाधिकाराद् वट्टा ॥ धूर्त[8] । कीर्ति । वार्ता । आवर्तन । निवर्तन । प्रवर्तन । संवर्तन । आवर्तक । निवर्तक[9] । निर्वर्तक । प्रवर्तक । संवर्तक । वर्तिका[10] । वार्तिक । कार्तिक । उत्कर्तित[11] । कर्तरी । मूर्ति । मूर्त । मुहूर्त[12] । इत्यादि ॥

---

१ B वज्झए. २ B मज्झं. ३ A मज्झो. ४ B °झो वा भ°. ५ B पवट्टो. ६ B °ओ । प°. ७ A कित्तिओ । उक्कित्तिओ. ८ B धुर्ते. ९ B °र्तक । प्रव°. १० B वर्तिक. ११ A उत्कीर्ति°. १२ A मुहूर्त ॥.

वृन्ते ण्ट ॥ ३१ ॥

वृन्ते संयुक्तस्य ण्टो भवति ॥ वेण्ट । तालवेण्ट ॥

ठोस्थि विसस्थुले ॥ ३२ ॥

अनयो संयुक्तस्य ठो भवति ॥ अट्ठी । विसठुल ॥

स्त्यान चतुर्थार्थे वा ॥ ३३ ॥

एषु संयुक्तस्य ठो वा भवति ॥ ठीण थीण । चउट्ठो । अट्ठो प्रयोजनम् । अत्थो धनम् ॥

ष्टस्यानुष्ट्रेष्टासंदष्टे ॥ ३४ ॥

उष्ट्रादिवर्जिते ष्टस्य ठो भवति ॥ लट्ठी । मुट्ठी । दिट्ठी । सिट्ठी । पुट्ठो । कट्ठ । सुरट्ठा । इट्ठो । अणिट्ठ । अनुष्ट्रेष्टासंदष्ट इति किम् । उट्टो । इट्टाचुण्ण व्व । संदट्टो ॥

गर्ते डः ॥ ३५ ॥

गर्तशब्दे संयुक्तस्य डो भवति । टापवाद ॥ गड्डो । गड्डा ॥

संमर्द वितर्दि-विच्छर्द-च्छर्दि कपर्द मर्दिते र्दस्य ॥ ३६ ॥

एषु र्दस्य डत्व भवति ॥ समड्डो । विअड्डी । विच्छड्डो । छड्डइ । छड्डी । कवड्डो । मड्डिओ । समड्डिओ ॥

गर्दभे वा ॥ ३७ ॥

गर्दभे र्दस्य डो वा भवति ॥ गड्डहो । गद्दहो ॥

कन्दरिका भिन्दिपाले ण्ड ॥ ३८ ॥

अनयो संयुक्तस्य ण्डो भवति ॥ कण्डलिआ । भिण्डिवालो ॥

स्तब्धे ठ-ढौ ॥ ३९ ॥

स्तब्धे संयुक्तयोर्यथाक्रम ठढौ भवत ॥ ठड्ढो ॥

१ B °न्ते ण्टा २ B डो ३ B °ड्डो । छड्डी

## दग्ध-विदग्ध-वृद्धि-वृद्धे ढः ॥ ४० ॥

एषु संयुक्तस्य ढो भवति ॥ दड्ढो । विअड्ढो । वुड्ढी । वुड्ढो ॥ क्वचिन्न भवति । विद्ध-कइ-निरूविअं ॥

## श्रद्धर्द्धि-मूर्धार्धेन्ते वा ॥ ४१ ॥

एषु अन्ते वर्तमानस्य संयुक्तस्य ढो वा भवति ॥ सड्ढा सद्धा । इड्ढी रिद्धी । मुण्ढा मुद्धा । अड्ढं अद्धं ॥

## म्नज्ञोर्णः ॥ ४२ ॥

अनयोर्णो भवति ॥ म्न । निण्णं । पज्जुण्णो ॥ ज्ञ । णाणं । सण्णा । पण्णा । विण्णाणं ॥

## पञ्चाशत्पञ्चदश-दत्ते ॥ ४३ ॥

एषु संयुक्तस्य णो भवति ॥ पण्णासा । पण्णरह[1] । दिण्णं ॥

## मन्यौ न्तो वा ॥ ४४ ॥

मन्युशब्दे संयुक्तस्य न्तो वा भवति ॥ मन्तू मन्नू ॥

## स्तस्य थोसमस्त-स्तम्बे ॥ ४५ ॥

समस्तस्तम्बवर्जिते स्तस्य थो भवति ॥ हत्थो । थुई । थोत्तं । थोअं । पत्थरो । पसत्थो । अत्थि । सत्थि ॥ असमस्तस्तम्ब इति किम् । समत्तो । तम्बो ॥

## स्तवे वा ॥ ४६ ॥

स्तवशब्दे स्तस्य थो वा भवति ॥ थवो तवो ॥

## पर्यस्ते थ-टौ ॥ ४७ ॥

पर्यस्ते स्तस्य पर्यायेण थटौ भवतः ॥ पल्लत्थो पल्लट्टो ॥

---

1 A पण्णदह.

चोत्साहे थो ह्रश्च रः ॥ ४८ ॥

उत्साहशब्दे संयुक्तस्य थो वा भवति तत्संनियोगे च ह्रस्य रः ॥ उत्थारो उच्छाहो ॥

आश्लिष्टे ल-धौ ॥ ४९ ॥

आश्लिष्टे संयुक्तयोर्यथासंख्यं ल ध इत्येतौ भवतः ॥ आलिद्धो ॥

चिह्ने न्धो वा ॥ ५० ॥

चिह्ने संयुक्तस्य न्धो वा भवति । ण्हापवादः ॥ पक्षे सोपि ॥ चिन्धं इन्धं चिण्हं ॥

भस्मात्मनोः पो वा ॥ ५१ ॥

अनयोः संयुक्तस्य पो वा भवति ॥ भप्पो भस्सो । अप्पा अप्पाणो । पक्षे । अत्ता ॥

ड्‌्म-क्मोः ॥ ५२ ॥

ड्‌्मक्मोः [1]पो भवति ॥ कुड्‌्मलम् । कुम्पलं । रुक्मिणी । रुप्पिणी ॥ क्वचित् च्मोपि । रुच्मी रुप्पी ॥

ष्प-स्पयोः फः ॥ ५३ ॥

ष्पस्पयोः फो भवति ॥ पुष्पम् । पुप्फं ॥ शष्पम् । सप्फं ॥ निष्पेषः । निप्फेसो ॥ निष्पावः । निप्फावो ॥ स्पन्दनम् । फन्दणं ॥ प्रतिस्पर्धिन् । पाडिप्फद्धी ॥ बहुलाधिकारात् क्वचिद् विकल्पः । बुहप्फई बुहप्पई ॥ क्वचिन्न भवति । निप्पहो । णिप्पुंसणं । परोप्परम् ॥

भीष्मे ष्मः ॥ ५४ ॥

भीष्मे ष्मस्य फो भवति ॥ भिप्फो ॥

श्लेष्मणि वा ॥ ५५ ॥

श्लेष्मशब्दे ष्मस्य [2]फो वा भवति ॥ सेफो सिलि-

---

1 P ड्‌्मक्मोः. 2 B फो वा भ°. ३ [illegible]

**ताम्राम्रे म्बः ॥ ५६ ॥**

अनयोः संयुक्तस्य मयुक्तो बो भवति ॥ तम्बं । अम्बं ॥ अम्बिर तम्बिर इति देश्यौ ॥

**ह्वो भो वा ॥ ५७ ॥**

ह्वस्य भो वा भवति ॥ जिब्भा जीहा ॥

**वा विह्वले वौ वश्च ॥ ५८ ॥**

विह्वले ह्वस्य भो वा भवति तत्संनियोगे च विशब्दे वस्य वा भो भवति ॥ भिब्भलो विब्भलो विहलो ॥[1]

**वोर्ध्वे ॥ ५९ ॥**

ऊर्ध्वशब्दे संयुक्तस्य भो वा भवति ॥ उब्भं उद्धं ॥

**कश्मीरे म्भो वा ॥ ६० ॥**

कश्मीरशब्दे संयुक्तस्य म्भो वा भवति ॥ कम्भारा कम्हारा ॥[2]

**न्मो मः ॥ ६१ ॥**

न्मस्य मो भवति । अधोलोपापवादः ॥ जम्मो । वम्महो । मम्मणं ॥

**ग्मो वा ॥ ६२ ॥**

ग्मस्य मो वा भवति ॥ युग्मम् । जुम्मं जुग्गं ॥ तिग्मम् । तिम्मं तिग्गं ॥

**ब्रह्मचर्य तूर्य सौन्दर्य-शौण्डीर्ये र्यो रः ॥ ६३ ॥**

एषु र्यस्य रो भवति । जापवादः ॥ बम्हचेरं ।[3] चौर्यसमत्वाद् बम्हचरिअं ।[4] तूरं । सुन्देरं । सोण्डीरं ॥

**धैर्ये वा ॥ ६४ ॥**

धैर्ये र्यस्य रो वा भवति ॥ धीरं धिज्जं । सूरो सुज्जो इति तु सूरसूर्यप्रकृतिभेदात् ॥

---

१ P विह्वलशब्दस्य ह्व°. २ AB कम्भारो कम्हारो. ३ B बम्मचेरं. ४ B बम्मच°

## एतः पर्यन्ते ॥ ६५ ॥

पर्यन्ते एकारात्परस्य र्यस्य रो भवति ॥ पेरन्तो ॥ एत इति किम्। पज्जन्तो ॥

## आश्चर्ये ॥ ६६ ॥

आश्चर्ये एत परस्य र्यस्य रो भवति ॥ अच्छेरं ॥ एत इत्येव। अच्छरिअं॥

## अतो रिआर-रिज्ज-रीअं ॥ ६७ ॥

आश्चर्ये अकारात्परस्य र्यस्य रिअ अर रिज्ज रीअ इत्येते आदेशा भवन्ति ॥ अच्छरिअं अच्छअरं अच्छरिज्जं अच्छरीअं ॥ अत इति किम्। अच्छेरं ॥

## पर्यस्त पर्याण-सौकुमार्ये ल्लः ॥ ६८ ॥

एषु र्यस्य ल्लो भवति ॥ पर्यस्तं पल्लट्टं पल्लत्थं। पल्लाणं। सोअमल्लं ॥ पल्लङ्को इति च पल्यङ्कशब्दस्य यलोपे द्वित्वे च ॥ पलिअङ्को इत्यपि चौर्यसमत्वात् ॥

## बृहस्पति-वनस्पत्योः सो वा ॥ ६९ ॥

अनयोः संयुक्तस्य सो वा भवति ॥ बहस्सई बहप्फई। भयस्सई भयप्फई। वणस्सई वणप्फई ॥

## बाष्पे होश्रुणि ॥ ७० ॥

बाष्पशब्दे संयुक्तस्य हो भवति अश्रुण्यभिधेये ॥ बाहो नेत्रजलम् ॥ अश्रुणीति किम् ॥ बप्फो ऊष्मा ॥

## कार्षापणे ॥ ७१ ॥

कार्षापणे संयुक्तस्य हो भवति ॥ काहावणो ॥ कथं कहावणो। ह्रस्वः संयोगे [१.८४] इति पूर्वमेव ह्रस्वत्वे पश्चादादेशे। कर्षापणशब्दस्य वा भविष्यति ॥

---

१ B ॥ ६६ ॥ एत. २ PB ॥ ६८ ॥ पर्यस्त पर्याण-सौकुमार्ये एषु
३ P बिह°. ४ A बाप्फो.

दुःख-दक्षिण-तीर्थे वा ॥ ७२ ॥

एषु संयुक्तस्य हो वा भवति ॥ दुहं दुक्खं । पर-दुक्खे दुक्खिआ विरला । दाहिणो दक्खिणो । तूहं तित्थं ॥

कूष्माण्ड्यां ष्मो लस्तु ण्डो वा ॥ ७२ ॥

कूष्माण्ड्यां ष्मा इत्येतस्य हो भवति ण्ड इत्यस्य तु वा लो भवति ॥ कोहली कोहण्डी ॥

पक्ष्म-श्म-ष्म-स्म-ह्मां म्हः ॥ ७४ ॥

पक्ष्मशब्दसंबन्धिनः संयुक्तस्य श्मष्मस्मह्मां च मकाराक्रान्तो हकार आदेशो भवति ॥ पक्ष्मन् । पम्हाइं । पम्हल-लोअणा ॥ श्म । कुश्मानः । कुम्हाणो । कश्मीराः । कम्हारा । ष्म । ग्रीष्मः । गिम्हो । ऊष्मा । उम्हा । स्म । अस्मादृशः । अम्हारिसो । विस्मयः । विम्हओ ॥ ह्म । ब्रह्मा बम्हा ॥ सुह्माः । सुम्हा । बम्हणो । बम्हचेरं ॥ क्वचित् म्भोपि दृश्यते । बम्भणो । बम्भचेरं । सिम्भो । क्वचिन्न भवति । रश्मिः । रस्सी । स्मरः । सरो ॥

सूक्ष्म-श्न-ष्ण-स्न-ह्न-ह्ण-क्ष्णां ण्हः ॥ ७५ ॥

सूक्ष्मशब्दसंबन्धिनः संयुक्तस्य श्नष्णस्नह्नह्णक्ष्णां च णकाराक्रान्तो हकार आदेशो भवति ॥ सूक्ष्मं । सण्हं ॥ श्न । पण्हो । सिण्हो ॥ ष्ण । विण्हू । जिण्हू । कण्हो । उण्हीसं ॥ स्न । जोण्हा । ण्हाओ । पण्हुओ ॥ ह्न । वण्ही । जण्हू ॥ ह्ण । पुव्वण्हो । अवरण्हो ॥ क्ष्ण । सण्हं । तिण्हं ॥ विप्रकर्षे तु कृष्णकृत्स्नशब्दयोः कसणो । कसिणो ॥

ह्लो ल्हः ॥ ७६ ॥

ह्लः स्थाने लकाराक्रान्तो हकारो भवति ॥ कल्हारं । पल्हाओ ॥

---

१ B °क्खेण दु°. २ B इत्येतस्य. ३ A पक्ष्म. ४ P पक्ष्मलालो°. ५ B धम्हा । बम्ह°. ६ A दृमो°. ७ A समो. ८ B °काराढे°. ९ B त्रिण्हू क°. १० B °न्तो हो म°.

## क-ग-ट-ड-त-द-प-श-ष-स-ᳵक-ᳵपामूर्ध्वं लुक् ॥ ७७ ॥

एषां संयुक्तवर्णसंबन्धिनामूर्ध्वं स्थितानां लुग् भवति ॥ क । भुत्त । सित्थं ॥ । ग । दुद्धं । मुद्धं ॥ ट । षट्पदः । छप्पओ ॥ कट्फलम् । कप्फलं ॥ ड । खड्ग । खग्गो ॥ षड्ज । सज्जो ॥ त । उत्पल । उप्पलं ॥ उत्पात । उप्पाओ ॥ द । मद्गु । मग्गू । मोग्गरो ॥ प । सुत्तो । गुत्तो ॥ श । लण्ह । णिच्चलो । चुअइ ॥ ष । गोट्ठी । छट्ठो । निट्ठुरो ॥ स । खलिओ । नेहो ॥ ᳵक । दुᳵखम् । दुक्खं ॥ ᳵप । अंतᳵपात. । अंतप्पाओ ॥

## अधो म-न-याम् ॥ ७८ ॥

मनयां संयुक्तस्याधो वर्तमानानां लुग् भवति ॥ म । जुग्गं । रस्सी । सरो । सेरं ॥ न । नग्गो । लग्गो ॥ य । सामा । कुड्डं । वाहो ॥

## सर्वत्र ल-ब-रामवन्द्रे ॥ ७९ ॥

वन्द्रशब्दादन्यत्र लबरां सर्वत्र संयुक्तस्योर्ध्वमधश्च स्थितानां लुग् भवति ॥ ऊर्ध्वं ॥ ल । उल्का । उक्का । वल्कलम् । वक्कलं ॥ ब । शब्द । सद्दो ॥ अब्द । अद्दो ॥ लुब्धक लोद्धओ ॥ र । अर्क । अक्को ॥ वर्ग । वग्गो ॥ अध । श्लक्ष्णम् । सण्हं ॥ विक्लव । विक्कवो ॥ पक्वम् । पक्कं पिक्कं ॥ ध्वस्त । धत्थो ॥ चक्रम् । चक्कं ॥ ग्रह । गहो ॥ रात्रि । रत्ती ॥ अत्र द्व इत्यादिसंयुक्तानामुभयप्राप्तौ यथादर्शनं लोपः ॥ क्वचिदूर्ध्वम् । उद्विग्न. । उव्विग्गो ॥ द्विगुण. । वि-उणो ॥ द्वितीय । बीओ । कल्मषम् । कम्मसं ॥ सर्वम् । सव्वं ॥ शुल्बम् । सुव्वं ॥ क्वचित्त्वधः । काव्यम् । कव्वं ॥ कुल्या । कुल्ला ॥ माल्यम् । मल्लं । द्विप । दिओ ॥ द्विजाति. । दुआई ॥ क्वचित्पर्यायेण । द्वारम् । वारं । दारं ॥ उद्विग्न. । उव्विग्गो । उव्विण्णो ॥ अवन्द्र इति किम् । वन्द्रं । संस्कृतसमोयं प्राकृतशब्दः । अत्रोत्तरेण विकल्पोपि न भवति निषेधसामर्थ्यात् ॥

---

१ B च । भुत्त । मु° २ B °त्त । सित्थं । सि°. ३ A तप्पाओ. ४ P °वन्द्रे, B °वन्द्रे ५ P वन्द्र°, B वद्र° ६ B पक्कं । पि°. ७ P अवन्द्र°, B अवंद्र°. ८ P वन्द्र, B वंद्र

द्रे रो न वा ॥ ८० ॥

द्रशब्दे रेफस्य वा लुग् भवति ॥ चन्दो चन्द्रो । रुद्दो रुद्रो । भद्दं भद्रं । समुद्दो समुद्रो ॥ ह्रदशब्दस्य स्थितिपरिवृत्तौ द्रह इति रूपम् । तत्र द्रहो दहो । केचिद् रलोपं नेच्छन्ति । द्रहशब्दमपि कश्चित् संस्कृतं मन्यते ॥ वोद्रहादयस्तु तरुणपुरुषादिवाचका नित्यं रेफसंयुक्ता देश्या एव । सिक्खन्तु वोद्रहीओ । वोद्रह-द्रहम्मि पडिआ ॥

धात्र्याम् ॥ ८१ ॥

धात्रीशब्दे रस्य लुग् वा भवति ॥ धत्ती । ह्रस्वात् प्रागेव रलोपे धाई । पक्षे । धारी ॥

तीक्ष्णे णः ॥ ८२ ॥

तीक्ष्णशब्दे णस्य लुग् वा भवति ॥ तिक्खं । तिण्हं ॥

ज्ञो ञः ॥ ८३ ॥

ज्ञः संबन्धिनो ञस्य लुग् वा भवति ॥ जाणं णाणं । सव्वज्ञो सव्वण्णू । अप्पज्ञो अप्पण्णू । दइवज्ञो दइवण्णू । इङ्गिअज्ञो इङ्गिअण्णू । मणोज्ञं । मणोण्णं । अहिज्ञो अहिण्णू । पज्ञा पण्णा । अज्ञा आणा । संज्ञा सण्णा ॥ क्वचिन्न भवति । विण्णाणं ॥

मध्याह्ने हः ॥ ८४ ॥

मध्याह्ने हस्य लुग् वा भवति ॥ मज्झन्नो मज्झण्हो ॥

दशार्हे ॥ ८५ ॥

पृथग्योगाद्वेति निवृत्तम् । दशार्हे हस्य लुग् भवति ॥ दसारो ॥

आदेः श्मश्रु-श्मशाने ॥ ८६ ॥

अनयोरादेर्लुग् भवति ॥ मासू मंसू मस्सू । मसाणं ॥ आर्षे श्मशान-शब्दस्य सीआणं सुसाणमित्यपि भवति ॥

---

१ B °ब्दे परे रे°. २ A संगि°. ३ B अण्णा. । मज्ञा । स°.

## श्चो हरिश्चन्द्रे ॥ ८७ ॥

हरिश्चन्द्रशब्दे श्च इत्यस्य लुग् भवति ॥ हरिअन्दो ॥

## रात्रौ वा ॥ ८८ ॥

रात्रिशब्दे संयुक्तस्य लुग् वा भवति ॥ राई रत्ती ॥

## अनादौ शेषादेशयोर्द्वित्वम् ॥ ८९ ॥

पदस्यानादौ वर्तमानस्य शेषस्यादेशस्य च द्वित्वं भवति ॥ शेष । कप्पतरू । भुत्तं । दुद्धं । नग्गो । उक्का । अक्को । मुक्खो ॥ आदेश । डक्को । जक्खो । रग्गो । किच्ची । रुप्पी ॥ कचिन्न भवति । कसिणो ॥ अनादाविति किम् । खलिअं । थेरो । खम्भो । द्वयोस्तु द्वित्वमस्त्येवेति न भवति । विञ्चुओ । भिण्डिवालो ॥

## द्वितीय-तुर्ययोरुपरि पूर्वः ॥ ९० ॥

द्वितीयतुर्ययोर्द्वित्वप्रसङ्गे उपरि पूर्वौ भवतः ॥ द्वितीयस्योपरि प्रथम श्चतुर्थस्योपरि तृतीय इत्यर्थः ॥ शेष । वक्खाणं । वग्घो । मुच्छा । निज्झरो । कट्ठं । तित्थं । निद्धणो । गुप्फं । निब्भरो ॥ आदेश । जक्खो ॥ घस्य नास्ति ॥ अच्छी । मज्झं । पट्ठी । वुड्ढो । हत्थो । आलिद्धो । पुप्फं । भिब्भलो ॥ तैलादौ [२.९८] द्वित्वे ओक्खलं ॥ सेवादौ [२.९९] नक्खा । नहा ॥ समासे । कइ-द्धओ कइ-धओ ॥ द्वित्व इत्येव । खाओ ॥

## दीर्घे वा ॥ ९१ ॥ २७

दीर्घशब्दे शेषस्य घस्य उपरि पूर्वो वा भवति ॥ दिग्घो दीहो ॥

## न दीर्घानुस्वारात् ॥ ९२ ॥

दीर्घानुस्वाराभ्यां लाक्षणिकाभ्यामलाक्षणिकाभ्यां च परयोः शेषादेशयोर्द्वित्वं न भवति ॥ छूढो । नीसासो । फासो ॥ अलाक्षणिक ।

---

१ B °श्चौ॥ २ B निब्भरो ३ B निज्झरो. ४ P उक्खलं. ५ B °वे वा । ६°
६ B °लिकं.

पार्श्वम् । पासं ॥ शीर्षम् । सीसं ॥ ईश्वरः । ईसरो ॥ द्वेष्यः । वेसो ॥ लास्यम् । लासं ॥ आस्यम् । आसं ॥ प्रेष्यः । पेसो ॥ अवमाल्यम् । ओमालं ॥ आज्ञा । आणा । आज्ञप्तिः । आणत्ती ॥ आज्ञपनं । आणवणं ॥ अनुस्वारात् । त्र्यस्रम् । तंसं ॥ अलाक्षणिके । संझा । विंझो । कंसालो ॥

## र-होः ॥ ९३ ॥

रेफहकारयोर्द्वित्वं न भवति ॥ रेफः शेषो नास्ति ॥ आदेशे । सुन्देरं । चम्हेचेरं । पेरन्तं ॥ शेषस्य हस्य । विहलो ॥ आदेशस्य । कहावणो ॥

## धृष्टद्युम्ने णः ॥ ९४ ॥

धृष्टद्युम्नशब्दे आदेशस्य णस्य द्वित्वं न भवति ॥ धट्ठज्जुणो ॥

## कर्णिकारे वा ॥ ९५ ॥

कर्णिकारशब्दे शेषस्य णस्य द्वित्वं वा न भवति ॥ कणिआरो कण्णिआरो ॥

## दृप्ते ॥ ९६ ॥

दृप्तशब्दे शेषस्य द्वित्वं न भवति ॥ दरिअ-सीहेण ॥

## समासे वा ॥ ९७ ॥

शेषादेशयोः समासे द्वित्वं वा भवति ॥ नइ-ग्गामो नइ-गामो । कुसुम-प्पयरो कुसुम-पयरो । देव-त्थुई देव-थुई । हर-क्खन्दा हर-खन्दा । आणाल-क्खम्भो आणाल-खम्भो ॥ बहुलाधिकारादशेषादेशयोरपि । स-प्पिवासो स-पिवासो । बद्ध-प्फलो बद्ध-फलो । मलय-सिहर-क्खण्डं मलय-सिहर-खण्डं । पम्मुक्कं पमुक्कं । अद्दंसणं अदंसणं । पडिक्कूलं पडिकूलं । तेल्लोक्कं तेलोक्कं इत्यादि ॥

---

१ B °ज्ञापनं. २ B °णिकं. ३ PB °देशे. ४ B वम्भचे°. ५ B °स्य द्वि°, ६ P वा भ°. ७ P °स्य तस्य द्वि°.

तैलादौ ॥ ९८ ॥

तैलादिषु अनादौ यथादर्शनमन्त्यस्यानन्त्यस्य च व्यञ्जनस्य द्वित्वं भवति ॥ तेल्ल । मण्डुक्को । वेइल्लं । उज्जू । विड्डा । बहुत्तं ॥ अनन्त्यस्य । सोत्तं । पेम्मं । जुव्वणं ॥ आर्षे । पडिसोओ । विस्सोअसिआ ॥ तैल । मण्डूक । विचकिल । ऋजु । व्रीडा । प्रभूत । स्रोतस् । प्रेमन् । यौवन इत्यादि ॥

सेवादौ वा ॥ ९९ ॥

सेवादिषु अनादौ यथादर्शनमन्त्यस्यानन्त्यस्य च द्वित्वं वा भवति ॥ सेव्वा सेवा ॥ नेड्डं नीडं[1] । नक्खा नहा । निहित्तो निहिओ । वाहित्तो वाहिओ । माउक्कं माउअं । एक्को एओ । कोउहल्लं कोउहलं । वाउल्लो वाउलो । थुल्लो थोरो । हुत्तं हूअं । दइव्वं दइवं । तुण्हिक्को तुण्हिओ । मुक्को मूओ । खण्णू खाणू । थिण्णं थीणं ॥ अनन्त्यस्य । अम्हक्केरं अम्हकेरं । तं च्चेअ तं चेअ । सो च्चिअ सो चिअ ॥ सेवा । नीड । नख । निहित । व्याहृत । मृदुक । एक । कुतूहल । व्याकुल । स्थूल । हूत । दैव । तूष्णीक । मूक । स्थाणु । स्त्यान । अस्मदीय । चेअ । चिअ । इत्यादि ॥

शार्ङ्गे ङात्पूर्वोत् ॥ १०० ॥

शार्ङ्गे ङात्पूर्वो अकारो भवति ॥ सारङ्गं ॥

क्ष्मा-श्लाघा-रत्नेन्त्यव्यञ्जनात् ॥ १०१ ॥

एषु संयुक्तस्य यदन्त्यव्यञ्जनं तस्मात्पूर्वोद् भवति ॥ छमा । सलाहा । रयणं ॥ आर्षे सूक्ष्मेपि । सुहुमं ॥

स्नेहाग्न्योर्वा ॥ १०२ ॥

अनयोः संयुक्तस्यान्त्यव्यञ्जनात्पूर्वोकारो वा भवति ॥ सणेहो नेहो । अगणी अग्गी ॥

---

१ B नेडं. २ A धरो

## प्लक्षे लात् ॥ १०३ ॥

प्लक्षशब्दे संयुक्तस्यान्त्यव्यञ्जनाल्लात्पूर्वोद् भवति ॥ पलक्खो ॥

## र्ह-श्री-ह्री-कृत्स्न-क्रिया-दिष्ट्यास्वित् ॥ १०४ ॥

एषु संयुक्तस्यान्त्यव्यञ्जनात्पूर्व इकारो भवति ॥ र्ह । अरिहइ । अरिहो[2] । गरिहा । बरिहो ॥ श्री । सिरी ॥ ह्री । हिरी ॥ ह्रीतः । हिरीओ[3] ॥ अह्रीकः । अहिरीओ[4] ॥ कृत्स्नः । कसिणो ॥ क्रिया । किरिआ ॥ आर्षे तु । हयं नाणं क्रिया-हीणं ॥ दिष्ट्या । दिट्ठिआ ॥

## र्श-र्ष-तप्त-वज्रे वा ॥ १०५ ॥

र्शर्षयोस्तप्तवज्रयोश्च[5] संयुक्तस्यान्त्यव्यञ्जनात्पूर्व इकारो वा भवति ॥ र्श । आयरिसो आयंसो । सुदरिसणो सुदंसणो । दरिसणं । दंसणं ॥ र्ष । वरिसं वासं । वरिसा वासा । वरिस-सयं वास-सयं ॥ व्यवस्थितविभाषया क्वचिन्नित्यम् । परामरिसो । हरिसो । अमरिसो ॥ तप्तं[6] । तविओ तत्तो ॥ वज्रं[7] । वइरं वज्जं ॥

## लात् ॥ १०६ ॥

संयुक्तस्यान्त्यव्यञ्जनाल्लात्पूर्व इद् भवति ॥ किलिन्नं । किलिट्ठं । सिलिट्ठं । पिलुट्ठं । पिलोसो । सिलिम्हो । सिलेसो । सुक्किलं[8] । सुइलं । सिलोओ । किलेसो । अम्बिलं । गिलाइ । गिलाणं । मिलाइ । मिलाणं । किलम्मइ । किलन्तं ॥ क्वचिन्न भवति । कमो । पवो । विप्पवो । सुक्क-पक्खो ॥ उत्प्लावयति । उप्पावेइ ॥

## स्याद्-भव्य-चैत्य-चौर्यसमेषु यात् ॥ १०७ ॥

स्यादादिषु चौर्यशब्देन समेषु च संयुक्तस्य यात्पूर्व इद् भवति ॥ सिआ । सिआ-वाओ । भविओ । चेइअं ॥ चौर्यसम । चोरिअं । थेरिअं । भारिआ । गम्भीरिअं । गहीरिअं । आयरिओ[9] । सुन्दरिअं । सोरिअं । वीरिअं । वरिअं । सूरिओ । धीरिअं । बम्हचरिअं[10] ॥

१ B °ष्ट्यामित्. २ B अरिहो. ३ PB हिरिओ. ४ B अहरिओ. B योः स°. ६ PB तप्त°. ७ PB वज्र°. ८ P सुकिल. ९ P आइरिओ. १० B बमच°.

स्वप्ने नात् ॥ १०८ ॥

स्वप्नशब्दे नकारात्पूर्व इद् भवति ॥ सिविणो ॥

स्निग्धे वादितौ ॥ १०९ ॥

स्निग्धे संयुक्तस्य नात्पूर्वौ अदितौ वा भवतः ॥ सणिद्धं सिणिद्धं । पक्षे निद्धं ॥

कृष्णे वर्णे वा ॥ ११० ॥

कृष्णे वर्णवाचिनि संयुक्तस्यान्त्यव्यञ्जनात्पूर्वौ अदितौ वा भवतः ॥ कसणो कसिणो कण्हो ॥ वर्ण इति किम् ॥ विष्णौ कण्हो ॥[1]

उच्चार्हति ॥ १११ ॥

अर्हत्-शब्दे संयुक्तस्यान्त्यव्यञ्जनात्पूर्व उत् अदितौ च भवतः ॥ अरुहो अरहो अरिहो । अरुहन्तो अरहन्तो अरिहन्तो ॥

पद्म-छद्म-मूर्ख-द्वारे वा ॥ ११२ ॥

एषु संयुक्तस्यान्त्यव्यञ्जनात्पूर्व उद् वा भवति ॥ पउमं पोम्मं । छउमं छम्मं । मुरुक्खो मुक्खो । दुवारं । पक्षे । वारं । देरं । दारं ॥

तन्वीतुल्येषु ॥ ११३ ॥

उकारान्ता ङीप्रत्ययान्तास्तन्वीतुल्याः । तेषु संयुक्तस्यान्त्यव्यञ्जनात्पूर्व उकारो भवति ॥ तणुवी । लहुवी । गरुवी । बहुवी । पुहुवी । मउवी ॥ क्वचिदन्यत्रापि । स्रुघ्नम् । सुरुग्घं ॥ आर्षे । सूक्ष्मम् । सुहुमं ॥

एकस्वरे श्वः-स्वे ॥ ११४ ॥

एकस्वरे पदे यौ श्वस् स्व इत्येतौ तयोरन्त्यव्यञ्जनात्पूर्व उद् भवति ॥ श्वः कृतम् । सुवे कयं ॥ स्वे जनाः ॥ सुवे जणा ॥ एकस्वर इति किम् । स्व-जनः । स-यणो ॥

---

१ B नात्पू°. २ P णिद्धं. ३ B °क्तस्य°. ४ P °र । वारं । दे°. AB °न्तात् ङी°. ६ A पहुवी. ७ A °न्यदपि.

ज्यायामीत् ॥ ११५ ॥

ज्याशब्दे अन्त्यव्यञ्जनात्पूर्व ईद् भवति ॥ जीआ ॥

करेणू-वाराणस्यो र-णोर्व्यत्ययः ॥ ११६ ॥

अनयो रेफणकारयोर्व्यत्ययः स्थितिपरिवृत्तिर्भवति ॥ कणेरू । वाणारसी ॥ स्त्रीलिङ्गनिर्देशात्पुंसि न भवति । एसो करेणू ॥

आलाने लनोः ॥ ११७ ॥

आलानशब्दे लनोर्व्यत्ययो भवति ॥ आणालो । आणालक्खम्भो[1] ॥

अचलपुरे च-लोः ॥ ११८ ॥

अचलपुरशब्दे[2] चकारलकारयोर्व्यत्ययो भवति ॥ अलचपुरं ॥

महाराष्ट्रे ह रोः ॥ ११९ ॥

महाराष्ट्रशब्दे हरोर्व्यत्ययो भवति ॥ मरहट्ठं ॥

ह्रदे ह-दोः ॥ १२० ॥

ह्रदशब्दे हकारदकारयोर्व्यत्ययो भवति ॥ द्रहो[3] ॥ आर्षे । हरए महपुण्डरिए ॥

हरिताले र-लोर्न वा ॥ १२१ ॥

हरितालशब्दे रकारलकारयोर्व्यत्ययो वा भवति ॥ हलिआरो हरिआलो ।

लघुके ल-होः ॥ १२२ ॥

लघुकशब्दे घस्य हत्वे कृते लहोर्व्यत्ययो वा भवति ॥ हलुअं । लहुअं ॥ घस्य व्यत्यये कृते पदादित्वात् हो न प्राप्नोतीति हकरणम् ॥

ललाटे ल-डोः ॥ १२३ ॥

ललाटशब्दे लकारडकारयोर्व्यत्ययो भवति वा ॥ णडालं । णलाडं ।

---

१ P °लखम्भो. २ B °पुरे श°. ३ P दहो.

**स्वप्ने नात् ॥ १०८ ॥**

स्वप्नशब्दे नकारात्पूर्व इद् भवति ॥ सिविणो ॥

**स्निग्धे वादितौ ॥ १०९ ॥**

स्निग्धे संयुक्तस्य नात्पूर्वौ अदितौ वा भवतः ॥ सणिद्धं सिणिद्धं । पक्षे निद्धं ॥

**कृष्णे वर्णे वा ॥ ११० ॥**

कृष्णे वर्णवाचिनि संयुक्तस्यान्त्यव्यञ्जनात्पूर्वौ अदितौ वा भवतः ॥ कसणो कसिणो कण्हो ॥ वर्ण इति किम् ॥ विण्हौ कण्हो ॥[२]

**उच्चार्हति ॥ १११ ॥**

अर्हत्-शब्दे संयुक्तस्यान्त्यव्यञ्जनात्पूर्व उत् अदितौ च भवतः ॥ अरुहो अरहो अरिहो । अरुहन्तो अरहन्तो अरिहन्तो ॥

**पद्म-छद्म-मूर्ख-द्वारे वा ॥ ११२ ॥**

एषु संयुक्तस्यान्त्यव्यञ्जनात्पूर्व उद् वा भवति ॥ पउमं पोम्मं । छउमं छम्मं । मुरुक्खो मुक्खो । दुवारं । पक्षे । वारं । देरं । दारं ॥

**तन्वीतुल्येषु ॥ ११३ ॥**

उकारान्ता ङीप्रत्ययान्तास्तन्वीतुल्याः । तेषु संयुक्तस्यान्त्यव्यञ्जनात्पूर्व उकारो भवति ॥ तणुवी । लहुवी । गरुवी । बहुवी । पुहुवी । मउवी ॥ क्वचिदन्यत्रापि । स्रुघ्नम् । सुरुग्घं ॥ आर्षे । सूक्ष्मम् । सुहुमं ॥

**एकस्वरे श्व-स्वे ॥ ११४ ॥**

एकस्वरे पदे यौ श्वस् स्व इत्येतौ तयोरन्त्यव्यञ्जनात्पूर्व उद् भवति ॥ श्वः कृतम् । सुवे कयं ॥ स्वे जनाः ॥ सुवे जणा ॥ एकस्वर इति किम् । स्व-जनः । स यणो ॥

---

१ B नम्पू°. २ P णिद्धं ३ B °स्य्य° ४ P °र । बारं । दे° AB °न्तार इ°. ६ A पहुवी. ७ A °न्यदपि

ज्यायामीत् ॥ ११५ ॥

ज्याशब्दे अन्त्यव्यञ्जनात्पूर्व ईद् भवति ॥ जीआ ॥

करेणू-वाराणस्यो र-णोर्व्यत्ययः ॥ ११६ ॥

अनयो रेफणकारयोर्व्यत्ययः स्थितिपरिवृत्तिर्भवति ॥ कणेरू । वाणारसी ॥ स्त्रीलिङ्गनिर्देशात्पुंसि न भवति । एसो करेणू ॥

आलाने लनोः ॥ ११७ ॥

आलानशब्दे लनोर्व्यत्ययो भवति ॥ आणालो । आणाल-क्खम्भो[1] ॥

अचलपुरे च-लोः ॥ ११८ ॥

अचलपुरशब्दे[2] चकारलकारयोर्व्यत्ययो भवति ॥ अलचपुरं ॥

महाराष्ट्रे ह-रोः ॥ ११९ ॥

महाराष्ट्रशब्दे हरोर्व्यत्ययो भवति ॥ मरहट्ठं ॥

ह्रदे ह-दोः ॥ १२० ॥

ह्रदशब्दे हकारदकारयोर्व्यत्ययो भवति ॥ द्रहो[3] ॥ आर्षे । हरए महपुण्डरिए ॥

हरिताले र-लोर्न वा ॥ १२१ ॥

हरितालशब्दे रकारलकारयोर्व्यत्ययो वा भवति ॥ हलिआरो हरिआलो ।

लघुके ल-होः ॥ १२२ ॥

लघुकशब्दे घस्य हत्वे कृते लहोर्व्यत्ययो वा भवति ॥ हलुअं । लहुअं ॥ घस्य व्यत्यये कृते पदादित्वात् हो न प्राप्नोतीति हकरणम् ॥

ललाटे ल-डोः ॥ १२३ ॥

ललाटशब्दे लकारडकारयोर्व्यत्ययो भवति वा ॥ णडालं । णलाडं ।

---

१ P °लखम्भो. २ B °पुरे श°. ३ P दहो.

ललाटे च [१.२५७] इति आदेर्लस्य णविधानादिह द्वितीयो लः स्थानी ॥

ह्ये ह्योः ॥ १२४ ॥

ह्यशब्दे हकारयकारयोर्व्यत्ययो वा भवति ॥ गुह्यम् । गुय्हं गुज्झं ॥ सह्यः । सय्हो सज्झो ॥

स्तोकस्य थोक्क-थोव-थेवाः ॥ १२५ ॥

स्तोकशब्दस्य एते त्रय आदेशा भवन्ति वा ॥ थोक्कं थोवं थेवं । पक्षे । थोअं ॥

दुहितृ-भगिन्योर्धूआ-बहिण्यौ ॥ १२६ ॥

अनयोरेतावादेशौ वा भवतः ॥ धूआ दुहिआ । बहिणी भइणी ॥

वृक्ष-क्षिप्तयो रुक्ख-छूढौ ॥ १२७ ॥

वृक्षक्षिप्तयोर्यथासंख्यं रुक्ख छूढ इत्यादेशौ वा भवतः । रुक्खो वच्छो । छूढं खित्तं । उच्छूढं । उक्खित्तं ॥

वनिताया विलया ॥ १२८ ॥

वनिताशब्दस्य विलया इत्यादेशो वा भवति ॥ विलया वणिआ ॥ विलयेति संस्कृतेपीति केचित् ॥

गौणस्येषत कूरः ॥ १२९ ॥

ईषच्छब्दस्य गौणस्य कूर इत्यादेशो वा भवति ॥ चिंच व्व कूर-पिक्का । पक्षे । ईसि ॥

स्त्रिया इत्थी ॥ १३० ॥

स्त्रीशब्दस्य इत्थी इत्यादेशो वा भवति ॥ इत्थी थी ॥

धृतेर्दिहिः ॥ १३१ ॥

धृतिशब्दस्य दिहिरित्यादेशो वा भवति ॥ दिही धिई ॥

१ P °क्का. २ B वा ॥ दिही.

## मार्जारस्य मञ्जर-वञ्जरौ ॥ १३२ ॥

मार्जारशब्दस्य मञ्जर वञ्जर इत्यादेशौ वा भवतः ॥ मञ्जरो वञ्जरो । पक्षे । मज्जारो ॥

## वैडूर्यस्य वेरुलिअं ॥ १३३ ॥

वैडूर्यशब्दस्य वेरुलिअ इत्यादेशो वा भवति ॥ वेरुलिअं । वेडुज्जं ॥

## एण्हिं एत्ताहे इदानीमः ॥ १३४ ॥

अस्य एतावादेशौ वा भवतः ॥ एण्हिं । एत्ताहे । इआणिं ॥

## पूर्वस्य पुरिमः ॥ १३५ ॥

पूर्वस्य स्थाने पुरिम इत्यादेशो वा भवति ॥ पुरिमं पुव्वं ॥

## त्रस्तस्य हित्थ-तट्ठौ ॥ १३६ ॥

त्रस्तशब्दस्य हित्थ तट्ठ इत्यादेशौ वा भवतः ॥ हित्थं तट्ठं तत्थं ॥

## बृहस्पतौ बहो भयः ॥ १३७ ॥

बृहस्पतिशब्दे बह इत्यस्यावयवस्य भय इत्यादेशो वा भवति ॥ भयस्सई भयप्फई भयप्पई ॥ पक्षे । बहस्सई । बहप्फई । बहप्पई ॥ वा बृहस्पतौ [ १.१३८ ] इति इकारे उकारे च बिहस्सई । बिहप्फई । बिहप्पई । बुहस्सई । बुहप्फई । बुहप्पई ॥

## मलिनोभय-शुक्ति-छुप्तारब्ध-पदातेर्मइलावह-सिप्पि-छिक्का-ढत्त-पाइक्कं ॥ १३८ ॥

मलिनादीनां यथासंख्यं मइलादय आदेशा वा भवन्ति ॥ मलिनं । मइलं मलिणं ॥ उभयं । अवहं । उवहमित्यपि केचित् । अवहोआसं । उभयबलं ॥ आर्षे । उभयोकालं ॥ शुक्तिं । सिप्पी सुत्ती ॥

---

१ B मार्जारस्य. २ B वैडुज्ज ३ B °तट्ठावित्या° ४ P इत्येतस्य भ°. ५ B बिहप्पई । मलि°. ६ PB मलिन. ७ PB उभय ८ P शुक्ति. ९ B °त्ती ॥ सुत्त । छुत्त ।.

छुप्तं । छिक्को छुत्तो ॥ आरब्धं । आढत्तो आरद्धो ॥ पदाति । पाइक्को पयाई ॥

### दंष्ट्राया दाढा ॥ १३९ ॥

पृथग्योगाद्वेति निवृत्तम् । दंष्ट्राशब्दस्य दाढा इत्यादेशो भवति ॥ दाढा । अयं संस्कृतेपि ॥

### बहिसो बाहिं-बाहिरौ ॥ १४० ॥

बहिःशब्दस्य बाहिं बाहिर इत्यादेशौ भवतः ॥ बाहिं बाहिरं ॥

### अधसो हेट्ठं ॥ १४१ ॥

अधस्शब्दस्य हेट्ठ इत्ययमादेशो भवति ॥ हेट्ठं ॥

### मातृ-पितुः स्वसुः सिआ-छौ ॥ १४२ ॥

मातृपितृभ्यां परस्य स्वसृशब्दस्य सिआ छा इत्यादेशौ भवतः ॥ माउ-सिआ । माउ-च्छा । पिउ-सिआ । पिउ-च्छा ॥

### तिर्यचस्तिरिच्छिः ॥ १४३ ॥

तिर्यच्शब्दस्य तिरिच्छिरित्यादेशो भवति ॥ तिरिच्छि पेच्छइ ॥ आर्षे तिरिआ इत्यादेशोपि । तिरिआ ॥

### गृहस्य घरोपतौ ॥ १४४ ॥

गृहशब्दस्य घर इत्यादेशो भवति पतिशब्दश्चेत् परो न भवति ॥ घरो । घर-सामी । रायं-हरं ॥ अपताविति किम् । गह-वई ॥

### शीलाद्यर्थस्येरः ॥ १४५ ॥

शीलधर्मसाध्वर्थे विहितस्य प्रत्ययस्य इर इत्यादेशो भवति ॥ हसनशीलः हसिरो । रोविरो । लज्जिरो । जम्पिरो । वेविरो । भमिरो । ऊससिरो ॥ केचित् तृन एव इरमाहुस्तेषां नमिरगमिरादयो न सिध्यन्ति । तृनोत्र रादिना बाधितत्वात् ॥

---

१ P छुप्तः. २ P आरब्धः. ३ PB पदातिः. ४ A पायक्को. ५ P दाढा । बहि°. ६ PB इत्यादे°. ७ B तिर्यंच°. ८ P°च्छि इत्या°. ९ A तिरिअ. १० B °घपरं.

## क्त्वस्तुमत्तूण-तुआणाः ॥ १४६ ॥

क्त्वाप्रत्ययस्य तुम् अत् तूण तुआणं इत्येते आदेशा भवन्ति ॥ तुम् । दट्ठुं । मोत्तुं ॥ अत् । भमिअ । रमिअ ॥ तूण । घेत्तूण । काऊण ॥ तुआण । भेत्तुआण । सोउआण ॥ वन्दित्तु इत्यनुस्वारलोपात् ॥ वन्दित्ता इति सिद्धसंस्कृतस्यैव वलोपेन ॥ कट्टु इति तु आर्षे ।

## इदमर्थस्य केरः ॥ १४७ ॥

इदमर्थस्य प्रत्ययस्य केर इत्यादेशो भवति ॥ युष्मदीयः । तुम्हकेरो ॥ अस्मदीयः । अम्हकेरो ॥ न च भवति[4] । मईअ पक्खे । पाणिणीआ ॥

## पर-राजभ्यां क्क-डिक्कौ च ॥ १४८ ॥

पर राजन् इत्येताभ्यां परस्येदमर्थस्य प्रत्ययस्य यथासंख्यं संयुक्तौ क्को डित् इक्कश्चादेशौ भवतः । चकारात्केरश्च ॥ परकीयम् । पारक्कं[6] । परक्कं । पारकेरं ॥ राजकीयम् । राइक्कं । रायकेरं ॥

## युष्मदस्मदोञ एच्चयः ॥ १४९ ॥

आभ्यां परस्येदमर्थस्याञ एच्चय इत्यादेशो भवति ॥ युष्माकमिदं यौष्माकम् । तुम्हेच्चयं । एवम् अम्हेच्चयं ॥

## वतेर्व्वः ॥ १५० ॥

वतेः प्रत्ययस्य द्विरुक्तो वो भवति ॥ महुरव्व पाडलिउत्ते पासाया ॥

## सर्वाङ्गादीनस्येकः ॥ १५१ ॥

सर्वाङ्गात् सर्वादेः पथ्यङ्गं [हे. ७.१] इत्यादिना विहितस्येनस्य स्थाने इक इत्यादेशो भवति ॥ सर्वाङ्गीणः । सव्वङ्गिओ ॥

---

१ A आणा इ° २ B सिद्ध स°. ३ B कट्टु. ४ B भवति मईअपक्खे पा°; P भवति ॥ मईअ पक्खो । पा°. ५ B °क्कौ क डित्. ६ PB °क्क । पा°.

पथो णस्येकट्[1] ॥ १५२ ॥

नित्यं णः पन्थश्च [हे० ६.४] इति यः पथो णो विहितस्तस्य इकट् भवति ॥ पान्थ । पहिओ ॥

ईयस्यात्मनो[2] णयः ॥ १५३ ॥

आत्मन. परस्य ईयस्य णय इत्यादेशो भवति ॥ आत्मीयम् । अप्पणयं ॥

त्वस्य डिमा-त्तणौ वा ॥ १५४ ॥

त्वप्रत्ययस्य डिमा त्तण इत्यादेशौ वा भवतः ॥ पीणिमा । पुप्फिमा । पीणत्तणं । पुप्फत्तणं । पक्षे । पीणत्तं । पुप्फत्तं[3] ॥ इम्नः पृथ्व्यादिषु नियतत्वात् तदन्यप्रत्ययान्तेषु अस्य विधिः ॥ पीनता इत्यस्य प्राकृते पीणया इति भवति । पीणदा इति तु भाषान्तरे । तेनेह तलो दा न क्रियते ॥

अनङ्कोठात्तैलस्य डेल्लः ॥ १५५॥

[4]अङ्कोठवर्जिताच्छब्दात्परस्य तैलप्रत्ययस्य डेल्ल इत्यादेशो भवति ॥ सुरहि[5]-जलेण कडुएल्लं ॥ अनङ्कोठादिति किम् । अङ्कोल्लतेल्लं ॥

यत्तदेतदोतोरित्तिअ एतल्लुक् च ॥ १५६ ॥

एभ्यः परस्य डावादेरतोः परिमाणार्थस्य इत्तिअ इत्यादेशो भवति एतदो लुक् च ॥ यावत् । जित्तिअं ॥ तावत् । तित्तिअं ॥ एतावत् । इत्तिअं ॥

इदंकिमश्च डेत्तिअ-डेत्तिल-डेद्दहाः ॥ १५७ ॥

इदंकिम्भ्यां यत्तदेतद्भ्यश्च परस्यातोर्डावतोर्वा डित् एत्तिअ एत्तिल एद्दह इत्यादेशा भवन्ति एतल्लुक् च ॥ इयत् । एत्तिअं । [9]एत्तिलं । एद्दहं ॥ कियत् । [11]केत्तिअं । [12]केत्तिलं । केद्दहं ॥ यावत् । जेत्तिअं ।

---

१ B °कट् नित्य णः ॥ ५२ ॥ पन्थ°. २ A नोऽणय°. ३ A पुप्फत्तं. ४ P अनङ्कोठव°. ५ A सुरहीम°. ६ A हित्तिल. ७ B °ह्न°. ८ B हित. ९ A इत्तिल. १० A इत्तिलं. ११ A कित्तिअं. १२ A कित्तिलं.

[1]जेत्तिलं । जेद्दहं ॥ तावत् । तेत्तिअं । [3]तेत्तिलं । तेद्दहं ॥ एतावत् । एत्तिअं । [4]एत्तिलं । एद्दहं ॥

## कृत्वसो हुत्तं ॥ १५८ ॥

वारे कृत्वस् [ हे० ७. २ ] इति यः कृत्वस् विहितस्तस्य हुत्तमित्यादेशो भवति ॥ सयहुत्तं । सहस्सहुत्तं ॥ कथं प्रियाभिमुखं पियहुत्तं । अभिमुखार्थेन हुत्तशब्देन भविष्यति ॥

## आल्विल्लोल्लाल-वन्त-मन्तेत्तेर-मणा मतोः ॥ १५९ ॥

आलु इत्यादयो नव आदेशा मतोः स्थाने यथाप्रयोगं भवन्ति ॥ आलु[5] । नेहालू । दयालू । ईसालू । लज्जालुआ[6] ॥ इल्ल । सोहिल्लो । छाइल्लो । जामइल्लो ॥ उल्ल । विआरुल्लो । मंसुल्लो । दप्पुल्लो[7] ॥ आल । सद्दालो । जडालो । फडालो । रसालो । जोण्हालो ॥ वन्त ॥ धणवन्तो । भत्तिवन्तो ॥ मन्त । हणुमन्तो । सिरिमन्तो । पुण्णमन्तो ॥ इत्त । कव्वइत्तो । माणइत्तो ॥ इर ॥ गव्विरो । रेहिरो ॥ मण । धणमणो ॥ केचिन्मादेशमपीच्छन्ति । हणुमा ॥ मतोरिति किम् । धणी । अत्थिओ ॥

## त्तो दो तसो वा ॥ १६० ॥

तसः प्रत्ययस्य स्थाने त्तो दो इत्यादेशौ[8] वा भवतः ॥ सव्वत्तो सव्वदो । एकत्तो एकदो[10] । अन्नत्तो अन्नदो । कत्तो कदो । जत्तो जदो । तत्तो तदो । इत्तो इदो । पक्षे । सव्वओ । इत्यादि ॥

## त्रपो हि-ह-त्थाः ॥ १६१ ॥

त्रप्प्रत्ययस्य[12] एते भवन्ति ॥ यत्र । जहि । जह । जत्थ ॥ तत्र । तहि । तह । तत्थ ॥ कुत्र । कहि । कह । कत्थ ॥ अन्यत्र । अन्नहि । अन्नह । अन्नत्थ ॥

---

१ A जित्तिल. २ B °हं. ३ A तितिलं. ४ A इत्तिल. ५ B °दय आ. ६ B आलू. ७ B लज्जालुआ. ८ A दप्पुल्लो. ९ B °देशौ म°. १० A एगदो. ११ P °त्रलो. १२ P °त्रप्प्र°.

## वैकाद्दः सि सिअं इआ ॥ १६२ ॥

एकशब्दात्परस्य दाप्रत्ययस्य सि सिअं इआ इत्यादेशा वा भवन्ति ॥ एकदा । एकसि । एकसिअं । एकइआ । पक्षे । एगया ॥

## डिल्ल-डुल्लौ भवे ॥ १६३ ॥

भवेर्थे नाम्न परौ इल्ल उल्ल इत्येतौ डितौ प्रत्ययौ भवत ॥ गामिल्लिआ । पुरिल्लं । हेट्ठिल्लं । उवरिल्लं । अप्पुल्लं ॥ आल्वालावपीच्छन्त्यन्ये ॥

## स्वार्थे कश्च वा ॥ १६४ ॥

स्वार्थे कश्चकारादिल्लोल्लौ डितौ प्रत्ययौ वा भवत ॥ क । कुङ्कुमपिञ्जरय । चन्दओ । गयणयम्मि । धरणीहर-पक्खुब्भन्तय । दुहिअए राम-हिअयए । इहयं । आलेट्ठुअं । आश्लेष्टुमित्यर्थ ॥ द्विरपि भवति । बहुअय ॥ ककारोच्चारण पैशाचिकभाषार्थम् । यथा । वतनके वतनक समप्पेत्तून ॥ इल्ल । निज्जिआसोअ-पल्लविल्लेण । पुरिल्लो । पुरा पुरो वा ॥ उल्ल । मह पिउल्लओ । मुहुल्लं । हत्थुल्ला । पक्षे । चन्दो । गयणं । इह । आलेट्ठु । बहु । बहुअ । मुहं । हत्था ॥ कुत्सादिविशिष्टे तु संस्कृतवदेवं कप् सिद्ध ॥ यावादिलक्षण क प्रतिनियतविषय एवेति वचनम् ॥

## ल्लो नवैकाद्वा ॥ १६५ ॥

आभ्या स्वार्थे संयुक्तो ल्लो वा भवति ॥ नवल्लो । एकल्लो ॥ सेवादित्वात् कस्य द्वित्वे एक्कल्लो । पक्षे । नवो । एक्को । एओ ॥

## उपरेः संव्याने ॥ १६६ ॥

संव्यानेर्थे वर्तमानादुपरिशब्दात् स्वार्थे ल्लो भवति ॥ अवरिल्लो ॥ संव्यान इति किम् । अवरिं ॥

---

१ B इत्यादेशा २ A °एकइआ ३ P°भरतापि° ४ B°हियअए, A°हिअए. ५ P आलेष्टुअं ६ B °तूण. ७ P पुरिल्ला ८ A मदुल्ल. ९ B हत्थुल्लो १० B °व कपि°, P क, ११ B °नियत एवे° १२ AB ल्लो १३ P अवरि.

**भ्रुवो मया डमया ॥ १६७ ॥**

भ्रूशब्दात्स्वार्थे मया डमया इत्येतौ प्रत्ययौ भवतः ॥ भुमया । भमया ॥

**शनैसो डिअम् ॥ १६८ ॥**

शनैस्शब्दात्स्वार्थे डिअम् भवति ॥ सणिअमवगूढो ॥

**मनाको न वा डयं च ॥ १६९ ॥**

मनाक्शब्दात्स्वार्थे डयम् डिअम् च प्रत्ययो वा भवति ॥ मणयं । मणियं । पक्षे । मणा ॥

**मिश्राड्डालिअः ॥ १७० ॥**

मिश्रशब्दात्स्वार्थे डालिअः प्रत्ययो वा भवति ॥ मीसालिअं । पक्षे । मीसं ॥

**रो दीर्घात् ॥ १७१ ॥**

दीर्घशब्दात्परः स्वार्थे रो वा भवति ॥ दीहरं । दीहं ॥

**त्वादेः सः ॥ १७२ ॥**

भावे त्व-तल् [ हे० ७.१ ] इत्यादिना विहितात्त्वादेः परः स्वार्थे स एव त्वादिर्वा भवति ॥ मृदुकत्वेन । मउअत्तयाइ ॥ आतिशायिकास्त्वातिशायिकः संस्कृतवदेव सिद्धः । जेट्ठयरो । कणिट्ठयरो ॥

**विद्युत्पत्र-पीतान्धाल्लः ॥ १७३ ॥**

एभ्यः स्वार्थे लो वा भवति । विज्जुला । पत्तलं । पीवलं । पीअलं । अन्धलो । पक्षे । विज्जू । पत्तं । पीअं । अन्धो ॥ कथं जमलं । यमलमिति संस्कृतशब्दाद् भविष्यति ॥

**गोणादयः ॥ १७४ ॥**

गोणादयः शब्दा अनुक्तप्रकृतिप्रत्ययलोपागमवर्णविकारा बहुलं नि-

१ B मनाको वा डयं डियं च; A °वा डयश्च. २ B प्रत्ययो वा भवतः. ३ A °ब्दाड्डा°. ४ B °यो भ°. ५ B °ब्दात् स्वा°. ६ विहितत्वा°. ७ B कनिट्ठ.

पात्यन्ते ॥ गौ । गोणो । गावी ॥ गावः[1] । गावीओ ॥ बलीवर्द । बइल्लो ॥ आप । आऊ ॥ पञ्चपञ्चाशत् । पञ्चावण्णा[2] । पणपन्ना[3] ॥ त्रिपञ्चाशत् । तेवण्णा । त्रिचत्वारिंशत् । तेआलीसा ॥ व्युत्सर्ग । विउसग्गो[4] ॥ व्युत्सर्जनम् । वोसिरण ॥ बहिर्मैथुनं[5] वा । बहिद्धा ॥ कार्यम् । णामुक्कसिअं ॥ क्वचित् । कत्थइ ॥ उद्वहति । मुव्वहइ ॥ अपस्मार । वम्हलो ॥ उत्पलम् । कन्दुट्टं ॥ धिक्धिक् । छिछि । धिद्धि ॥ धिगस्तु । धिरत्थु ॥ प्रतिस्पर्धा । पडिसिद्धी[6] । पाडिसिद्धी[7] ॥ स्थासक । चच्चिक्क ॥ निलय । निहेलण ॥ मघवान् । मघोणो ॥ साक्षी । सक्खिणो[8] ॥ जन्म । जम्मण ॥ महान् । महन्तो ॥ भवान् । भवन्तो ॥ आशी । आसीसा[9] ॥ क्वचित् हस्य डुंभी[10] ॥ बृहत्तरम् । वड्डयर ॥ हिमोर । भिमोरो ॥ क्षुल्लक[11] । क्षुल्लक । खुड्डओ ॥ घोषाणामग्रेतनो गायन । घायणो ॥ वड[12] । वढो[13] ॥ ककुदम् । ककुध ॥ अकाण्डम् । अत्थक्कं[14] ॥ लज्जावती[15] । लज्जालुइणी ॥ कुतूहलम् । कुड्डं ॥ चूत । मायन्दो । माकन्दशब्द संस्कृतेपीत्यन्ये[16] ॥ विष्णु । भट्टिओ ॥ श्मशानम् । करसी ॥ असुरा । अगया ॥ खेलम् । खेड्डं ॥ पौष्प रज । तिङ्गिच्छि । दिनम् । अल्ल ॥ समर्थ । पक्कलो[17] ॥ पण्डक । णेलच्छो ॥ कर्पास । पलही ॥ बली । उज्जल्लो[18] ॥ ताम्बूलम्[19] । झसुर[20] ॥ पुंश्चली । छिछई[21] ॥ शाखा । साहुली । इत्यादि ॥ वाधिकारात्पक्षे यथादर्शन गउओ इत्याद्यपि भवति ॥ गोला गोआवरी इति तु गोदागोदावरीभ्यां सिद्धम् ॥ भाषाशब्दाश्च । आहित्थ[22] । लल्लक्क[23] । विड्डिर । पच्चड्डिअ । उप्पेहड । मडप्फर । पड्डिच्छिर[24] । अट्टमट्ट । विहडप्फड । उज्जल्ल । हल्लप्फल[25] इत्यादयो महाराष्ट्रविदर्भादिदेशप्रसिद्धा लोकतोवगन्तव्या ॥ क्रिया-

---

१ B गावा २ A पञ्चावण्णा ३ P पण्पण्णा, B पणपण्णा ४ B विउस्सग्गो ५ A वहिमेंथु ६ A पडिसिद्धा । स्पा°. ७ B °सिद्धा. ८ B साक्खिणो ९ B आसीसा. १० B डुंभी ११ B ड. १२ P वट १३ B वढो. १४ P अत्थक्कं १५ B लज्जावती १६ B °तोपि° १७ B पक्कले १८ B पडितः १९ B उज्जल्लो २० B ताम्बूल. २१ P झसुरं, B झुसुर २२ B छिछई २३ B आहित्थ २४ B लल्लक्क २५ B पड्डिच्छिर. २६ B हल्लप्फल.

शब्दाश्च । अवयामइ । फुम्फुल्लइ । उप्फालेइ । इत्यादयः । अतएव च कृष्ट-घृष्ट-वाक्य-विद्वस्-वाचस्पति-विष्टरश्रवस्-प्रचेतस्-प्रोक्त-प्रोतादीनां क्विबादिप्रत्ययान्तानां च अग्निचित्सोमसुत्सुग्लसुम्लेत्यादीनां पूर्वैः कविभिरप्रयुक्तानां प्रतीतिवैषम्यपरः प्रयोगो न कर्तव्यः शब्दान्तरैरेव तु तदर्थोभिधेयः । यथा कृष्टः कुशलः । वाचस्पतिर्गुरुः । विष्टरश्रवा हरिरित्यादि ॥ घृष्टशब्दस्य तु सोपसर्गस्य प्रयोग इष्यत एव । मन्दर-यड-परिघट्टं । तद्दिअस-निहट्टाणङ्ग इत्यादि ॥ आर्षे तु यथादर्शनं सर्वमविरुद्धम् । यथा । घट्टा । मट्ठा । विउसा । सुअ लक्खणाणुसारेण । वक्कन्तरेसु अ पुणो इत्यादि ॥

अव्ययम् ॥ १७५ ॥

अधिकारोयम् । इतः परं ये वक्ष्यन्ते आ पादसमाप्तेस्तेव्ययसंज्ञा ज्ञातव्याः ॥

तं वाक्योपन्यासे ॥ १७६ ॥

तमिति वाक्योपन्यासे प्रयोक्तव्यम् ॥ तं तिअस-बन्दि-मोक्खं ॥

आम अभ्युपगमे ॥ १७७ ॥

आमेत्यभ्युपगमे प्रयोक्तव्यम् ॥ आम बहुला वणोली ॥

णवि वैपरीत्ये ॥ १७८ ॥

णवीति वैपरीत्ये प्रयोक्तव्यम् ॥ णवि हा वणे ॥

पुणरुत्तं कृतकरणे ॥ १७९ ॥

पुणरुत्तमिति कृतकरणे प्रयोक्तव्यम् ॥

अइ सुप्पइ पंसुलि णीसहेहिँ अङ्गेहिँ पुणरुत्तं ॥

हन्दि विषाद-विकल्प-पश्चात्ताप-निश्चय सत्ये ॥ १८० ॥

हन्दि इति विषादादिषु प्रयोक्तव्यम् ॥

---

१ BP एव कृष्ट°. २ A सुग्लु°. ३ B °यड°. ४ B °व्यरुइका ५ B बहुला.

हन्दि चलणे णओ सो ण माणिओ हन्दि हुज्ज एत्ताहे ।
हन्दि न होही भणिरी सा सिज्जइ हन्दि तुह कज्जे ॥

हन्दि । सत्यमित्यर्थ ॥

हन्द च गृहाणार्थे ॥ १८१ ॥

हन्द हन्दि च गृहाणार्थे प्रयोक्तव्यम् ॥ हन्द पलोएसु इमं । हन्दि । गृहाणेत्यर्थ. ॥

मिव पिव विव व्व व विअ इवार्थे वा ॥ १८२ ॥

एते इवार्थे अव्ययसंज्ञका. प्राकृते वा प्रयुज्यन्ते ॥ कुमुअं मिव । चन्दणं पिव । हंसो विव । साअरो व्व । खीरोओ सेसस्स व निम्मोओ । कमल विअ । पक्षे । नीलुप्पल-मालो इव ॥

जेण तेण लक्षणे ॥ १८३ ॥

जेण तेण इत्येतौ लक्षणे प्रयोक्तव्यौ ॥ भमर-रुअं जेण कमल-वणं । भमर-रुअं तेणं कमल-वणं ॥

णइ चेअ चिअ च अवधारणे ॥ १८४ ॥

एतेवधारणे प्रयोक्तव्या. ॥ गईए णइ । जं चेअ मउलणं लोअणाणं । अणुबद्धं तं चिअ कामिणीणं ॥ सेवादित्वाद् द्वित्वमपि । ते च्चिअ धन्ना । ते च्चेअ सुपुरिसा ॥ च । स च यै रूवेण । स च सीलेण ॥

बले निर्धारण-निश्चययोः ॥ १८५ ॥

बले इति निर्धारणे निश्चये च प्रयोक्तव्यम् ॥ निर्धारणे । बले पुरिसो धणंजओ खत्तिआणं ॥ निश्चये । बले सीहो । सिंह एवायम् ॥

किरेर हिर किलार्थे वा ॥ १८६ ॥

किर इर हिर इत्येते किलार्थे वा प्रयोक्तव्या ॥ कल्लं किर खर-हिअओ । तस्स इर । पिअ-वयंसो हिर ॥ पक्षे । एवं किल तेण सिविणए भणिआ ॥

१ B वाराओ २ B माल. ३ B °तो य°. ४ A सुपुरिसा ५ B चरू°. ६ B हिर माणिओ.

णवरं केवले ॥ १८७ ॥

केवलेर्थे णवरं इति प्रयोक्तव्यम् ॥ णवर पिआइं चिअ णिव्वडन्ति[3] ॥

आनन्तर्ये णवरि ॥ १८८ ॥

आनन्तर्ये णवरीति प्रयोक्तव्यम् ॥ णवरि अ से रहु-वइणा ॥ केचित्तु केवलानन्तर्यार्थयोर्णवरणवरि इत्येकमेव सूत्रं कुर्वते तन्मते उभावप्युभयार्थौ ॥

अलाहि निवारणे ॥ १८९ ॥

अलाहीति निवारणे प्रयोक्तव्यम् ॥ अलाहि किं वाईएण लेहेण ॥

अण णाइं नञर्थे ॥ १९० ॥

अण णाइं इत्येतौ नञोर्थे[6] प्रयोक्तव्यौ ॥ अणचिन्तिअममुणन्ती । णाइं करेमि रोसं ॥

माइं मार्थे ॥ १९१ ॥

माइं इति मार्थे प्रयोक्तव्यम् ॥ माइं काहीअ रोसं । मा कार्षीद् रोषम् ॥

हद्धी निर्वेदे ॥ १९२ ॥

हद्धी इत्यव्ययमत एव निर्देशात् हाधिक्शब्दादेशो वा निर्वेदे प्रयोक्तव्यम् ॥ हद्धीहद्धी । हा धाहधाह ॥

वेव्वे भय-वारण-विषादे ॥ १९३ ॥

भयवारणविषादेषु वेव्वे इति प्रयोक्तव्यम् ॥

वेव्वे त्ति भये वेव्वे त्ति वारणे जूरणे अ वेव्वे त्ति ।
उल्लाविरीइ वि तुहं वेव्वे त्ति मयच्छि किं णेअं ॥ १ ॥
किं उल्लावेन्तीए[12] उअ[13] जूरन्तीएँ किं तुं भीआए ।
उव्वाडिरीएँ वेव्वे त्ति तीएँ भणिअं न विम्हरिमो ॥ २ ॥

---

१ B णवर. २ PB केवलेर्थे. ३ B निव्वडति. ४ B वाउएण. ५ A णाइँ. ६ PB नञर्थे. ७ B °णन्ति. ८ A माईं. ९ A कार्हीअ. १० A व्य. । हद्धीहाधा°. ११ B धाहा°. १२ A उल्लावन्तीए. १३ A ओअ. १४ P तु. १५ B उव्वाडि°.

वेव्व च आमन्त्रणे ॥ १९४ ॥

वेव्व वेव्वे च आमन्त्रणे प्रयोक्तव्ये ॥ वेव्व गोले । वेव्वे मुरन्दले वहसि पाणिअं ॥

मामि हला हले सख्या वा ॥ १९५ ॥

एते सख्या आमन्त्रणे वा प्रयोक्तव्या ॥ मामि सरिसक्खराण वि ॥ पणवह माणस्स हला ॥ हले हयासस्स । पक्षे । सहि एरिसि च्चिअ गई ॥

दे संमुखीकरणे च ॥ १९६ ॥

संमुखीकरणे सख्या आमन्त्रणे च दे इति प्रयोक्तव्यम् ॥ दे पसिअ ताव सुन्दरि ॥ दे आ पसिअ निअत्तसु ॥

हुं दान-पृच्छा-निवारणे ॥ १९७ ॥

हु इति दानादिषु प्रयुज्यते ॥ दाने । हु गेण्ह अप्पणो च्चिअ ॥ पृच्छायाम् । हु साहसु सब्भावं ॥ निवारणे । हु निल्लज्ज समोसर ॥

हु खु निश्चय-वितर्क-संभावन-विस्मये ॥ १९८ ॥

हु खु इत्येतौ निश्चयादिषु प्रयोक्तव्यौ ॥ निश्चये । तं पि हु अच्छिन्न-सिरी । तं खु सिरीएँ रहस्सं ॥ वितर्कः ऊहः संशयो वा । ऊहे । न हु णवरं संगहिआ । एअं खु हसइ ॥ संशये । जलहरो खु धूम-वडलो खु ॥ संभावने । तरीउं ण हु णवरं इमं । एअं खु हसइ ॥ विस्मये । को खु एसो सहस्स-सिरो ॥ बहुलाधिकारादनुस्वारात्परो हुर्न प्रयोक्तव्य ॥

ऊ गर्हाक्षेप-विस्मय-सूचने ॥ १९९ ॥

ऊ इति गर्हादिषु प्रयोक्तव्यम् ॥ गर्हा । ऊ णिल्लज्ज ॥ प्रक्रान्तस्य वाक्यस्य विपर्यासाशङ्काया विनिवर्तनलक्षण आक्षेपः ॥ ऊ किं मए भणिअं ॥ विस्मये । ऊ कह मुणिआ अहयं ॥ सूचने । ऊ केण न विण्णायं ॥

१ B वर्न्ने २ B °त । हु गहण्ह अप्पणो च्चिअ ३ A साहस B साहसु ४ [illegible] °धिं । B °गिर्दार° ५ B नरिंदे ६ B ण्वर, ७ B मुणिआ

**थू कुत्सायाम् ॥ २०० ॥**

थू इति कुत्सायां प्रयोक्तव्यम् ॥ थू निल्लज्जो लोओ ॥

**रे अरे संभाषण-रतिकलहे ॥ २०१ ॥**

अनयोरर्थयोर्यथासंख्यमेतौ प्रयोक्तव्यौ ॥ रे संभाषणे । रे हिअय मडह-सरिआ ॥ अरे रतिकलहे । अरे मए समं मा करेसु उवहासं ॥

**हरे क्षेपे च ॥ २०२ ॥**

क्षेपे संभाषणरतिकलहयोश्च हरे इति प्रयोक्तव्यम् ॥ क्षेपे । हरे णिल्लज्ज ॥ संभाषणे । हरे पुरिसा ॥ रतिकलहे । हरे बहु-वल्लह ॥

**ओ सूचना-पश्चात्तापे ॥ २०३ ॥**

ओ इति सूचनापश्चात्तापयोः प्रयोक्तव्यम् ॥ सूचनायाम् । ओ अविणय-तत्तिल्ले ॥ पश्चात्तापे । ओ न मए छाया इत्तिआए ॥ विकल्पे तु उतादेशेनैवोकारेण सिद्धम् ॥ ओ विरएमि नहयले ॥

**अव्वो सूचना-दुःख-संभाषणापराध-विस्मयानन्दादर-भय-खेद-विषाद-पश्चात्तापे ॥ २०४ ॥**

अव्वो इति सूचनादिषु प्रयोक्तव्यम् ॥ सूचनायाम् । अव्वो दुक्करयारय ॥ दुःखे । अव्वो दलन्ति हिययं ॥ संभाषणे । अव्वो किमिणं किमिणं ॥ अपराधविस्मययोः ।

> अव्वो हरन्ति हिअयं तह वि न वेसा हवन्ति जुवईण ।
> अव्वो किं पि रहस्सं मुणन्ति धुत्ता जणब्भहिआ ॥ १ ॥

आनन्दादरभयेषु ।

> अव्वो सुपहायमिणं अव्वो अज्जम्ह सप्फलं जीअं ।
> अव्वो अइअम्मि तुमे नवरं जइ सा न जूरिहिई ॥ २ ॥

---

१ A थू कु°. २ B सिरिआ. ३ A °वम्म. ४ A °यनित्ति°. ५ B °शेन ओकारेणैव सि°. ६ P हिअयं अव्वो किं पि. ७ A मुणति. ८ A सफल. ९ A सो. १० A °हइ.

खेदे । अव्वो न जामि छेत्तं[1] ॥ विषादे[2] ।

> अव्वो नासेन्ति दिहिं पुलयं वड्ढेन्ति देन्ति रणरणयं ।
> एण्हि तस्सेअ गुणा ते चिअ अव्वो कह णु एअं ॥ ३ ॥

पश्चात्तापे ।

> अव्वो तह तेण कया अहयं जह कस्स साहेमि ॥

**अइ संभावने ॥ २०५ ॥**

संभावने अइ इति प्रयोक्तव्यम्[3] ॥ अइ दिअर किं न[4] पेच्छसि ॥

**वणे निश्चय-विकल्पानुकम्प्ये च ॥ २०६ ॥**

वणे इति निश्चयादौ संभावने च प्रयोक्तव्यम् ॥ वणे देमि । निश्चयं ददामि ॥ विकल्पे । होइ वणे न होइ । भवति वा न भवति ॥ अनुकम्प्ये । दासो वणे न मुच्चइ । दासोनुकम्प्यो[5] न त्यज्यते ॥ संभावने । नत्थि वणे जं न[6] देइ विहि-परिणामो । संभाव्यते एतदित्यर्थः ॥

**मणे विमर्शे ॥ २०७ ॥**

मणे इति विमर्शे प्रयोक्तव्यम् ॥ मणे सूरो । किं स्वित्सूर्यः ॥ अन्ये मन्ये इत्यर्थमपीच्छन्ति ॥

**अम्मो आश्चर्ये ॥ २०८ ॥**

अम्मो इत्याश्चर्ये प्रयोक्तव्यम् ॥ अम्मो कह पारिज्जइ ॥

**स्वयमोर्थे अप्पणो न वा ॥ २०९ ॥**

स्वयमित्यस्यार्थे अप्पणो वा प्रयोक्तव्यम् ॥ विसयं विअसन्ति अप्पणो कमल-सरा । पक्षे । सयं चेअ[7] मुणसि करणिज्जं ॥

**प्रत्येकमः पाडिक्कं पाडिएक्कं ॥ २१० ॥**

प्रत्येकमित्यस्यार्थे पाडिक्कं पाडिएक्कं[8] इति च प्रयोक्तव्यं वा । पाडिक्कं । पाडिएक्कं । पक्षे । पत्तेअं ॥

---

१ P छित्तं; A विगत्त. २ AP °दे । अव्वो कह णु (P कद नु) एअं ३ A °योक्तव्य. ४ A नपे°. ५ A°म्प्यो यो न. ६ AB जम ७ B चेव मुणसि ८ A °ति प्र°.

उअ पश्य[1] ॥ २११ ॥

उअ इति पश्येत्यस्यार्थे प्रयोक्तव्यं वा ॥

> उअ निच्चल-निप्फंदा[2] भिसिणी-पत्तंमि रेहइ बलाआ ।
> निम्मल-मरगय-भायण-परिट्ठिआ सङ्ख-सुत्ति व्व ॥

पक्षे पुलआदयः ॥

इहरा इतरथा ॥ २१२ ॥

इहरा इति इतरथार्थे प्रयोक्तव्यं वा ॥ इहरा नीसामन्नेहिं[3] । पक्षे । इअरहा ॥

एक्कसरिअं झगिति संप्रति ॥ २१३ ॥

एक्कसरिअं झगित्यर्थे संप्रत्यर्थे च प्रयोक्तव्यम् ॥ एक्कसरिअं । झगिति सांप्रतं वा ॥

मोरउल्ला मुधा ॥ २१४ ॥

मोरउल्ला इति मुधार्थे प्रयोक्तव्यम् ॥ मोरउल्ला । मुधेत्यर्थः ॥

दराधाल्पे ॥ २१५ ॥

दर इत्यव्ययमर्धार्थे ईषदर्थे च प्रयोक्तव्यम् ॥ दर-विअसिअं अर्धेनेषद्वा विकसितमित्यर्थः ॥

किणो प्रश्ने ॥ २१६ ॥

किणो इति प्रश्ने प्रयोक्तव्यम् ॥ किणो धुवसि ॥

ई-जे-राः[4] पादपूरणे ॥ २१७ ॥

ई[5] जे र इत्येते पादपूरणे प्रयोक्तव्याः ॥ न उणा ई[6] अच्छीइं[7] । अणुकूलं वोत्तुं[8] जे[9] । गेण्हइ र कलम-गोवी[10] ॥ अहो । हंहो । [11]हेहो । हा ।

---

१ B पद्ये. २ AP निष्फंदा । पक्षे. ३ B नीसामन्नेहिं. ४ B ईजेदराः. ५ B ई जे इर; A इजेरा. ६ B ई. ७ A इच्छीइ. ८ B °ई. ९ A वोनुं. १० B °मागोवि. ११ B हे । हाहा । ना°.

॥ अर्हं ॥

वीप्स्यात्स्यादेर्वीप्स्ये स्वरे मो वा ॥ १ ॥

वीप्सार्थात्पदात्परस्य स्यादेः स्थाने स्वरादौ वीप्सार्थे पदे परे मो वा भवति ॥ एकैकम् । एकमेकं । एक्कमेक्केण । अङ्गे अङ्गे । अङ्गमङ्गम्मि । पक्षे । एक्केक्कमित्यादि ॥

अतः सेर्डोः ॥ २ ॥

अकारान्तान्नाम्नः परस्य स्यादेः सेः स्थाने डो भवति ॥ वच्छो ॥

वैतत्तदः ॥ ३ ॥

एतत्तदोकारात्परस्य स्यादेः सेर्डो वा भवति ॥ एसो एस । सो णरो । स णरो ॥

जस्-शसोर्लुक् ॥ ४ ॥

अकारान्तान्नाम्नः परयोः स्यादिसंबन्धिनोर्जस्-शसोर्लुग् भवति ॥ वच्छा एए । वच्छे पेच्छ ॥

अमोस्य ॥ ५ ॥

अतः परस्यामोकारस्य लुग् भवति ॥ वच्छं पेच्छ ॥

टा-आमोर्णः ॥ ६ ॥

अतः परस्य टा इत्येतस्य षष्ठीबहुवचनस्य च आमो णो भवति ॥ वच्छेण । वच्छाण ॥

भिसो हि हिँ हिं ॥ ७ ॥

अतः परस्य भिसः स्थाने केवलः सानुनासिकः सानुस्वारश्च हिर्भवति ॥ वच्छेहि । वच्छेहिँ । वच्छेहिं कया छाही ॥

---

१ B वीप्सात्स्या°. २ A वीप्स्यार्थां°. ३ A वीप्स्यार्थे°. ४ B एगमेकं. ५ A °र्डो.

नाम । अहह । [1]ही सि । अयि । अहोह । [2]अरि रि [3]हो इत्यादयस्तु संस्कृतसमत्वेन सिद्धा ॥

**प्यादयः ॥ २१८ ॥**

प्यादयो नियतार्थवृत्तय प्राकृते प्रयोक्तव्या ॥ पि वि अप्यर्थे ॥

## इत्याचार्यश्रीहेमचन्द्रसूरिविरचिताया सिध्दहेमचन्द्राभिधान स्वोपज्ञशब्दानुशासनवृत्तौ अष्टमस्याध्यायस्य द्वितीयः पादः ॥

[4]द्विषत्पुरक्षोदविनोदहेतोर्भवादवामस्य भवद्भुजस्य ।
अय विशेषो भुवनैकवीर परं न यत्काममपाकरोति[5] ॥ १ ॥

---

१ P ही । सि । मी २ A अहोह ३ P अरे । रि । हो ४ P omits this verse ५ B करोति

|| अर्हं ||

वीप्स्यात्स्यादेर्वीप्स्ये स्वरे मो वा || १ ||

वीप्सार्थात्पदात्परस्य स्यादेः स्थाने स्वरादौ वीप्सार्थे पदे परे मो वा भवति || एकैकम् । एक्कमेक्क । एक्कमेक्केण । अङ्गे अङ्गे । अङ्गमङ्गम्मि । पक्षे । एक्केक्कमित्यादि ||

अतः सेर्डोः || २ ||

अकारान्तान्नाम्नः परस्य स्यादेः सेः स्थाने डो भवति || वच्छो ||

वैतत्तदः || ३ ||

एतत्तदोकारात्परस्य स्यादेः सेर्डो वा भवति || एसो एस । सो णरो । स णरो ||

जस्-शसोर्लुक् || ४ ||

अकारान्तान्नाम्नः परयोः स्यादिसम्बन्धिनोर्जस्-शसोर्लुग् भवति || वच्छा एए । वच्छे पेच्छ ||

अमोस्य || ५ ||

अतः परस्यामोकारस्य लुग् भवति || वच्छं पेच्छ ||

टा-आमोर्णः || ६ ||

अत परस्य टा इत्येतस्य षष्ठीबहुवचनस्य च आमो णो भवति || वच्छेण । वच्छाण ||

भिसो हि हिँ हिं || ७ ||

अत परस्य भिस स्थाने केवल सानुनासिक सानुस्वारश्च हिर्भवति || वच्छेहि । वच्छेहिँ । वच्छेहिं कया छाही ||

---

१ B °र्वीप्स्या° २ A °र्वीप्स्यादा° ३ A °र्वीप्स्यार्थे°, ४ B एक्कैक ५ A °द्ः।

डसेस् त्तो-दो दु-हि-हिन्तो लुकः ॥ ८ ॥

अत परस्य डसे त्तो दो दु हि हिन्तो लुक् इत्येते षडादेशा भवन्ति ॥ वच्छत्तो । वच्छाओ । वच्छाउ । वच्छाहि । वच्छाहिन्तो । वच्छा ॥ दकारकरण भाषान्तरार्थम् ॥

भ्यसस् त्तो दो दु हि हिन्तो सुन्तो ॥ ९ ॥

अत परस्य भ्यस स्थाने त्तो दो दु हि हिन्तो सुन्तो इत्यादेशा भवन्ति ॥ वृक्षेभ्य । वच्छत्तो । वच्छाओ । वच्छाउ । वच्छाहि । वच्छेहि । वच्छाहिन्तो । वच्छेहिन्तो । वच्छासुन्तो । वच्छेसुन्तो ॥

ङसः स्सः ॥ १० ॥

अत परस्य ङस सयुक्त सो भवति ॥ पियस्स । पेम्मस्स । उपकुम्भ शैत्यम् । उवकुम्भस्स सीअलत्तण ॥

डे म्मि डेः ॥ ११ ॥

अत परस्य डेर्डित् एकार सयुक्तो मिश्च भवति ॥ वच्छे । वच्छम्मि ॥ देवम् । देवम्मि । तम् । तम्मि । अत्र द्वितीयातृतीययो सप्तमी [ ३ १३५ ] इत्यमो डि ॥

जस्-शस्-ङसि-त्तो-दो-द्वामि दीर्घः ॥ १२ ॥

एषु अतो दीर्घो भवति ॥ जसि शसि च । वच्छा ॥ ङसि । वच्छाओ । वच्छाउ । वच्छाहि । वच्छाहिन्तो । वच्छा ॥ त्तोदोदुषु । वृक्षेभ्य । वच्छत्तो । ह्रस्व सयोगे [ १ ४ ] इति ह्रस्व ॥ वच्छाओ । वच्छाउ ॥ आमि । वच्छाण ॥ ङसिनैव सिद्धे त्तोदोदुग्रहण भ्यसि एत्वबाधनार्थम् ॥

भ्यसि वा ॥ १३ ॥

भ्यसादेशे परे अतो दीर्घो वा भवति ॥ वच्छाहिन्तो वच्छेहिन्तो । वच्छासुन्तो वच्छेसुन्तो । वच्छाहि वच्छेहि ।

---

१ B लुक् २ A °क् एते ते ष° ३ A °हि । वच्छेहि । ष° ४ B स्सो °कुम्भे°

टाण-शस्येत् ॥ १४ ॥

टादेशे णे शसि च परे अस्य एकारो भवति ॥ टाण । वच्छेण ॥ णेति[1] किम् । अप्पणा । अप्पणिआ । अप्पणइआ । शस् । वच्छे पेच्छ ॥

भिस्भ्यस्सुपि ॥ १५ ॥

एषु अत एर्भवति ॥ भिस् । वच्छेहि[3] । वच्छेहिँ । वच्छेहिं ॥ भ्यस् । वच्छेहि । वच्छेहिन्तो । वच्छेसुन्तो ॥ सुप् । वच्छेसु ॥

इदुतो दीर्घः ॥ १६ ॥

इकारस्य उकारस्य च भिस्भ्यस्सुप्सु परेषु दीर्घो भवति ॥ भिस् । गिरीहिं । बुद्धीहिं । दहीहिं । तरूहिं । धेणूहिं । महूहिं कयं ॥ भ्यस् । गिरीओ । बुद्धीओ । दहीओ । तरूओ । धेणूओ । महूओ आगओ ॥ एवं गिरीहिन्तो । गिरीसुन्तो आगओ इत्याद्यपि ॥ सुप् । गिरीसु । बुद्धीसु । दहीसु । तरूसु । धेणूसु । महूसु ठिअं ॥ क्वचिन्न भवति । दिअ-भूमिसु दाण-जँलोल्लिआइं ॥ इदुत इति किम् । वच्छेहिं । वच्छेसुन्तो । वच्छेसु ॥ भिस्भ्यस्सुपीत्येव । गिरिं तरुं पेच्छ ॥

चतुरो वा ॥ १७ ॥

चतुर उदन्तस्य भिस्भ्यस्सुप्सु परेषु दीर्घो वा भवति ॥ चऊहि चउहि । चऊओ चउओ । चऊसु चउसु ॥

लुप्ते शसि ॥ १८ ॥

इदुतोः शसि लुप्ते दीर्घो भवति ॥ गिरी । बुद्धी । तरू । धेणू पेच्छ ॥ लुप्त इति किम् । गिरिणो । तरुणो पेच्छ ॥ इदुत इत्येव । वच्छे पेच्छ ॥ जस्-शस्[9] [३.१२] इत्यादिना शसि दीर्घस्य लक्ष्यानुरोधार्थो योगः । लुप्त इति तु णावि प्रतिप्रसवार्थशङ्कानिवृत्त्यर्थम् ॥

---

१ B णे इति २ B एद्भ°. ३ A °हि । वच्छेहि ४ B °तोदी°. ५ A °भ्य भि°. ६ B जलेति°. ७ B इदुउ किं. ८ B चतुरस्य उ°. ९ B °हि. १० PB °र्थोऽयं यो°.

अक्लीबे सौ ॥ १९ ॥

इदुतोऽक्लीबे नपुंसकादन्यत्र सौ दीर्घो भवति ॥ गिरी । बुद्धी । तरू । धेणू ॥ अक्लीब इति किम् । दहिं । महुं ॥ साविति किम् । गिरिं । बुद्धिं । तरुं । धेणुं ॥ केचित्तु दीर्घत्वं विकल्प्य तदभावपक्षे से-र्मादेशमपीच्छन्ति । अग्गि । निहिं[1] । वाउं । विहुं ॥

पुंसि जसो डउ डओ वा ॥ २० ॥

इदुत इतीह पञ्चम्यन्तं संबध्यते । इदुतः परस्य जसः पुंसि अउ अओ इत्यादेशौ डितौ वा भवतः ॥ अग्गउ अग्गओ । वायउ वायओ चिट्ठन्ति । पक्षे । अग्गिणो । वाउणो ॥ शेषे अदन्तवद्भावाद् अग्गी । वाऊ ॥ पुंसीति किम् । बुद्धीओ । धेणूओ । दहीइं । महूइं ॥ जस इति किम् । अग्गी । अग्गिणो । वाऊ । वाउणो पेच्छइ ॥ इदुत इत्येव । वच्छा ॥

वोतो डवो ॥ २१ ॥

उदन्तात्परस्य जसः पुंसि डित् अवो इत्यादेशो वा भवति ॥ साहवो । पक्षे । साहओ । साहउ । साहू । साहुणो ॥ उत इति किम् । वच्छा ॥ पुंसीत्येव । धेणू । महूइं ॥ जस इत्येव । साहू । साहुणो पेच्छ ॥

जस्-शसोर्णो वा ॥ २२ ॥

इदुतः परयोर्जस्-शसोः पुंसि णो इत्यादेशो वा भवति ॥ गिरिणो । तरुणो रेहन्ति पेच्छ वा । पक्षे । गिरी । तरू ॥ पुंसीत्येव । दहीइं । महूइं ॥ जस्-शसोरिति किम् । गिरिं । तरुं ॥ इदुत इत्येव । वच्छा । वच्छे ॥ जस्-शसोरिति द्वित्वमिदुत इत्यनेन यथासंख्याभावार्थम् । एवमुत्तरसूत्रेऽपि ॥

---

१ A नहिं. २ P बुद्धीउ. ३ P धेणुउ.

### ङसि-ङसोः पुं-क्लीबे वा ॥ २३ ॥

पुंसि क्लीबे च वर्तमानादिदुतः[1] परयोर्ङसिङसोर्णो वा भवति ॥ गिरिणो । तरुणो । दहिणो । महुणो आगओ विआरो वा । पक्षे । ङसेः । गिरीओ । गिरीउ । [2]गिरीहिन्तो । तरूओ । तरूउ । तरू[3]-हिन्तो ॥ हिलुकौ निषेत्स्येते ॥ ङसः । गिरिस्स । तरुस्स ॥ ङसि-ङसोरिति किम् । गिरिणा । तरुणा कयं ॥ पुंक्लीब इति किम् । बुद्धीअ । धेणूअ लद्धं समिद्धी वा ॥ इदुत इत्येव । कमलाओ । कमलस्स ॥

### टो णा ॥ २४ ॥

पुंक्लीबे वर्तमानादिदुतः परस्य टा इत्यस्य णा भवति[4] ॥ गिरिणा । गामणिणा । खलपुणा । तरुणा । दहिणा । महुणा ॥ ट[5] इति किम् । गिरी । तरू । दहिं । महुं ॥ पुंक्लीब इत्येव । बुद्धीअ । धेणूअ कयं ॥ इदुत इत्येव । कमलेण ॥

### क्लीबे स्वरान्म् सेः ॥ २५ ॥

क्लीबे वर्तमानात्स्वरान्तान्नाम्नः सेः स्थाने म् भवति ॥ वणं[6] । पेम्मं । दहिं । महुं ॥ दहि महु इति तु सिद्धापेक्षया ॥ केचिदनुनासिक-मपीच्छन्ति । दहिँ । महुँ ॥ क्लीब इति किम् । बालो । बाला । स्वरा-दिति इदुतो निवृत्त्यर्थम्[7] ॥

### जस्-शस इँ-इं-णयः सप्राग्दीर्घाः ॥ २६ ॥

क्लीबे वर्तमानान्नाम्नः परयोर्जस्-शसोः स्थाने सानुनासिकसानुस्वारा-विकारौ[8] णिश्चादेशा भवन्ति सप्राग्दीर्घाः । एषु सत्सु पूर्वस्वरस्य दीर्घत्वं विधीयते इत्यर्थः ॥ इँ । जाइँ वयणाइँ अम्हे ॥ इं । उम्मी-लन्ति पङ्कयाइं चिट्ठन्ति पेच्छ वा । दहीइं हुन्ति जेम वा । महूइं मुञ्च

---

१ B °दिदुतोः. २ B गिरिहिन्तो. ३ AB तरुहिन्तो. ४ B °ति ॥ गाम°. ५ B टा. ६ P तणं. ७ B °तोर्नि°. ८ AB °वम.

अक्लीबे सौ ॥ १९ ॥

इदुतोऽक्लीबे नपुंसकादन्यत्र सौ दीर्घो भवति ॥ गिरी । बुद्धी । तरू । धेणू ॥ अक्लीब इति किम् । दहिं । महुं ॥ साविति किम् । गिरिं । बुद्धिं । तरं । धेणुं ॥ केचित्तु दीर्घत्वं विकल्प्य तदभावपक्षे से-र्मादेशमपीच्छन्ति । अग्गि । निहि[1] । वाउ । विहुं ॥

पुंसि जसो डउ डओ वा ॥ २० ॥

इदुत इतीह पञ्चम्यन्त सम्बध्यते । इदुत परस्य जस पुंसि अउ अओ इत्यादेशौ डितौ वा भवत ॥ अग्गउ अग्गओ । वायउ वायओ चिट्ठन्ति । पक्षे । अग्गिणो । वाउणो ॥ शेषे अदन्तवद्भावाद् अग्गी । वाऊ ॥ पुंसीति किम् । बुद्धीओ । धेणूओ । दहीइं । महूइं ॥ जस इति किम् । अग्गी । अग्गिणो । वाऊ । वाउणो पेच्छइ ॥ इदुत इत्येव । वच्छा ॥

वोतो डवो ॥ २१ ॥

उदन्तात्परस्य जस पुंसि डित् अवो इत्यादेशो वा भवति ॥ साहवो । पक्षे । साहओ । साहउ । साहू । साहुणो ॥ उत इति किम् । वच्छा ॥ पुंसीत्येव । धेणू । महूइं ॥ जस इत्येव । साहू । साहुणो पेच्छ ॥

जस्-शसोर्णो वा ॥ २२ ॥

इदुत परयोर्जस्-शसो पुंसि णो इत्यादेशो वा भवति ॥ गिरिणो । तरुणो रेहन्ति पेच्छ वा । पक्षे । गिरी । तरू ॥ पुंसीत्येव । दहीइं । महूइं ॥ जस्-शसोरिति किम् । गिरिं । तरुं ॥ इदुत इत्येव । वच्छा । वच्छे ॥ जस्-शसोरिति द्वित्वमिदुत इत्यनेन यथासंख्याभावार्थम् । एवमुत्तरसूत्रेपि ॥

---

[1] A नहि [2] P बुद्धीउ. [3] P धेणूउ

## ङसि-ङसोः पुं-क्लीबे वा ॥ २३ ॥

पुंसि क्लीबे च वर्तमानादिदुतः परयोर्ङसिङसोर्णो वा भवति ॥ गिरिणो । तरुणो । दहिणो । महुणो आगओ विआरो वा । पक्षे । ङसेः । गिरीओ । गिरीउ । [2]गिरीहिन्तो । तरूओ । तरूउ । तरू-[3]हिन्तो ॥ हिलुकौ निषेत्स्येते ॥ ङसः । गिरिस्स । तरुस्स ॥ ङसि-ङसोरिति किम् । गिरिणा । तरुणा कयं ॥ पुंक्लीब इति किम् । बुद्धीअ । धेणूअ लद्धं समिद्धी वा ॥ इदुत इत्येव । कमलाओ । कमलस्स ॥

## टो णा ॥ २४ ॥

पुंक्लीबे वर्तमानादिदुतः परस्य टा इत्यस्य णा भवति[4]॥ गिरिणा । गामणिणा । खलपुणा । तरुणा । दहिणा । महुणा ॥ टः इति किम् । गिरी । तरू । दहिं । महुं ॥ पुंक्लीब इत्येव । बुद्धीअ । धेणूअ कयं ॥ इदुत इत्येव । कमलेण ॥

## क्लीबे स्वरान्म् सेः ॥ २५ ॥

क्लीबे वर्तमानात्स्वरान्तान्नाम्नः सेः स्थाने म् भवति ॥ वणं । पेम्मं । दहिं । महुं ॥ दहि महु इति तु सिद्धापेक्षया ॥ केचिदनुनासिक-मपीच्छन्ति । दहिँ । महुँ ॥ क्लीब इति किम् । बालो । बाला । स्वरा-दिति इदुतो निवृत्त्यर्थम् ॥

## जस्-शस इँ-इं-णयः सप्राग्दीर्घाः ॥ २६ ॥

क्लीबे वर्तमानान्नाम्नः परयोर्जस्-शसोः स्थाने सानुनासिकसानुस्वारा-विकारौ णिश्चादेशा भवन्ति सप्राग्दीर्घाः । एषु सत्सु पूर्वस्वरस्य दीर्घत्वं विधीयते इत्यर्थः ॥ इँ । जाइँ वयणाइँ अम्हे ॥ इं । उम्मी-लन्ति पङ्कयाइं चिट्ठन्ति पेच्छ वा । दहीइं हुन्ति जेम वा । महूइं मुञ्च

---

१ B °दिदुतो.. २ B गिरिहिन्तो. ३ AB तरुहिन्तो. ४ B °ति ॥ गाम°. ५ B टा. ६ P तत्र. ७ B °तोर्नि°. ८ AB °शस्.

वा ॥ णि । फुल्लन्ति पङ्कयाणि गेण्ह वा । हुन्ति दहीणि जेम वा । एच महूणि ॥ क्लीब इत्येव । वच्छा । वच्छे ॥ जस् शस इति किम् । सुहं ॥

## स्त्रियामुदोतौ वा ॥ २७ ॥

स्त्रिया वर्तमानान्नाम्न परयोर्जस्-शसो स्थाने प्रत्येकम् उत् ओत् इत्येतौ सप्राग्दीर्घा वा भवत ॥ वचनभेदो यथासंख्यनिवृत्त्यर्थ ॥ मालाउ मालाओ । बुद्धीउ बुद्धीओ । सहीउ सहीओ । धेणूउ धेणूओ । वहूउ वहूओ । पक्षे । माला । बुद्धी । सही । धेणू । वहू ॥ स्त्रियामिति किम् । वच्छा । जस्-शस इत्येव । मालाए कय ॥

## ईतः सेश्चा वा ॥ २८ ॥

स्त्रिया वर्तमानादीकारान्तात् सेर्जस्-शसोश्च स्थाने आकारो वा भवति ॥ एसा हसन्तीआ । गोरीआ चिट्ठन्ति[2] पेच्छ वा । पक्षे । हसन्ती[3] । गोरीओ ॥

## टा-ङस्-ङेरदादिदेद्वा तु ङसेः ॥ २९ ॥

स्त्रिया वर्तमानानाम्न परेषां टाङस्ङीनां स्थाने प्रत्येकम् अत् आत् इत् एत् इत्येते चत्वार आदेशा सप्राग्दीर्घा भवन्ति । ङसे पुनरेते सप्राग्दीर्घा[4] वा भवन्ति ॥ मुद्धाअ । मुद्धाइ । मुद्धाए कय मुहं[5] ठिअं वा ॥ कप्रत्यये तु मुद्धिआअ । मुद्धिआइ । मुद्धिआए ॥ कमलिआअ । कमलिआइ । कमलिआए[6] ॥ बुद्धीअ । बुद्धीआ । बुद्धीइ । बुद्धीए कयं विहवो ठिअं वा ॥ सहीअ । सहीआ । सहीइ । सहीए कयं वयणं ठिअं वा ॥ धेणूअ । धेणूआ । धेणूइ । धेणूए कय दुद्धं ठिअं वा ॥ वहूअ । वहूआ । वहूइ । वहूए कय भवण ठिअं वा ॥ ङसेस्तु वा । मुद्धाअ । मुद्धाइ । मुद्धाए । बुद्धीअ । बुद्धीआ । बुद्धीइ । बुद्धीए ॥ सहीअ । सहीआ । सहीइ । सहीए ॥ धेणूअ । धेणूआ ।

---

१ B उत् ओत् इ°. २ B चिट्ठन्ति ३ B हसंतीओ ४ B °र्घा भ°. ५ P मुहं ६ PB °ए । बु°.

धेणूइ । धेणूए ॥ वहूअ । वहूआ । वहूइ । वहूए आगओ । पक्षे ॥ मुद्धाओ । मुद्धाउ । मुद्धाहिन्तो ॥ रईओ । रईउ । रईहिन्तो ॥ धेणूओ । धेणूउ । धेणूहिन्तो । इत्यादि ॥ शेषेदन्तवत् [३.१२४] अतिदेशात् जस्-शस्-ङसि-त्तो-दो द्वामि दीर्घः [ ३ १२ ] इति दीर्घत्वं पक्षेपि[1] भवति ॥ स्त्रियामित्येव । वच्छेण । वच्छस्स । वच्छम्मि । वच्छाओ ॥ टादीनामिति किम् । मुद्धा । बुद्धी । सही । धेणू । वहू ॥

## नात आत् ॥ ३० ॥

स्त्रियां वर्तमानादादन्तान्नाम्नः परेषां टाङस्ङिङसीनामादादेशो न भवति ॥ मालाअ । मालाइ । मालाए कयं सुहं ठिअं आगओ वा ॥

## प्रत्यये ङीर्न वा ॥ ३१ ॥

अणादिसूत्रेण [ है० २.४ ] प्रत्ययनिमित्तो यो ङीरुक्तः स स्त्रियां वर्तमानान्नाम्नो वा भवति ॥ साहणी । कुरुचरी । पक्षे । आत् [है० २.४] इत्याप् । साहणा । कुरुचरा ॥

## अजातेः पुंसः ॥ ३२ ॥

अजातिवाचिनः पुल्लिङ्गाद् स्त्रियां वर्तमानात् ङीर्वा भवति ॥ नीली नीला । काली काला । हसमाणी हसमाणा । सुप्पणही सुप्पणहा । इमीए इमाए । इमीणं इमाणं । एईए एआए । एईणं एआणं ॥ अजातेरिति किम् । करिणी । अया । एलया ॥ अप्राप्ते विभाषेयम् । तेन गोरी कुमारी इत्यादौ संस्कृतवन्नित्यमेव ङीः ॥

## किं-यत्तदोस्यमामि ॥ ३३ ॥

सिअम्आम्वर्जिते स्यादौ परे एभ्यः स्त्रियां ङीर्वा भवति ॥ कीओ । काओ । कीए । काए । कीसु । कासु । एवं । जीओ । जाओ । तीओ । ताओ । इत्यादि ॥ अस्यमामीति किम् । का । जा । सा । कं । जं । तं । काण । जाण । ताण ॥

---

१ B °क्षे भ°. २ A इमाग । अजा°. ३ B °प्राप्तेवि°. ४ B डी. ५ B °मिसि ॥३३॥ अम्°. ६ P °ङ. ७ B ता.

छाया-हरिद्रयोः ॥ ३४ ॥

अनयोराप्प्रसङ्गे नाम्नि स्त्रियां ङीर्वा भवति ॥ छाही छाया । हलद्दी हलद्दा ॥

स्वस्रादेर्डा ॥ ३५ ॥

स्वस्रादेः स्त्रियां वर्तमानात् डा प्रत्ययो भवति ॥ ससा । नणन्दा । दुहिआ । दुहिआहिं । दुहिआसु । दुहिआ-सुओ । गउआ ॥

ह्रस्वोमि ॥ ३६ ॥

स्त्रीलिङ्गस्य नाम्नोमि परे ह्रस्वो भवति ॥ माल । नइ । वहु । हसमाणि । हसमाण पेच्छ ॥ अमीति किम् । माला । सही । वहू ॥

नामन्त्र्यात्सौ मः ॥ ३७ ॥

आमन्त्र्यार्थात्परे सौ सति क्लीबे स्वरान्म् से [३ २५] इति यो म उक्तः स न भवति ॥ हे तण । हे दहि । हे महु

डो दीर्घो वा ॥ ३८ ॥

आमन्त्र्यार्थात्परे सौ सति अतः सेर्डो [३ २] इति यो नित्यं डो प्राप्तो यश्च अक्लीबे सौ [३ १९] इति इदुतोरकारान्तस्य च प्राप्तो दीर्घः स वा भवति ॥ हे देव हे देवो ॥ हे खमा-समण हे खमा-समणो । हे अज्ज हे अज्जो ॥ दीर्घ । हे हरी हे हरि । हे गुरू हे गुरु । जाइ विसुद्धेण पहू । हे प्रभो इत्यर्थः । एवं दोण्णि पहू जिअ लोए । पक्षे । हे पहु । एषु प्राप्ते विकल्पः ॥ इह त्वप्राप्ते हे गोअमा हे गोअम । हे कासवा हे कासव । रेरे चप्फलया । रेरे निग्घिणया ॥

ऋतोद्वा ॥ ३९ ॥

ऋकारान्तस्यामन्त्रणे सौ परे अकारोन्तादेशो वा भवति ॥ हे पिअ । हे पिअ ॥ हे दाय । हे दाय । पक्षे । हे पिअरं । हे दायार ॥

१ B छाया २ A ना ३ B °दा । दुहि-ताहि ४ A °दीर्घ ५ B क्षम श्रमण ६ B °ल्प ७ B ए ८ A जाप्ता° ९ B दोणि १० B जीअ°. ११ B चप्पल १२ B दाराओ° १३ B दाभर

## नाम्न्यरं वा ॥ ४० ॥

ऋदन्तस्यामन्त्रणे सौ परे नाम्नि संज्ञायां विषये अरं इति अन्तादेशो वा भवति[1] ॥ हे पितः । हे पिअरं । पक्षे । हे पिअ ॥ नाम्नीति किम् । हे कंर्तः । हे कैत्तार ॥

## वाप ए ॥ ४१ ॥

आमन्त्रणे सौ परे आप एत्वं वा भवति ॥ हे माले । हे महिले[3] । अज्जिए । पज्जिए । पक्षे । हे माला । इत्यादि ॥ आप इति किम् । हे पिउच्छा । हे माउच्छा ॥ बहुलाधिकारात् कचिदोत्वमपि । अम्मो भणामि भणिए ॥

## ईदूतोर्ह्रस्वः ॥ ४२ ॥

आमन्त्रणे सौ परे ईदूदन्तयोर्ह्रस्वो भवति ॥ हे नइ । हे गामणि[5] । हे समणि । हे वहु । हे खलपु ॥

## क्विपः ॥ ४३ ॥

क्विबन्तस्येदूदन्तस्य ह्रस्वो भवति ॥ गामणिणा । खलपुणा । गामणिणो । ग्लपुणो ॥

## ऋतामुदस्यमौसु वा ॥ ४४ ॥

सिअम्औवर्जिते अर्थात् स्यादौ परे ऋदन्तानामुदन्तादेशो वा भवति ॥ जस् । भत्तू । भत्तुणो । भत्तउ । भत्तओ । पक्षे । भत्तारा ॥ शस् । भत्तू । भत्तुणो । पक्षे भत्तारे ॥ टा । भत्तुणा । पक्षे । भत्तारेण ॥ भिस् । भत्तूहिं । पक्षे । भत्तारेहिं ॥ ङसि । भत्तुणो । भत्तूओ । भत्तूउं । भत्तूहि । भत्तूहिन्तो । पक्षे । भत्तारीओ[11] । भत्ताराउ । भत्ताराहि ।

---

१ P °ति । हे पिअर. २ B हे र्तार. ३ B °ले । आर्यिका । अ°. ४ A °त्वमिति. ५ A °णि । हे वहु. ६ B क्विप् ७ P °णो । गामणिसुओ । खलपुसुह ॥ ऋ°, B °णो । गामणिसुओ ग्वलपुसुओ ॥ ऋ°. ८ P °ते स्या° ९ B भत्तारो. १० B °उ । भत्तूहिन्तो. ११ A °ओ । भत्ताराहि.

मत्ताराहिन्तो । भत्तारा । ङस् । भत्तुणो । भत्तुस्स । पक्षे । भत्तारस्स । सुप् । भत्तूसु । पक्षे । भत्तारेसु ॥ बहुवचनस्य व्याप्त्यर्थत्वात् यथादर्शनं नाम्न्यपि उद् वा भवति जस्शस्ङसिङस्सु । पिउणो । जामाउणो । भाउणो ॥ टायाम् । पिउणा ॥ भिसि । पिऊहिं ॥ सुपि । पिऊसु । पक्षे । पिअरा । इत्यादि ॥ अस्यमौस्विति किम् । सि । पिआ ॥ अम् । पिअरं ॥ औ । पिअरा ॥

आरः स्यादौ ॥ ४५ ॥

स्यादौ परे ऋत आर इत्यादेशो भवति ॥ भत्तारो । भत्तारा । भत्तारं । भत्तारे । भत्तारेण । भत्तारेहिं ॥ एवं ङस्यादिपूदाहार्यम् ॥ लुप्तस्याद्यपेक्षया । भत्तार-विहिअं ॥

आ अरा मातुः ॥ ४६ ॥

मातृसंबन्धिन ऋत स्यादौ परे आ अरा इत्यादेशौ भवत. ॥ माआ । माअरा । माआउ । माआओ । माअराउ । माअराओ । माअं । माअरं इत्यादि ॥ बाहुलकाज्जनन्यर्थस्य आ देवतार्थस्य तु अरा इत्यादेश. । माआए कुच्छीए । नमो माअराण ॥ मातुरिद् वा [१.१३५] इतीत्वे माईण इति भवति ॥ ऋतामुद° [३.४४] इत्यादिना उत्वे तु माऊए समन्निअं वन्दे इति ॥ स्यादावित्येव । माइदेवो । माइ-गणो ॥

नाम्न्यरः ॥ ४७ ॥

ऋदन्तस्य नाम्नि संज्ञायां स्यादौ परे अर इत्यन्तादेशो भवति ॥ पिअरा । पिअरं । पिअरे । पिअरेण । पिअरेहिं । जामायरा । जामायरं । जामायरे । जामायरेण । जामायरेहिं । भायरा । भायरं । भायरे । भायरेण । भायरेहिं ॥

---

१ B °र ॥ भ्यस् । भत्तू । भत्तूआ । भत्तूहिन्तो । भत्तूसुन्तो । पक्षे । भत्ताराओ । भत्ताराउ । भत्ताराहि । भत्तारेहि । भत्ताराहिन्तो । भत्तारेहिन्तो । भत्तारासुन्तो । भत्तारेसुन्तो । २ B °स्स । आम् । भत्ताणं । भत्तूण । पक्षे । भत्ताराण । भत्ताराणं । ङि । भत्तुम्मि । पक्षे । भत्तारे । भत्तारम्मि ।. ३ B पिउसु. ४ B सि । पिआ. ५ P भत्तारेहि ६ A कुच्छीए. ७ माइगणो. ८ P पिअरेहि. ९ B °र । जामारेण.

## आ सौ न वा ॥ ४८ ॥

ऋदन्तस्य सौ परे आकारो वा भवति ॥ पिआ । जामाया । भाया । कत्ता । पक्षे । पिअरो । जामायरो । भायरो । कत्तारो ॥

## राज्ञः ॥ ४९ ॥

राज्ञो नलोपेन्त्यस्य आत्वं वा भवति सौ परे ॥ राया । हे राया । पक्षे । आणादेशे । रायाणो ॥ हे रायं । हे रायं इति तु शौरसेन्याम् । एवं हे अप्पं । हे अप्प ॥

## जस्-शस्-ङसि-ङसां णो ॥ ५० ॥

राजन्शब्दात्परेषामेषां णो इत्यादेशो वा भवति ॥ जस् । रायाणो चिट्ठन्ति । पक्षे । राया ॥ शस् । रायाणो पेच्छ । पक्षे । राया । राए ॥ ङसि । राइणो रण्णो आगओ । पक्षे । रायाओ । रायाउ । रायाहि । रायाहिन्तो । राया ॥ ङस् । राइणो रण्णो धणं । पक्षे । रायस्स ॥

## टो णा ॥ ५१ ॥

राजन्शब्दात्परस्य टा इत्यस्य णा इत्यादेशो वा भवति ॥ राइणा । रण्णा । पक्षे । राएण कयं ॥

## इर्जस्य णो-णा-ङौ ॥ ५२ ॥

राजन्शब्दसंबन्धिनो जकारस्य स्थाने णोणाङिषु परेषु इकारो वा भवति ॥ राइणो चिट्ठन्ति पेच्छ आगओ धणं वा ॥ राइणा कयं । राइम्मि । पक्षे । रायाणो । रण्णो । रायणो । राएण । रायम्मि ॥

## इणममामा ॥ ५३ ॥

राजन्शब्दसंबन्धिनो जकारस्य अमाम्भ्यां सहितस्य स्थाने इणम् इत्यादेशो वा भवति ॥ राइणं पेच्छ । राइणं धणं । पक्षे । रायं । राईणं ॥

---

१ A °पेंऽतस्य. २ B हे राअ. ३ A हे अप्प । जस्°. ४ A चेट्ठइ. ५ B °ओ गआउ. ६ B रण्णा राए°. ७ A °द्रस्य स°. ८ A चेट्ठनि. ९ P रण्णो । रण्णा । राएण. १० A °णा । रायम्मि.

## ईद्भिस्भ्यसाम्सुपि ॥ ५४ ॥

राजन्शब्दसंबन्धिनो जकारस्य भिसादिषु परतो वा ईकारो भवति ॥ भिस्। राईहि[1] ॥ भ्यस्। राईहि । राईहिन्तो । राईसुन्तो ॥ आम्। राईण ॥ सुप । राईसु । पक्षे । रायाणेहि । इत्यादि ॥

## आजस्य टा-ङसि-ङस्सु सणाणोष्वण् ॥ ५५ ॥

राजन्शब्दसंबन्धिन आज इत्यवयवस्य टाङसिङस्सु णा णो इत्यादेशापन्नेषु परेषु अण् वा भवति ॥ रण्णा राइणा कयं । रण्णो राईणो आगओ धणं वा ॥ टाङसिङस्स्विति किम् । रायाणो चिट्ठन्ति पेच्छ वा ॥ सणाणोष्विति किम् । राएण । रायाओ । रायस्स ॥

## पुंस्यन आणो राजवच्च ॥ ५६ ॥

पुंलिङ्गे वर्तमानस्यान्नन्तस्य स्थाने आण इत्यादेशो वा भवति । पक्षे । यथादर्शनं राजवत् कार्यं भवति ॥ आणादेशे च अतः सेर्डोः [ ३.२ ] इत्यादयः प्रवर्तन्ते । पक्षे तु राज्ञ॰ जस्-शस्-ङसि-ङसां णो [ ३.५० ] टो णा [ ३.२४ ] इणममामा [ ३.५३ ] इति प्रवर्तन्ते ॥ अप्पाणो । अप्पाणा । अप्पाणं । अप्पाणे । अप्पाणेण । अप्पाणेहि । अप्पाणाओ । अप्पाणासुन्तो । अप्पाणस्स । अप्पाणाण । अप्पाणम्मि । अप्पाणेसु । अप्पाण-कयं । पक्षे । राजवत् । अप्पा । अप्पो । हे अप्पा । हे अप्प । अप्पाणो चिट्ठन्ति । अप्पाणो पेच्छ ॥ अप्पणा । अप्पेहिं । अप्पाणो । अप्पाओ । अप्पाउ । अप्पाहि । अप्पाहिन्तो । अप्पा । अप्पासुन्तो ॥ अप्पणो धणं । अप्पाणं । अप्पे । अप्पेसु ॥ रायाणो । रायाणा । रायाणं । रायाणे । रायाणेण । रायाणेहिं । रायाणाहिन्तो । रायाणस्स । रायाणाणं । रायाणम्मि । रायाणेसु । पक्षे । राया । इत्यादि । एवं जुवाणो । जुवाण-जणो । जुआ ॥ बम्हाणो । बम्हा ॥ अद्धाणो ।

१ B राईहिं. २ B भ्यस । राईहिंतो. ३ B °णाणेष्व° ४ B राईणो ५ B °न चेष्ठि°. ६ A °णं । अप्पाणो । अप्पणो । अप्पाणेण. ७ B अप्पाणेहिं. ८ A °णा । अप्पाणो. ९ A चट्ठंति १० A °उ । अप्पेहि । अप्पा. ११ A धण । १२ धणं १३ A रायना. १३ A रायणाहिं. १४ A रायाणासु

अद्धा ॥ उक्षन् । उच्छाणो । उच्छा ॥ गावाणो । गावा ॥ पूसाणो । पूसा ॥ तक्खाणो । तक्खा ॥ मुद्धाणो । मुद्धा ॥ श्वन् । साणो । सा ॥ सुकर्मणः पश्य । सुकम्माणे पेच्छ । निएइ कह सो सुकम्माणे । पश्यति कथं स सुकर्मण इत्यर्थः ॥ पुंसीति किम् । शर्म । सम्मं ॥

## आत्मनष्टो णिआ णइआ ॥ ५७ ॥

आत्मनः परस्याष्टायाः स्थाने णिआ णइआ इत्यादेशौ वा भवतः । अप्पणिआ पाउसे उवगयम्मि । अप्पणिआ य विअड्डि खाणिआ । अप्पणइआ । पक्षे । अप्पाणेण ॥

## अतः सर्वादेर्डेर्जसः ॥ ५८ ॥

सर्वादेरदन्तात्परस्य जसः डित् ए इत्यादेशो भवति ॥ सव्वे । अन्ने । जे । ते । के । एक्के । कयरे । इयरे । एए ॥ अत इति किम् । सव्वाओ रिद्धीओ ॥ जस इति किम् । सव्वस्स ॥

## ङेः स्सि-म्मि-त्थाः ॥ ५९ ॥

सर्वादेरकारांतपरस्य ङेः स्थाने स्सिं म्मि त्थ एते आदेशा भवन्ति ॥ सव्वस्सिं । सव्वम्मि । सव्वत्थ ॥ अन्नस्सिं । अन्नम्मि । अन्नत्थ ॥ एवं सर्वत्र ॥ अत इत्येव । अमुम्मि ॥

## न वानिदमेतदो हिं ॥ ६० ॥

इदमेतद्वर्जितात्सर्वादेरदन्तात्परस्य ङेर्हिमादेशो वा भवति ॥ सव्वहिं । अन्नहिं । कहिं । जहिं । तहिं ॥ बहुलाधिकारात् किंयत्तद्भ्यः स्त्रियामपि । काहिं । जाहिं । ताहिं ॥ बाहुलकादेव किंयत्तदोस्यमामि [ ३. ३३ ] इति ङीर्नास्ति ॥ पक्षे । सव्वस्सिं । सव्वम्मि ।

---

१ B °म्माणेपे°. २ B निएकह ३ P B °म्माणो. ४ B °र्डेज°. ५ A °देरत प°. ६ B °त ए आदे°. ७ P बुद्धीओ ८ B जसीति. ९ P °कारान्तात्प° १० B °त्था ११ A °द्वर्जितस्य सर्वादेरत प°.

सव्वत्थ । इत्यादि ॥ स्त्रियां तु पक्षे । काए । कीए । जाए । जीए । ताए । तीए ॥ इदमेतद्वर्जन किम् । इमस्सिं । एअस्सिं ॥

आमो डेसिं[3] ॥ ६१ ॥

सर्वादेरकारान्तात्[4]परस्यामो [5]डेसिमित्यादेशो वा भवति ॥ सव्वेसिं । अन्नेसिं । अवरेसिं । इमेसिं । एएसिं । जेसिं । तेसिं । केसिं । पक्षे । सव्वाण । अन्नाण । अवराण । इमाण । एआण । जाण । ताण । काण ॥ बाहुलकात् स्त्रियामपि । सर्वासाम् । सव्वेसिं ॥ एवम् अन्नेसिं । तेसिं ॥

किंतद्भ्यां डासः ॥ ६२ ॥

किंतद्भ्यां पर[6]स्याम स्थाने डास इत्यादेशो वा भवति ॥ कास । तास । पक्षे । केसिं । तेसिं ॥

किंयत्तद्भ्यो ङसः ॥ ६३ ॥

एभ्य परस्य ङसः[7] स्थाने डास इत्यादेशो वा भवति । ङस स्स [३ १०] इत्यस्यापवाद । पक्षे सोपि भवति ॥ कास । कस्स । जास । जस्स । तास । तस्स ॥ बहुलाधिकारात् किंतद्भ्यामाकारान्ताभ्यामपि डासादेशो वा । कस्या धनम् । कास धण ॥ तस्या धनम् । तास धण । पक्षे । काए । ताए ॥

ईद्भ्यः स्सा से ॥ ६४ ॥

किमादिभ्य ईदन्तेभ्य परस्य ङस स्थाने स्सा से इत्यादेशौ वा भवत । टा-ङस्-ङेरदादिदेद्वा तु ङसे [३ २९] इत्यस्यापवाद । पक्षे अदादयोपि ॥ किस्सा । कीसे । कीअ । कीआ । कीइ । कीए ॥ जिस्सा । जीसे । जीअ । जीआ । जीइ । जीए ॥ तिस्सा । तीसे । तीअ । तीआ । तीइ । तीए ॥

---

१ B सव्वत्थ । अन्नत्थि । अवरत्थि । असत्थ इत्यादि २ B इदमस्सिं ३ B ङेः स्सिं. ४ A °रान्ता°. ५ B ङे सिं°. ६ A °रस्य सर्वादेशस्य ७ A ङसो ८ PB इत्यस्यापवादः°.

डेर्डाहे डाला इआ काले ॥ ६५ ॥

*किंयत्तद्भ्यः कालेभिधेये ङेः स्थाने आहे आला इति डितौ इआ इति च आदेशा वा भवन्ति । हिंस्सिम्मित्थानामपवादः । पक्षे तेपि भवन्ति ॥ काहे । काला । कइआ ॥ जाहे । जाला । जइआ ॥ ताहे । ताला । तइआ ॥*

*ताला जाअन्ति गुणा जाला ते सहिअएहिँ घेप्पन्ति ।*

पक्षे । कहिं । कस्सिं । कम्मि । कत्थ ॥

ङसेर्म्हा ॥ ६६ ॥

किंयत्तद्भ्यः परस्य ङसेः स्थाने म्हा इत्यादेशो वा भवति ॥ कम्हा । जम्हा । तम्हा । पक्षे । काओ । जाओ । ताओ ॥

तदो डोः ॥ ६७ ॥

तदः परस्य ङसेर्डो इत्यादेशो वा भवति ॥ तो । तम्हा ॥

किमो डिणो-डीसौ ॥ ६८ ॥

किमः परस्य ङसेर्डिणो डीस इत्यादेशौ वा भवतः ॥ किणो । कीस । कम्हा ॥

इदमेतत्कि-यत्तद्भ्यष्टो डिणा ॥ ६९ ॥

एभ्यः सर्वादिभ्योकारान्तेभ्यः परस्याष्टायाः स्थाने डित् इणा इत्यादेशो वा भवति ॥ इमिणा । इमेण ॥ एदिणा । एदेण ॥ किणा । केण ॥ जिणा । जेण ॥ तिणा । तेण ॥

तदो णः स्यादौ क्वचित् ॥ ७० ॥

तदः स्थाने स्यादौ परे ण आदेशो भवति क्वचित् लक्ष्यानुसारेण ॥ णं पेच्छ । तं पश्येत्यर्थः ॥ सोअइ अ णं रहुवई । तमित्यर्थः ॥ स्त्रियामपि । हत्थुन्नामिअ-मुही णं तिअडा । तां त्रिजटेत्यर्थः ॥ णेण

१ B °न्ति ॥ रवि-किरणाणुग्गहिआइ हुन्ति कमलाइ कमलाइ ॥ ए°. २ A कोसा.
३ A एभ्योऽकारान्तेभ्यः परस्याः सर्वादेशा°. ४ A °त्यर्थ. । णेण°.

भणिअं । तेन भणितमित्यर्थः ॥ तो णेण कर-यल-ट्ठिआ । तेनेत्यर्थः ॥ भणिअं च णाए । तयेत्यर्थः ॥ णेहि कयं । तैः कृतमित्यर्थः ॥ णाहि कयं । ताभिः कृतमित्यर्थः ॥

किमः कस्त्र-तसोश्च ॥ ७१ ॥

किमः को भवति स्यादौ त्रतसोश्च परयोः ॥ को । के । कं । के । केण ॥ त्र । कत्थ ॥ तस् । कओ । कत्तो । कदो ॥

इदम इमः ॥ ७२ ॥

इदमः स्यादौ परे इम आदेशो भवति ॥ इमो । इमे । इमं । इमे । इमेण ॥ स्त्रियामपि । इमा ॥

पुं-स्त्रियोर्न वायमिमिआ सौ ॥ ७३ ॥

इदमशब्दस्य सौ परे अयमिति पुल्लिङ्गे इमिआ इति स्त्रीलिङ्गे आदेशौ वा भवतः ॥ अहवाय कय-कज्जो । इमिआ वाणिअ-धूआ । पक्षे । इमो । इमा ॥

स्सि स्सयोरत् ॥ ७४ ॥

इदमः स्सि स्स इत्येतयोः परयोरद् भवति वा ॥ अस्सिं । अस्स । पक्षे इमादेशोपि । इमस्सिं । इमस्स ॥ बहुलाधिकारादन्यत्रापि भवति । एहि । एसु । आहि । एभिः एषु आभिरित्यर्थः ॥

डेर्मेन हः ॥ ७५ ॥

इदमः कृतेमादेशात् परस्य डेः स्थाने मेन सह ह आदेशो वा भवति ॥ इह । पक्षे । इमस्सिं । इमम्मि ॥

न त्थः ॥ ७६ ॥

इदमः परस्य डेः स्सि-म्मि-त्थाः [३.५९.] इति प्राप्तः त्थो न भवति ॥ इह । इमस्सिं । इमम्मि ॥

[illegible]

### णोम्-शस्टा-भिसि ॥ ७७ ॥

इदमः स्थाने अम्शस्टाभिस्सु परेषु ण आदेशो वा भवति ॥ णं पेच्छ । णे पेच्छ । णेण । णेहिं[1] कयं । पक्षे । इमं । इमे । इमेण । इमेहिं[2] ॥

### अमेणम् ॥ ७८ ॥

इदमोमा सहितस्य स्थाने इणम इत्यादेशो वा भवति ॥ इणं पेच्छ । पक्षे । इमं ॥

### क्लीबे स्यमेदमिणमो च ॥ ७९ ॥

नपुंसकलिङ्गे वर्तमानस्येदमः स्यम्भ्यां सहितस्य इदम् इणमो इणम् च नित्यमादेशा भवन्ति ॥ इदं इणमो इणं धणं चिट्ठइ पेच्छ वा ॥

### किमः किं ॥ ८० ॥

किमः क्लीबे वर्तमानस्य स्यम्भ्यां सह किं भवति ॥ किं कुलं तुह । किं किं ते पडिहाई ॥

### वेदं-तदेतदो ङसाम्भ्यां से-सिमौ ॥ ८१ ॥

इदम् तद् एतद् इत्येतेषां स्थाने ङस् आम इत्येताभ्यां सह यथासंख्यं से सिम् इत्यादेशौ वा भवतः ॥ इदम । से सीलम् । से गुणा । अस्य शीलं गुणा वेत्यर्थः ॥ सिं उच्छाहो । एषाम उत्साह इत्यर्थः ॥ तद् । से सीलं । तस्य तस्या वेत्यर्थः ॥ सिं गुणा । तेषां तासां वेत्यर्थः ॥ एतद् । से अहिअं । एतस्याहितमित्यर्थः ॥ सिं गुणा । सिं सीलं । एतेषां गुणाः शीलं वेत्यर्थः । पक्षे । इमस्स । इमेसिं । इमाण ॥ तस्स । तेसिं । ताण ॥ एअस्स । एएसिं । एआण । इदंतदोरामापि सेआदेशं केश्चिदिच्छति ॥

१ PB णेहि. २ B इमेहि. ३ A °हाअइ ४ B शील ५ B केचिदिच्छंति.

वैतदो ङसेस्त्तो त्ताहे ॥ ८२ ॥

एतदः परस्य ङसे स्थाने त्तो त्ताहे इत्येतावादेशौ वा भवतः ॥ एत्तो । एत्ताहे । पक्षे । एआओ । एआउ । एआहि । एआहिन्तो । एआ ॥

त्थे च तस्य लुक् ॥ ८३ ॥

एतदस्त्थे परे चकारात् त्तो त्ताहे इत्येतयोश्च परयोस्तस्य लुग् भवति ॥ एत्थ । एत्तो । एत्ताहे ॥

एरदीतौ म्मौ वा ॥ ८४ ॥

एतद एकारस्य ङ्यादेशे म्मौ परे अदीतौ वा भवतः ॥ अयम्मि । ईयम्मि । पक्षे । एअम्मि ॥

वैसेणमिणमो सिना ॥ ८५ ॥

एतदः सिना सह एस इणम् इणमो इत्यादेशा वा भवन्ति ॥ सव्वस वि एस गई ॥ सव्वाण वि पत्थिवाण एस मही ॥ एस सहाओ चिअ ससहरस्स ॥ एस सिरं । इणं । इणमो । पक्षे । एअं । एसा । एसो ॥

तदश्च तः सोक्लीबे ॥ ८६ ॥

तद एतदश्च तकारस्य सौ परे अक्लीबे सो भवति ॥ सो पुरिसो । सा महिला । एसो पिओ । एसा मुद्धा ॥ सावित्येव । ते एए धन्ना । ताओ एआओ महिलाओ ॥ अक्लीब इति किम् । तं एअं वणं ॥

वादसो दस्य होनोदाम् ॥ ८७ ॥

अदसो दकारस्य सौ परे ह आदेशो वा भवति तस्मिंश्च कृते अतः सेर्डो [ ३.२ ] इत्योत्वं शेषं संस्कृतवत् [ ४.४४८ ] इत्यतिदेशाद् आत् [ हे॰ २.४ ] इत्याप् क्लीबे स्वरान्म् सेः [ ३.२५ ] इति मश्च

१ P ण्दे. २ A °ओ। एआहि. ३ A °हिंतो। तो°. ४ P इअम्मि. ५ B मुरा. ६ वा ए°. ७ B धण.

न भवति ॥ अह पुरिसो । अह महिला । अह वणं । अह मोहो पर-गुण-लहुँअयाइ । अह णे हिअएण हसइ मारुय-तणओ । असावस्मान् हसतीत्यर्थः । अह कमल-मुही । पक्षे । उत्तरेण मुरादेशः । अमू पुरिसो । अमू महिला । अमुं वणं ॥

मुः स्यादौ ॥ ८८ ॥

अदसो दस्य स्यादौ परे मुरादेशो भवति ॥ अमू पुरिसो । अमुणो पुरिसा । अमुं वणं । अमूइं वणाइं । अमूणि वणाणि । अमू माला । अमूउ अमूओ मालाओ । अमुणा । अमूहिं ॥ ङसि । अमूओ । अमूउ । अमूहिन्तो ॥ भ्यस् । अमूहिन्तो । अमूसुन्तो ॥ ङस् । अमुणो । अमुस्स । आम । अमूण ॥ ङि । अमुम्मि ॥ सुप् । अमूसु ॥

म्मावयेऔ वा ॥ ८९ ॥

अदसोन्त्यव्यञ्जनलुकि दकारान्तस्य स्थाने ङ्यादेशे म्मौ परतः अय इअ इत्यादेशौ वा भवतः ॥ अयम्मि । इयम्मि । पक्षे । अमुम्मि ॥

युष्मदस्तं तुं तुवं तुह तुमं सिना ॥ ९० ॥

युष्मदः सिना सह तं तुं तुवं तुह तुमं इत्येते पञ्चादेशा भवन्ति ॥ तं तुं तुवं तुह तुमं दिट्ठो ॥

भे तुब्भे तुज्झ तुम्ह तुय्हे उय्हे जसा ॥ ९१ ॥

युष्मदो जसा सह भे तुब्भे तुज्झ तुम्ह तुय्हे उय्हे इत्येते षडादेशा भवन्ति ॥ भे तुब्भे तुज्झ तुम्ह तुय्हे उय्हे चिट्ठह । ब्भो म्ह-ज्झौ वा [ ३.१०४ ] इति वचनात् तुम्हे । तुज्झे । एवं चाष्टरूप्यम् ॥

तं तुं तुमं तुवं तुह तुमे तुए अमा ॥ ९२ ॥

युष्मदोमा सह एते सप्तादेशा भवन्ति ॥ तं तुं तुमं तुवं तुह तुमे तुए वन्दामि ॥

---

१ PB °हुअ इं. २ B वण्इं. ३ P हस्य इ°. ४ B डपो°. ५ B उय्हे चिट्ठह. ६ A चेट्ठह. ७ B °इक्षण्यं

वो तुज्झ तुब्भे तुय्हे उय्हे भे शसा ॥ ९३ ॥

युष्मद् शसा सह एते षडादेशा भवन्ति ॥ वो तुज्झ तुब्भे। ब्भो म्हज्झौ वेति वचनात् तुम्हे तुज्झे तुय्हे उय्हे भे पेच्छामि ॥

भे दि दे ते तइ तए तुमं तुमइ तुमए तुमे तुमाइ टा॥९४॥

युष्मदष्टा इत्यनेन सह एते एकादशादेशा भवन्ति ॥ भे दि दे ते तइ तए तुम तुमइ तुमए तुमे तुमाइ जम्पिअ ॥

भे तुब्भेहिं[3] उज्झेहिं[3] उम्हेहिं[3] तुय्हेहिं[3] उय्हेहिं[3] भिसा ॥९५॥

युष्मदो भिसा सह एते षडादेशा भवन्ति ॥ भे । तुब्भेहिं[3] । ब्भो म्ह-ज्झौ वेति वचनात् तुम्हेहिं तुज्झेहिं[3] उज्झेहिं[3] उम्हेहिं[3] तुय्हेहिं[3] उय्हेहिं[3] भुत्त । एवं चाष्टरूप्यम् ॥

तइ-तुव-तुम तुह-तुब्भा ङसौ ॥ ९६ ॥

युष्मदो ङसौ पञ्चम्येकवचने परत एते[1] पञ्चादेशा भवन्ति। ङसेस्तु त्तोदोदुहिहिन्तोलुंको यथाप्राप्तमेव ॥ तइत्तो तुवत्तो। तुमत्तो ॥ तुहत्तो तुब्भत्तो । ब्भो म्ह-ज्झौ वेति वचनात् तुम्हत्तो। तुज्झत्तो ॥ एव दोदुहिहिन्तोलुक्स्वप्युदाहार्यम् ॥ तत्तो इति तु त्वत्त इत्यस्य वलोपे सति ॥

तुय्ह तुब्भ तहिन्तो ङसिना ॥ ९७ ॥

युष्मदो ङसिना सहितस्य एते त्रय आदेशा भवन्ति ॥ तुय्ह तुब्भ तहिन्तो आगओ । ब्भो म्ह-ज्झौ वेति वचनात् तुम्ह । तुज्झ। एवं च पञ्च रूपाणि ॥

तुब्भ तुय्होय्होम्हा भ्यसि ॥ ९८ ॥

युष्मदो भ्यसि परत एते चत्वार आदेशा भवन्ति ॥ भ्यसस्तु यथाप्राप्तमेव ॥ तुब्भत्तो । तुय्हत्तो । उय्हत्तो । उम्हत्तो । ब्भो म्ह-

१ B तुब्भे उज्झे तु°. २ B तुब्भे उज्झे तु°. ३ A °हि ४ P उब्भेहि ५ B तुज्झेहिं तुम्हेहिं. ६ B °तेषां प° ७ A लुक्ष्व°.

न्झौ वेति वचनात् तुम्हत्तो । तुज्झत्तो ॥ एवं दोदुहिहिन्तोसुन्तोष्वप्यु-
दाहार्यम् ॥

## तइ-तुं[3]-ते-तुम्हं[4]-तुह-तुहं-तुव-तुम-तुमे-तुमो-तुमाइ-दि-दे-इ-ए-तुब्भोब्भोय्हा ङसा ॥ ९९ ॥

युष्मदो ङसा षष्ठ्येकवचनेन सहितस्य एते अष्टादशादेशा भवन्ति ॥ तइ । तुं । ते । तुम्हं । तुह । तुहं । तुव । तुम । तुमे । तुमो । तुमाइ । दि । दे । इ । ए । तुब्भ । उब्भ । उय्ह धणं । ब्भो म्ह-ज्झौ वेति वचनात् तुम्ह । तुज्झ । उम्ह । उज्झ । एवं च द्वाविंशती[5] रूपाणि ॥

## तु वो भे[6] तुब्भ तुब्भं तुब्भाण तुवाण तुमाण तुहाण उम्हाण[7] आमा ॥ १०० ॥

युष्मद आमा सहितस्य एते दशादेशा[8] भवन्ति ॥ तु । वो । भे[9] । तुब्भ । तुब्भं । तुब्भाण । तुवाण । तुमाण । तुहाण । उम्हाण । क्त्वा-स्यादेर्णस्वोर्वा [ १.२७ ] इत्यनुस्वारे तुब्भाणं । तुवाणं । तुमाणं । तुहाणं । उम्हाणं ॥ ब्भो म्ह-ज्झौ वेति वचनात् तुम्ह । तुज्झ । तुम्हं । तुज्झं । तुम्हाण । तुम्हाणं[10] । तुज्झाण । तुज्झाणं । धणं । एवं च त्रयोविंशती रूपाणि ॥

## तुमे तुमए तुमाइ तइ तए ङिना ॥ १०१ ॥

युष्मदो ङिना सप्तम्येकवचनेन सहितस्य एते पञ्चादेशा भवन्ति ॥ तुमे तुमए तुमाइ तइ तए ठिअं ॥

## तु-तुव-तुम-तुह-तुब्भा ङौ ॥ १०२ ॥

युष्मदो ङौ परत एते पञ्चादेशा भवन्ति । ङेस्तु यथाप्राप्तमेव ॥

---

१ B °सुन्तेष्व°. २ A तइतुमेनेतुम्हंतु°. ३ B तुं. ४ B तुम्ह. ५ B °शतिह°. ६ B भेतुय्हतुब्भउब्भ. ७ PB तुम्हाण. ८ B °ते आदे°. ९ B भे । तुय्ह । तुब्भ । उब्भ १० PB तुम्हाणं ११ B उम्ह । उज्झ. १२ B तुज्झाण । एवं.

तुम्मि। तुवम्मि। तुमम्मि । तुहम्मि । तुब्भम्मि । ब्भो म्ह-ज्झौ वेति वचनात् तुम्हम्मि। तुज्झम्मि। इत्यादि ॥

सुपि ॥ १०३ ॥

युष्मदः सुपि परतः तु-तुव-तुम-तुह-तुब्भा भवन्ति ॥ तुसु। तुवेसु। तुमेसु। तुहेसु । तुब्भेसु ॥ ब्भो म्ह-ज्झौ वेति वचनात् तुम्हेसु। तुज्झेसु ॥ केचित्तु सुप्येत्वविकल्पमिच्छन्ति । तन्मते तुवसु। तुमसु। तुहसु। तुब्भसु । तुम्हसु । तुज्झसु ॥ तुब्भस्यात्वमपीच्छत्यन्यः। तुब्भासु। तुम्हासु। तुज्झासु ॥

ब्भो म्ह-ज्झौ वा ॥ १०४ ॥

युष्मदादेशेषु यो द्विरुक्तो भस्तस्य म्ह ज्झ इत्येतावादेशौ वा भवतः ॥ पक्षे स एवास्ते। तथैव चोदाहृतम् ॥

अस्मदो म्मि अम्मि अम्हि हं अहं अहयं सिना ॥ १०५ ॥

अस्मदः सिना सह एते षडादेशा भवन्ति ॥ अज्ज म्मि हासिआ मामि तेण ॥ उन्नमै न अम्मि कुविआ । अम्हि करेमि । जेणं हं विद्धा। किं पम्हुट्ठम्मि अहं। अहयं कयप्पणामो ॥

अम्ह अम्हे अम्हो मो वयं भे जसा ॥ १०६ ॥

अस्मदो जसा सह एते षडादेशा भवन्ति ॥ अम्ह अम्हे अम्हो मो वयं भे भणामो ॥

णे णं मि अम्मि अम्ह मम्ह मं ममं मिमं अहं अमा ॥१०७॥

अस्मदोमा सह एते दशादेशा भवन्ति॥ णे णं मि अम्मि अम्ह मम्ह मं ममं मिमं अहं पेच्छ ॥

अम्हे अम्हो अम्ह णे शसा ॥ १०८ ॥

अस्मदः शसा सह एते चत्वार आदेशा भवन्ति ॥ अम्हे अम्हो अम्ह णे पेच्छ ॥

---

१ B °च्छ न इत्यन्ये. २ P °वागिर। ३ B °म अ°. ४ P तेण हं दिट्ठा।. ५ PB °ट्ठम्मि अ°. ६ B मिममहं. ७ A शासा.

मि मे ममं ममए ममाइ मइ मए मयाइ णे टा ॥ १०९ ॥

अस्मदष्टा सह एते नवादेशा भवन्ति ॥ मि मे ममं ममए ममाइ मइ मए मयाइ णे कयं ॥

अम्हेहि अम्हाहि अम्ह अम्हे णे भिसा ॥ ११० ॥

अस्मदो भिसा सह एते पञ्चादेशा भवन्ति ॥ अम्हेहि अम्हाहि अम्ह अम्हे णे कयं ॥

मइ-मम-मह-मज्झा ङसौ ॥ १११ ॥

अस्मदो ङसौ पञ्चम्येकवचने परत एते चत्वार आदेशा भवन्ति । ङसेस्तु यथाप्राप्तमेव ॥ मइत्तो ममत्तो महत्तो मज्झत्तो आगओ ॥ मत्तो इति तु मत्त इत्यस्य ॥ एवं दो-दु-हि-हिन्तो-लुक्ष्वप्युदाहार्यम ॥

ममाम्हौ भ्यसि ॥ ११२ ॥

अस्मदो भ्यसि परतो मम अम्ह इत्यादेशौ भवतः । भ्यसस्तु यथाप्राप्तम् ॥ ममत्तो । अम्हत्तो । ममाहिन्तो । अम्हाहिन्तो । ममासुन्तो । अम्हासुन्तो । ममेसुन्तो । अम्हेसुन्तो ॥

मे मइ मम मह महं मज्झ मज्झं अम्ह अम्हं ङसा ॥११३॥

अस्मदो ङसा षष्ठयेकवचनेन सहितस्य एते नवादेशा भवन्ति ॥ मे मइ मम मह महं मज्झ मज्झं अम्ह अम्हं धणं ॥

णे णो मज्झ अम्ह अम्हं अम्हे अम्हो अम्हाण ममाण महाण मज्झाण आमा ॥ ११४ ॥

अस्मद आमा सहितस्य एते एकादशादेशा भवन्ति ॥ णे णो मज्झ अम्ह अम्हं अम्हे अम्हो अम्हाण ममाण महाण मज्झाण धणं ॥ क्त्वा-स्यादेर्ण-स्वोर्वा [ १. २७ ] इत्यनुस्वारे । अम्हाणं । ममाणं । महाणं । मज्झाणं । एवं च पञ्चदश रूपाणि ॥

मि मइ ममाइ मए मे ङिना ॥ ११५ ॥

अस्मदो ङिना सहितस्य एते पञ्चादेशा भवन्ति ॥ मि मइ ममाइ मए मे ठिअं ॥

अम्ह-मम-मह-मज्झा ङौ ॥ ११६ ॥

अस्मदो ङौ परत एते चत्वार आदेशा भवन्ति । ङेस्तु यथाप्राप्तम् ॥ अम्हम्मि ममम्मि महम्मि मज्झम्मि ठिअं ॥

सुपि ॥ ११७ ॥

अस्मद् सुपि परे अम्हादयश्चत्वार आदेशा भवन्ति ॥ अम्हेसु । ममेसु । महेसु । मज्झेसु । एत्वविकल्पमते तु । अम्हसु । ममसु । महसु । मज्झसु ॥ अम्हस्यात्वमपीच्छेत्यन्य. । अम्हासु ॥

त्रेस्ती तृतीयादौ ॥ ११८ ॥

त्रे स्थाने ती इत्यादेशो भवति तृतीयादौ ॥ तीहिं कयं । तीहिन्तो आगओ । तिण्हं धणं । तीसु ठिअं ॥

द्वेर्दो वे ॥ ११९ ॥

द्विशब्दस्य तृतीयादौ दो वे इत्यादेशौ भवत. ॥ दोहि वेहि कयं । दोहिन्तो वेहिन्तो आगओ । दोण्हं वेण्हं धणं । दोसु वेसु ठिअं ॥

दुवे दोण्णि वेण्णि च जस्-शसा ॥ १२० ॥

जस्-शस्भ्या सहितस्य द्वे. स्थाने दुवे दोण्णि वेण्णि इत्येते दो वे इत्येतौ च आदेशा भवन्ति ॥ *दुवे दोण्णि वेण्णि दो वे ठिआ* पेच्छ वा । ह्रस्व. संयोगे [ १. ८४ ] इति ह्रस्वत्वे दुण्णि विण्णि ॥

---

१ A °म्नि । अ°. २ B °च्छत्यन्ये. ३ P त्रेस्तिस्तृ° ४ A °दौ । तीहितो ५ B °धौ वा अ°. ६ A वर्ण. ७ P °दागो. ८ B °ते आदेशा भवंति । चकारो वे इत्येतौ भवत ॥.

## त्रेस्तिण्णिः ॥ १२१ ॥

जस्-शस्भ्यां सहितस्य त्रेः स्थाने तिण्णि इत्यादेशो भवति ॥ तिण्णि ठिआ पेच्छ वा ॥

## चतुरश्चत्तारो चउरो चत्तारि ॥ १२२ ॥

चतुर्शब्दस्य जस्-शस्भ्यां सह चत्तारो चउरो चत्तारि इत्येते आदेशा भवन्ति ॥ चत्तारो । चउरो । चत्तारि चिट्ठन्ति पेच्छ वा ॥

## संख्याया आमो ण्ह ण्हं ॥ १२३ ॥

संख्याशब्दात्परस्यामो ण्ह ण्हं इत्यादेशौ भवतः ॥ दोण्ह । तिण्ह । चउण्ह । पञ्चण्ह । छण्ह । सत्तण्ह । अट्ठण्ह ॥ एवं दोण्हं । तिण्हं । चउण्हं । पञ्चण्हं । छण्हं । सत्तण्हं । अट्ठण्हं । नवण्हं । दसण्हं । पण्णरसण्हं दिवसाणं । अट्ठारसण्हं समण-साहस्सीणं ॥ कतीनाम् । कइण्हं ॥ बहुलाधिकाराद् विंशत्यादेर्न भवति ॥

## शेषेऽदन्तवत् ॥ १२४ ॥

उपयुक्तादन्यः शेषस्तत्र स्यादिविधिरदन्तवदतिदिश्यते । येष्वाकारा- द्यन्तेषु पूर्वं कार्याणि नोक्तानि तेषु जस्-शसोर्लुक् [ ३.४ ] इत्या- दीनि अदन्ताधिकारविहितानि कार्याणि भवन्तीत्यर्थः ॥ तत्र जस्- शसोर्लुक् इत्येतत्कार्यातिदेशः । माला गिरी गुरू सही वहू रेहन्ति पेच्छ वा ॥ अमोस्य [ ३.५ ] इत्येतत्कार्यातिदेशः । गिरिं गुरुं सहिं वहुं गामणिं खलपुं पेच्छ ॥ टा-आमोर्णः [३.६] इत्येतत्कार्यातिदेशः । हाहाण कयं । मालाण गिरीण गुरूण सहीण वहूण धणं । टायास्तु । टो णा [ ३.२४ ]। टा-ङस्-ङेरदादिदेद्वा तु ङसेः [ ३. २९ ] इति विधिरुक्तः ॥ भिसो हि हिँ हिं [ ३. ७ ] इत्येतत्कार्यातिदेशः । मालाहि गिरीहि गुरूहि सहीहि वहूहि कयं । एवं सानुनासिकानु-

---

१ B सहितस्य च°. २ A तिण्ह । नवण्ह. ३ P °श । मालाण.

स्वारयोरपि ॥ ङसेस् त्तो-दो-दु-हि-हिन्तो-लुकः [ ३.८ ] इत्येतत्कार्यातिदेशः । मालाओ । मालाउ । मालाहिन्तो ॥ बुद्धीओ । बुद्धीउ । बुद्धीहिन्तो ॥ घेणूओ । घेणूउ । घेणूहिन्तो आगओ । हिलुकौ तु प्रतिपेत्स्येते [३.१२७,१२६] । भ्यसस् त्तो दो दु हि हिन्तो सुन्तो [ ३.९ ] इत्येतत्कार्यातिदेशः । मालाहिन्तो । मालासुन्तो । हिस्तु निपेत्स्यते [३.१२७] । एवं गिरीहिन्तो इत्यादि ॥ ङसः स्सः [३.१०] इत्येतत्कार्यातिदेशः । गिरिस्स । गुरुस्स । दहिस्स । महुस्स ॥ स्त्रियां तु टा-ङस्-ङेः° [ ३. २९ ] इत्याद्युक्तम् ॥ ङे म्मि ङेः [ ३. ११ ] इत्येतत्कार्यातिदेशः । गिरिम्मि । गुरुम्मि । दहिम्मि । महुम्मि । डेस्तु निपेत्स्यते [३.१२८] । स्त्रियां तु टा-ङस्-ङेः° [३.२९] इत्याद्युक्तम् ॥ जस्-शस्-ङसि-त्तो-दो-द्वामि दीर्घः [ ३. १२. ] इत्येतत्कार्यातिदेशः । गिरी गुरू चिट्ठन्ति । गिरीओ गुरूओ आगओ । गिरीण गुरूण धणं ॥ भ्यसि वा [ ३. १३ ] इत्येतत्कार्यातिदेशो न प्रवर्तते । इदुतो दीर्घः [३.१६] इति नित्यं विधानात् ॥ टाण-शस्येत् [३.१४] भिस्भ्यस्सुपि [ ३. १५ ] इत्येतत्कार्यातिदेशस्तु निपेत्स्यते [ ३. १२९ ] ॥

## न दीर्घो णो ॥ १२५ ॥

इदुदन्तयोरर्थाज्जस्-शस्ङस्यादेशे णो इत्यस्मिन् परतो दीर्घो न भवति ॥ अग्गिणो । वाउणो ॥ णो इति किम् । अग्गी । अग्गीओ ॥

## ङसेर्लुक् ॥ १२६ ॥

आकारान्तादिभ्योदन्तवत्प्राप्तो ङसेर्लुग् न भवति ॥ मालत्तो । मालाओ । मालाउ । मालाहिन्तो आगओ ॥ एवं अग्गीओ । वाऊओ । इत्यादि ॥

## भ्यसश्च हिः ॥ १२७ ॥

आकारान्तादिभ्योदन्तवत्प्राप्तो भ्यसो ङसेश्च हिर्न भवति ॥ माला-

१ AB लुक् २ A मुदस्त. ३ B डेस्तु. ४ P °न्ति पेच्छ वा । गि°. ५ B °देशो णो. ६ B °दि°. ७ P °ति । मालाओ. ८ B °ओ । मालाहिन्तो ।

हिन्तो । मालासुन्तो । एवं अग्गीहिन्तो । इत्यादि ॥ मालाओ । मालाउ । मालाहिन्तो ॥ एवम् अग्गीओ । इत्यादि ॥

ङेर्डे:[1] ॥ १२८ ॥

आकारान्तादिभ्योदन्तवत्प्राप्तो ङेर्डे[2] न भवति ॥ अग्गिम्मि । वाउम्मि । दहिम्मि । महुम्मि[3] ॥

एत् ॥ १२९ ॥

आकारान्तादीनामर्थात् टाशस्भिस्भ्यस्सुप्सु परतोदन्तवद् एत्वं न भवति ॥ हाहाण कयं ॥ मालाओ पेच्छ ॥ मालाहि कयं ॥ माला-हिन्तो । मालासुन्तो आगओ ॥ मालासु ठिअं ॥ एवं अग्गिणो । वाउणो । इत्यादि ॥

द्विवचनस्य बहुवचनम् ॥ १३० ॥

सर्वासां विभक्तीनां स्यादीनां त्यादीनां च द्विवचनस्य स्थाने बहु-वचनं भवति ॥ दोण्णि कुणन्ति । दुवे कुणन्ति । दोहिं[5] । दोहिन्तो । दोसुन्तो । दोसु । हत्था । पाया । थणया । नयणा ॥

चतुर्थ्याः षष्ठी ॥ १३१ ॥

चतुर्थ्याः स्थाने षष्ठी भवति ॥ मुणिस्स । मुणीण देइ ॥ नमो देवस्स । देवाण ॥

तादर्थ्यङेर्वा ॥ १३२ ॥

तादर्थ्यविहितस्य ङेश्चतुर्थ्येकवचनस्य स्थाने षष्ठी वा भवति ॥ देवस्स देवाय । देवार्थमित्यर्थः ॥ ङेरिति किम् । देवाण ॥

वधाड्डाइश्च वा ॥ १३३ ॥

वधशब्दात्परस्य तादर्थ्यङेर्डिद् आइः षष्ठी च वा भवति ॥ वहाइ वहस्स वहाय । वधार्थमित्यर्थः ॥

---

१. B ङेर्डे. २ P °र्डेर्न. ३ A मुहम्मि. ४ B °स्सु प°. ५ A दोहि. ६ B °या । न°. ७ B °दर्थे वि°. ८ B °श्च ॥.

## क्वचिद् द्वितीयादेः ॥ १३४ ॥

द्वितीयादीनां विभक्तीनां स्थाने षष्ठी भवति क्वचित् ॥ सीमाधरस्स वन्दे । तिस्सा मुहस्स भरिमो । अत्र द्वितीयायाः[1] षष्ठी ॥ धणस्स लद्धो[2] । धनेन[3] लब्ध इत्यर्थः । चिरस्स मुक्का । चिरेण मुक्तेत्यर्थः । तेसिमेअमणाइण्णं । तैरेतदनाचरितम्[4] । अत्र तृतीयायाः ॥ चोरस्स वीहेइ । चोराद्बिभेतीत्यर्थः । इअराइं जाण लहुअक्खराइं पायन्तिमिल्ल-सहिआण । पादान्तेन सहितेभ्य इतराणीति । अत्र पंञ्चम्याः ॥ पिट्ठीएँ केस-भारो । अत्र सप्तम्याः ॥

## द्वितीया-तृतीययोः सप्तमी ॥ १३५ ॥

द्वितीयातृतीययोः स्थाने क्वचित् सप्तमी भवति ॥ गामे वसामि । नयरे न जोमि । अत्र द्वितीयायाः ॥ मइ वेविरीएँ मलिआइं ॥ तिसु तेसु अलंकिआ पुहवी । अत्र तृतीयायाः ॥

## पञ्चम्यास्तृतीया च ॥ १३६ ॥

पञ्चम्याः स्थाने क्वचित् तृतीयासप्तम्यौ भवतः ॥ चोरेण वीहइ । चोराद्बिभेतीत्यर्थः ॥ अन्तेउरे रमिउमागओ राया । अन्तःपुराद् रन्त्वागत इत्यर्थः ॥

## सप्तम्या द्वितीया ॥ १३७ ॥

सप्तम्याः स्थाने क्वचिद् द्वितीया भवति ॥ विज्जुज्जोयं भरइ रत्तिं ॥ आर्षे तृतीयापि दृश्यते । तेणं कालेणं । तेणं समएणं । तस्मिन् काले तस्मिन् समये इत्यर्थः ॥ प्रथमाया अपि द्वितीया दृश्यते । चउवीसं पि जिणवरा । चतुर्विंशतिरपि जिनवरा इत्यर्थः ॥

---

१ P °यार्थे ष°. २ B लुद्धो. ३ B धणेण लुब्ध. ४ B °दनाचीर्णमित्यर्थः. ५ P °यार्थे ॥. ६ P विहइ. ७ P °नाग्यर्थे. ८ P °म्यर्थे. ९ B जानामि. १० B वेवरिए. ११ B °मार्षेपि.

## क्यङोर्यलुक् ॥ १३८ ॥

क्यङन्तस्य क्यङ्घन्तस्य वा संबन्धिनो यस्य लुग् भवति ॥ गरुआइ । गरुआअइ । अगुरुर्गुरुर्भवति गुरुरिवाचरति वेत्यर्थः । क्यङ्ष् । दमदमाइ । दमदमाअइ ॥ लोहिआइ । लोहिआअइ ॥

## त्यादीनामाद्यत्रयस्याद्यस्येचेचौ ॥ १३९ ॥

त्यादीनां विभक्तीनां परस्मैपदानामात्मनेपदानां च संबन्धिनः प्रथमत्रयस्य यदाद्यं वचनं तस्य स्थाने इच् एच् इत्येतावादेशौ भवतः ॥ हसइ । हसए । वेवइ । वेवए । चकारौ इचेचः [४.३१८] इत्यत्र विशेषणार्थौ ॥

## द्वितीयस्य सि से ॥ १४० ॥

त्यादीनां परस्मैपदानामात्मनेपदानां च द्वितीयस्य त्रयस्य संबन्धिन आद्यवचनस्य स्थाने सि से इत्येतावादेशौ भवतः ॥ हससि । हससे । वेवसि । वेवसे ॥

## तृतीयस्य मिः ॥ १४१ ॥

त्यादीनां परस्मैपदानामात्मनेपदानां च तृतीयस्य त्रयस्याद्यस्य वचनस्य स्थाने मिरादेशो भवति ॥ हसामि । वेवामि ॥ बहुलाधिकाराद् मिवेः स्थानीयस्य मेरिकारलोपश्च ॥ बहु-जाणय रुसिउं सक्कं । शक्नोमीत्यर्थः ॥ न मरं । न म्रिये इत्यर्थः ॥

## बहुष्वाद्यस्य न्ति न्ते इरे ॥ १४२ ॥

त्यादीनां परस्मैपदात्मनेपदानामाद्यत्रयसंबन्धिनो बहुषु वर्तमानस्य

१ B °ङो यलुक्. २ B °स्य क्यजंतस्य क्यषंत°; P स्यक्यपन्तस्य. ३ A गुरु°. ४ P क्यप्; B क्यच्. ५ B °इ । क्यप् । लो°. ६ A °स्सइ°. ७ B इचेच् इ°. ८ B यस्य व°. ९ P मिवेस्या°; B मिवस्या. १० A रुसिअ; B रुसिओ. ११ B °दानामात्मनेपदानां च आद्य°.

वचनस्य स्थाने न्ति न्ते इरे इत्यादेशा भवन्ति ॥ हसन्ति । वेवन्ति हसिज्जन्ति । रमिज्जन्ति । गज्जन्ते खे मेहा ॥ बीहन्ते रक्खसाण च ॥ उप्पज्जन्ते कइ हिअय-सायरे कव्व-रयणाइ ॥ दोण्णि वि न पहुप्पिरे बाहू । न प्रभवत इत्यर्थः ॥ विच्छुहिरे । विक्षुभ्यन्तीत्यर्थः ॥ कचिद् इरे एकत्वेपि । सूसइरे गाम चिक्खल्लो । शुष्यतीत्यर्थः ॥

### मध्यमस्येत्था-हचौ ॥ १४३ ॥

त्यादीनां परस्मैपदात्मनेपदानां मध्यमस्य त्रयस्य बहुषु वर्तमानस्य स्थाने इत्था हच् इत्येतावादेशौ भवतः ॥ हसित्था । हसह । वेवित्था । वेवेह ॥ बाहुलकादित्थान्यत्रापि । यद्यत्ते रोचते । जं जं ते रोइत्था । हच् इति चकारः इह-हचोर्हस्य [४ २६८] इत्यत्र विशेषणार्थः ॥

### तृतीयस्य मो-मु-माः ॥ १४४ ॥

त्यादीनां परस्मैपदात्मनेपदानां तृतीयस्य त्रयस्य सम्बन्धिनो बहुषु वर्तमानस्य वचनस्य स्थाने मो मु म इत्येते आदेशा भवन्ति ॥ हसामो । हसामु । हसाम । तुवरामो । तुवरामु । तुवराम ॥

### अत एवैच् से ॥ १४५ ॥

त्यादेः स्थाने यौ एच् से इत्येतावादेशावुक्तौ तावकारान्तादेव भवतो नान्यस्मात् ॥ हसए । हससे ॥ तुवरए । तुवरसे ॥ करए । करसे ॥ अत इति किम् । ठाइ । ठासि ॥ वसुआइ । वसुआसि ॥ होइ । होसि ॥ एवकारोकारान्ताद् एच् से एव भवत इति विपरीतावधारण-निषेधार्थः । तेनाकारान्तात् इच सि इत्येतावपि सिद्धौ ॥ हसइ । हससि ॥ वेवइ । वेवसि ॥

### मिनास्तेः सिः ॥ १४६ ॥

सिना द्वितीयत्रिकादेशेन सह अस्तेः सिरादेशो भवति ॥ निट्ठुरो जं सि ॥ सिनेति किम् । सेआदेश सति अत्थि तुमं ॥

---

१ B कचि(दयज्ञ)° २ A °दान्मनेप° ३ B °स्य वचनस्य स्था° ४ B वेविह ५ P बहुलाधिकारात् ६ B °स्य स्य° ७ B इत्याद° ८ A सि

## मि-मो-मैर्म्हि-म्हो-म्हा वा ॥ १४७ ॥

अस्तेर्धातोः स्थाने मि मो म इत्यादेशैः सह यथासंख्यं म्हि म्हो म्ह इत्यादेशा वा भवन्ति ॥ एस म्हि । एषोस्मीत्यर्थः ॥ गय म्हो । गय म्ह । मुकारस्याग्रहणादप्रयोग एव तस्येत्यवसीयते । पक्षे अत्थि अहं । अत्थि अम्हे । अत्थि अम्हो ॥ ननु च सिद्धावस्थायां पक्ष्म-श्म-ष्म-स्म-ह्मां म्हः [ २. ७४ ] इत्यनेन म्हादेशे म्हो इति सिध्यति । सत्यम् । किं तु विभक्तिविधौ प्रायः साध्यमानावस्थाङ्गीक्रियते अन्यथा वच्छेण । वच्छेसु । सव्वे । जे । ते । के इत्याद्यर्थं सूत्राण्यनारम्भणीयानि स्युः ॥

## अत्थिस्त्यादिना ॥ १४८ ॥

अस्तेः स्थाने त्यादिभिः सह अत्थि इत्यादेशो भवति ॥ अत्थि सो । अत्थि ते[1] । अत्थि तुमं । अत्थि तुम्हे । अत्थि अहं । अत्थि अम्हे ॥

## णेरदेदावावे ॥ १४९ ॥

णेः स्थाने अत् एत् आव आवे एते चत्वार आदेशा भवन्ति ॥ दरिसइ[2] । कारेइ[3] । करावइ । करावेइ ॥ हासेइ । हसावइ । हसावेइ ॥ उवसामेइ । उवसमावइ । उवसमावेइ ॥ बहुलाधिकारात् कचिदेन्नास्ति । जाणावेइ ॥ क्वचिद् आवे नास्ति । पाएइ । भावेइ ॥

## गुर्वादेरविर्वा ॥ १५० ॥

गुर्वादेर्णेः स्थाने अवि इत्यादेशो वा भवति ॥ शोषितम् । सोसविअं । सोसिअं ॥ तोषितम् । तोसविअं । तोसिअं ॥

## भ्रमेराडो वा ॥ १५१ ॥

भ्रमेः परस्य णेराडे आदेशो वा भवति[4] ॥ भमाडइ । भमाडेइ । पक्षे । भामेइ । भमावइ । भमावेइ ॥

---

१ B °ते । अत्थि अम्हे ॥. २ A दरसइ. ३ A °इ । हासेइ. ४ B °राड इत्यादे°.

लुगावी क्त-भाव-कर्मसु ॥ १५२ ॥

णेः स्थाने लुक् आवि इत्यादेशौ भवतः क्ते भावकर्मविहिते च प्रत्यये परतः ॥ कारिअ । कराविअ ॥ हासिअ । हसाविअ ॥ खामिअ । खामाविअ । भावकर्मणोः । कारीअइ । करावीअइ । कारिज्जइ । कराविज्जइ । हासीअइ । हसावीअइ । हासिज्जइ । हसाविज्जइ ॥

अदेल्लुक्यादेरत आः ॥ १५३ ॥

णेरदेल्लोपेषु कृतेषु आदेरकारस्य आ भवति[१] ॥ अति । पाडइ । मारइ ॥ एति । कारेइ । खामेइ ॥ लुकि । कारिअ । खामिअ । कारीअइ । खामीअइ । कारिज्जइ । खामिज्जइ । अदेल्लुकीति किम् । कराविअ । करावीअइ । कराविज्जइ ॥ आदेरिति किम् । संगामेइ । इह व्यवहितस्य मा भूत् ॥ कारिअ । इहान्त्यस्य मा भूत् ॥ अत इति किम् । दूसेइ ॥ केचित्तु आवेआव्यादेशयोरप्यादेरत आत्वमिच्छन्ति । कारावेइ । हासाविओ जणो सामलीए ॥

मौ वा ॥ १५४ ॥

अत आ इति वर्तते । आदन्ताद्धातोर्मौ परे अत आत्वं वा भवति ॥ हसामि हसमि । जाणामि जाणमि । लिहामि लिहमि ॥ अत इत्येव । होमि ॥

इच्च मो मु-मे वा ॥ १५५ ॥

अकारान्ताद्धातोः परेषु मोमुमेषु अत इत्त्वं चकारात् आत्वं च वा भवतः ॥ भणिमो भणामो । भणिमु भणामु । भणिम भणाम । पक्षे । भणमो । भणमु । भणम ॥ वर्तमाना-पञ्चमी-शतृषु वा [ ३ १५८ ] इत्येत्वे तु भणेमो । भणेमु । भणेम ॥ अत इत्येव । ठामो । होमो ॥

क्ते ॥ १५६ ॥

क्ते परतोत इत्त्वं भवति ॥ हसिअ । पढिअ । नविअ । हासिअ ।

---

१ A कारिअ २ A °ति । पा° ३ B °वी° ४ A परे आत्व ५ B अका°. ६ B आत्वं वा भवति

पाढिअं ॥ गयं नयमित्यादि तु सिद्धावस्थापेक्षणात् ॥ अत इत्येव । झायं । लुअं । हूअं ॥

## एच्च क्त्वा-तुम्-तव्य-भविष्यत्सु ॥ १५७ ॥

क्त्वातुम्तव्येषु भविष्यत्कालविहिते च प्रत्यये परतोत एकारश्चकारादिकारश्च भवति ॥ क्त्वा । हसेऊण । हसिऊण ॥ तुम् । हसेउं । हसिउं ॥ तव्य । हसेअव्वं । हसिअव्वं ॥ भविष्यत् । हसेहिइ । हसिहिइ ॥ अत इत्येव । काऊण ॥

## वर्तमाना-पञ्चमी-शतृषु वा ॥ १५८ ॥

वर्तमानापञ्चमीशतृषु परत अकारस्य स्थाने एकारो वा भवति ॥ वर्तमाना । हसेइ हसइ । हसेम हसिम । हसेमु हसिमु[1] ॥ पञ्चमी । हसेउ हसउ । सुणेउ सुणउ ॥ शतृ । हसेन्तो हसन्तो ॥ कचिन्न भवति । जयइ ॥ कचिदात्वमपि । सुणाउ[3] ॥

## ज्जा-ज्जे ॥ १५९ ॥

ज्जा ज्ज इत्यादेशयोः परयोरकारस्य एकारो भवति ॥ हसेज्जा । हसेज्ज ॥ अत इत्येव । होज्जा । होज्ज ॥

## ईअ-इज्जौ क्यस्य ॥ १६० ॥

चिजिप्रभृतीनां भावकर्मविधिं वक्ष्यामः । येषां तु न वक्ष्यते तेषां संस्कृतातिदेशात्प्राप्तस्य[4] क्यस्य स्थाने ईअ इज्ज इत्येतावादेशौ भवतः ॥ हसीअइ । हसिज्जइ । हसीअन्तो । हसिज्जन्तो । हसीअमाणो । हसिज्जमाणो । पढीअइ । पढिज्जइ । होईअइ । होइज्जइ ॥ बहुलाधिकारात् कचित् क्योपि विकल्पेन भवति । मए नवेज्ज[5] । मए नविज्जेज्ज[6] । तेण लहेज्ज । तेण लहिज्जेज्ज । तेण अच्छेज्ज[7] । तेण अच्छिज्जेज्ज । तेण अच्छीअइ ॥

---

१ B °दिपु द्व.२ P °मु । हसेमो । हसिमो । प°. ३ B सुणाओ. ४ A °स्य स्थाने ईत्ये°. ५ P मए न वेज्ज. ६ P मए न विज्जेज्ज. ७ B °ज्ज । तेण अच्छीअइ.

दृशि-वचेर्डीस-डुच्चं ॥ १६१ ॥

दृशेर्वचेश्च परस्य क्यस्य स्थाने यथासंख्यं डीस डुच इत्यादेशौ भवत ॥ ईअइज्जापवाद. ॥ दीसइ । वुच्चइ ॥

सी ही हीअ भूतार्थस्य ॥ १६२ ॥

भूतेर्थे विहितोद्यतन्यादिः प्रत्ययो भूतार्थ तस्य स्थाने सी ही हीअ इत्यादेशा भवन्ति ॥ उत्तरत्र व्यञ्जनादीअविधानात् स्वरान्तादेवायं विधि ॥ कासी । काही । काहीअ । अकार्षीत् । अकरोत् । चकार वेत्यर्थ । एवं ठासी । ठाही । ठाहीअ ॥ आर्षे । देविन्दो इणमब्बवी इत्यादौ सिद्धावस्थाश्रयणात् ह्यस्तन्या. प्रयोग. ॥

व्यञ्जनादीअः ॥ १६३ ॥

व्यञ्जनान्ताद्धातो परस्य भूतार्थस्याद्यतन्यादिप्रत्ययस्य ईअ इत्यादेशो भवति ॥ हुवीअ । अभूत् । अभवत् । बभूवेत्यर्थ· ॥ एवं अच्छीअ । आसिष्ट । आस्त । आसाचक्रे वा ॥ गेण्हीअ । अग्रहीत् । अगृह्णात् । जग्राह वा ॥

तेनास्तेरास्यहेसी ॥ १६४ ॥

अस्तेर्धातोस्तेन भूतार्थेन प्रत्ययेन सह आसि अहेसि इत्यादेशौ भवत. ॥ आसि सो तुमं अहं वा । जे आसि । ये आसन्नित्यर्थ. । एवं अहेसि ॥

ज्जात्सप्तम्या इर्वा ॥ १६५ ॥

सप्तम्यादेशात् ज्जापरं इर्वा प्रयोक्तव्य ॥ भवेत् । होज्जइ । होज्ज ॥

भविष्यति हिरादिः ॥ १६६ ॥

भविष्यदर्थे विहिते प्रत्यये परे तस्यैवादिर्हि. प्रयोक्तव्य ॥ होहिइ भविष्यति भविता वेत्यर्थ. ॥ एवं होहिन्ति । होहिसि । होहित्था । हसिहिइ । काहिइ ॥

१ B °दृशा. २ A °ज्यादि°. ३ A आइ्हं र ४ A ये ५ B°र्था भवति॥. ६ PB °दर्पवि°. ७ B कार्हि .

### मि-मो-मु-मे स्सा हा न वा ॥ १६७ ॥

भविष्यत्यर्थे मिमोमुमेषु तृतीयत्रिकादेशेषु परेषु तेषामेवादी स्सा हा इत्येतौ वा प्रयोक्तव्यौ । हेरपवादौ ॥ पक्षे हिरपि ॥ होस्सामि होहामि । होस्सामो होहामो । होस्सामु होहामु । होस्साम होहाम ॥ पक्षे । होहिमि । होहिमु । होहिम ॥ कचित्तु हा न भवति[२] । हसिस्सामो । हसिहिमो ॥

### मो-मु-मानां हिस्सा हित्था ॥ १६८ ॥

धातोः परौ भविष्यति काले मोमुमानां स्थाने हिस्सा हित्था इत्येतौ वा प्रयोक्तव्यौ ॥ होहिस्सा । होहित्था । हसिहिस्सा । हसिहित्था । पक्षे । होहिमो । होस्सामो । होहामो । इत्यादि ॥

### मेः स्सं ॥ १६९ ॥

धातोः परो[३] भविष्यति काले[४] म्यादेशस्य स्थाने स्सं वा प्रयोक्तव्यः ॥ होस्सं । हसिस्सं । कित्तइस्सं । पक्षे । होहिमि । होस्सामि । होहामि । कित्तइहिमि ॥

### कृ-दो हं ॥ १७० ॥

करोतेर्ददातेश्च परो भविष्यति विहितस्य म्यादेशस्य स्थाने हं वा प्रयोक्तव्यः ॥ काहं । दाहं । करिष्यामि दास्यामीत्यर्थः ॥ पक्षे । काहिमि । दाहिमि । इत्यादि ॥

### श्रु-गमि-रुदि-विदि-दृशि-मुचि-वचि-छिदि-भिदि-भुजां सोच्छं गच्छं रोच्छं वेच्छं दच्छं मोच्छं वोच्छं[५] छेच्छं भेच्छं भोच्छं ॥ १७१ ॥

श्र्वादीनां धातूनां भविष्यद्विहितम्यन्तानां स्थाने सोच्छमित्यादयो[६] निपात्यन्ते ॥ सोच्छं । श्रोष्यामि ॥ गच्छं । गमिष्यामि ॥ संगच्छं ।

---

१ P °वाद.. २ A P °ति । हसिहिमो. ३ B परे. ४ A °ष्यत्काले. ५ B वच्छं. ६ PB °यो वा नि°.

संगंस्ये ॥ रोच्छं । रोदिष्यामि ॥ विदं ज्ञाने । वेच्छं । वेदिष्यामि ॥ दच्छं । द्रक्ष्यामि ॥ मोच्छं । मोक्ष्यामि । वोच्छं । वक्ष्यामि ॥ छेच्छं । छेत्स्यामि ॥ भेच्छं । भेत्स्यामि । भोच्छं । भोक्ष्ये ॥

## सोच्छादय इजादिषु हिलुक् च वा ॥ १७२ ॥

श्वादीना स्थाने इजादिषु भविष्यदादेशेषु यथासंख्यं सोच्छादयो भवन्ति । ते एवादेशा अन्त्यस्वराद्यवयववर्जा इत्यर्थः । हिलुक् च वा भवति ॥ सोच्छिइ । पक्षे । सोच्छिहिइ । एवं सोच्छिन्ति । सोच्छिहिन्ति । सोच्छिसि । सोच्छिहिसि । सोच्छित्था । सोच्छिहित्था । सोच्छिह । सोच्छिहिह । सोच्छिमि । सोच्छिहिमि । सोच्छिस्सामि । सोच्छिहामि । सोच्छिस्सं । सोच्छं । सोच्छिमो । सोच्छिहिमो । सोच्छिस्सामो । सोच्छिहामो । सोच्छिहिस्सा । सोच्छिहित्था । एवं मुमयोरपि ॥ गच्छिइ । गच्छिहिइ । गच्छिन्ति । गच्छिहिन्ति । गच्छिसि । गच्छिहिसि । गच्छित्थो । गच्छिहित्था । गच्छिह । गच्छिहिह । गच्छिमि । गच्छिहिमि । गच्छिस्सामि । गच्छिहामि । गच्छिस्सं । गच्छं । गच्छिमो । गच्छिहिमो । गच्छिस्सामो । गच्छिहामो । गच्छिहिस्सा । गच्छिहित्था । एव मुमयोरपि ॥ एवं रुदादीनामप्युदाहार्यम् ॥

## दु सु मु विध्यादिष्वेकस्मिंस्त्रयाणाम् ॥ १७३ ॥

विध्यादिष्वर्थेषूत्पन्नानामेकत्वेर्थे वर्तमानाना त्रयाणामपि त्रिकाणां स्थाने यथासंख्यं दु सु मु इत्येते आदेशा भवन्ति ॥ हसउ सा । हससु तुमं । हसामु अहं ॥ पेच्छउ । पेच्छसु । पेच्छामु ॥ दकारोच्चारणं भाषान्तरार्थम् ॥

## सोर्हिर्वा ॥ १७४ ॥

पूर्वसूत्रविहितस्य सो: स्थाने हिरादेशो वा भवति ॥ देहि देसु ॥

१ A विद्र. २ B °दादिषु. ३ B °वर्जा. ४ A गच्छित्थ. ५ B °नामनेकत्वे°.

### अत इज्जस्विज्जहीज्जे-लुको वा ॥ १७५ ॥

अकारान्तस्य सोः इज्जसु इज्जहि इज्जे इत्येते लुक् च आदेशा वा भवन्ति ॥ हसेज्जसु। हसेज्जहि[१]। हसेज्जे। हस। पक्षे। हससु ॥ अत इति किम्। होसु। ठाहि ॥

### बहुषु न्तु ह मो ॥ १७६ ॥

विध्यादिषूत्पन्नानां बहुष्वर्थेषु वर्तमानानां त्रयाणां त्रिकाणां स्थाने यथासंख्यं न्तु ह मो इत्येते आदेशा भवन्ति ॥ न्तु। हसन्तु। हसन्तु हसेयुर्वा ॥ ह। हसह। हसत। हसेत वा ॥ मो। हसामो। हसाम। हसेम वा ॥ एवं तुवरन्तु। तुवरह। तुवरामो ॥

### वर्तमाना-भविष्यन्त्योश्च ज्ज ज्जा वा ॥ १७ ॥

वर्तमानाया भविष्यन्त्याश्च विध्यादिषु च विहितस्य प्रत्ययस्य स्थाने ज्ज ज्जा इत्येतावादेशौ वा भवतः ॥ पक्षे यथाप्राप्तम् ॥ वर्तमाना। हसेज्ज। हसेज्जा। पढेज्ज। पढेज्जा। सुणेज्ज। सुणेज्जा ॥ पक्षे। हसइ। पढइ। सुणइ ॥ भविष्यन्ती। पढेज्ज। पढेज्जा। पक्षे। पढिहिइ ॥ विध्यादिषु। हसेज्ज। हसिज्जा[२]। हसतु। हसेद्वा इत्यर्थः। पक्षे। हसउ ॥ एवं सर्वत्र। यथा तृतीयत्रये। अइवाएज्जा। अइवायावेज्जा। न समणुजाणामि। न समणुजाणेज्जा वा ॥ अन्ये त्वन्यासामपीच्छन्ति। होज्ज। भवति। भवेत्। भवतु। अभवत्। अभूत्। बभूव[३]। भूयात्[४]। भविता। भविष्यति। अभविष्यद्वेत्यर्थः ॥

### मध्ये च स्वरान्ताद्वा ॥ १७८ ॥

स्वरान्ताद्धातोः प्रकृतिप्रत्यययोर्मध्ये चकारात्प्रत्ययानां च स्थाने ज्ज ज्जा इत्येतौ वा भवतः वर्तमानाभविष्यन्त्योर्विध्यादिषु च ॥ वर्तमाना। होज्जइ। होज्जाइ। होज्ज। होज्जा। पक्षे। होइ ॥ एवं होज्जसि। होज्जासि। होज्ज। होज्जा। पक्षे। होसि ॥ एवं होज्जहिसि। होज्जाहिसि। होज्ज। होज्जा। होहिसि[५]। होज्जहिमि[६]। होज्जाहिमि। होज्ज-

१ B हसिज्जहि. २ B हसइ. ३ PB हसेज्जा. ४ B °वाविज्जा. ५ B होज्जा. ६ A अभुव. ७ B होज्जिहिमि

स्सामि । होज्जहामि । होज्जस्सं । होज्ज । होज्जा । इत्यादि ॥ विध्यादिपु । होज्जउ । होज्जाउ । होज्ज । होज्जा । भवतु भवेद्वेत्यर्थः । पक्षे ॥ होउ । स्वरान्तादिति किम् । हसेज्ज । हसेज्जा । तुवरेज्ज । तुवरेज्जा ॥

क्रियातिपत्तेः ॥ १७९ ॥

क्रियातिपत्ते. स्थाने ज्जज्जावादेशौ भवतः ॥ होज्ज । होज्जा । अभविष्यदित्यर्थ. । जइ होज्ज वण्णाणिज्जो ॥

न्त-माणौ ॥ १८० ॥

क्रियातिपत्ते. स्थाने न्तमाणौ आदेशौ भवतः ॥ होन्तो । होमाणो । अभविष्यदित्यर्थः ॥

हरिण-ट्ठाणे हरिणङ्क जइ सि हरिणाहिवं निवेसन्तो ।
न सहन्तो चिअ तो राहुपरिहवं से जिअन्तस्स ॥

शत्रानशः ॥ १८१ ॥

शतृ आनश् इत्येतयोः प्रत्येकं न्त माण इत्येतावादेशौ भवतः ॥ शतृ । हसन्तो हसमाणो ॥ आनश् । वेवन्तो वेवमाणो ॥

ई च स्त्रियाम् ॥ १८२ ॥

स्त्रियां वर्तमानयो. शत्रानशो. स्थाने ई चकारात् न्तमाणौ च भवन्ति ॥ हसई । हसन्ती । हसमाणी । वेवई । वेवन्ती । वेवमाणी ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ अष्टमस्याध्यायस्य तृतीयः पादः ॥३॥

ऊर्ध्वं स्वर्गनिकेतनादपि तले पातालमूलादपि
त्वत्कीर्तिर्भ्रमति क्षितीश्वरमणे पारे पयोधेरपि ।
तेनास्याः प्रमदास्वभावसुलभैरुच्चावचैश्चापलै-
स्ते वाचंयमवृत्तयोपि मुनयो मौनव्रतं त्याजिताः ॥ १ ॥

---

१ B तुरवे°. २ P °यं ॥ जइ. ३ B हसंतो. ४ P °वं ॥ हा°. ५ B °नथा. ६ A आनशई°, B आनई°. ७ A आनश, B आनथ. ८ B भवत:. ९ A हस-मन्ना. १० B अष्टमाध्या°. ११ PB °दः समाप्तः ॥. १२ P om. this verse

॥ अर्हं ॥

## इदितो वा ॥ १ ॥

सूत्रे ये इदितो धातवो वक्ष्यन्ते तेषां ये आदेशास्ते विकल्पेन भवन्तीति वेदितव्यम्। तत्रैवं चोदाहरिष्यते ॥

## कथेर्वज्जर-पज्जरोप्पाल-पिसुण-संघ-बोल्ल-चव-जम्प-सीस-साहाः ॥ २ ॥

कथेर्धातोर्वज्जरादयो दशादेशा वा भवन्ति ॥ वज्जरइ । पज्जरइ । उप्पालइ । पिसुणइ । संघइ । बोल्लइ । चवइ । जम्पइ । सीसइ । साहइ ॥ उच्चुक्कइ इति तूत्पूर्वस्य चुक भाषणे इत्यस्य । पक्षे । कहइ ॥ एते चान्यैर्देशीषु पठिता अपि अस्माभिर्धात्वादेशीकृता विविधेषु प्रत्ययेषु प्रतिष्ठन्तामिति ॥ तथा च । वज्जरिओ कथित । वज्जरिऊण कथयित्वा । वज्जरणं कथनम् । वज्जरन्तो कथयन् । वज्जरिअव्वं कथयितव्यमिति रूपसहस्राणि सिध्यन्ति । संस्कृतधातुवच्च प्रत्ययलोपागमादिविधिः ॥

## दुःखे णिव्वरः ॥ ३ ॥

दुःखविषयस्य कथेर्णिव्वर इत्यादेशो वा भवति ॥ णिव्वरइ । दुःखं कथयतीत्यर्थः ॥

## जुगुप्सेर्झुण-दुगुच्छ-दुगुञ्छाः ॥ ४ ॥

जुगुप्सेरेते त्रय आदेशा वा भवन्ति ॥ झुणइ । दुगुच्छइ । दुगुञ्छइ । पक्षे । जुगुच्छइ ॥ गलोपे । दुउच्छइ । दुउञ्छइ । जुउच्छइ ॥

---

१ B तत्रैवोदाहियते. २ B °धा भ°. ३ B भवने. ४ B °तिष्ठिता इ°. ५ B निधर°. ६ B जुगुप्सइ.

बुभुक्षि-वीज्योर्णीरव-वोज्जौ ॥ ५ ॥

बुभुक्षेराचारक्विबन्तस्य च वीजेर्यथासंख्यमेतावादेशौ वा भवतः ॥ णीरवइ । बुहुक्खइ । वोज्जइ । वीजइ ॥

ध्या-गोर्झा-गौ ॥ ६ ॥

अनयोर्यथासंख्यं झा गा इत्यादेशौ भवतः ॥ झाइ । झाअइ । णिज्झाइ । णिज्झाअइ । निपूर्वो दर्शनार्थः । गाइ । गायइ । झाणं । गाणं ॥

ज्ञो जाण-मुणौ ॥ ७ ॥

जानातेर्जाण मुण इत्यादेशौ भवतः ॥ जाणइ । मुणइ । बहुलाधिकारात्क्वचिद्विकल्पः । जाणिअं । णायं । जाणिऊण । णाऊण । जाणणं । णाणं । *मणइ इति तु मन्यतेः ॥*

उदो ध्मो धुमा ॥ ८ ॥

उदः परस्य ध्मो धातोर्धुमा इत्यादेशो भवति ॥ उद्धुमाइ ॥

श्रदो धो दहः ॥ ९ ॥

श्रदः परस्य दधातेर्दह इत्यादेशो भवति ॥ सद्दहइ । सद्दहमाणो जीवो ॥

पिबेः पिज्ज-डल्ल-पट्ट-घोट्टाः ॥ १० ॥

पिबतेरेते चत्वार आदेशा वा भवन्ति ॥ पिज्जइ । डल्लइ । पट्टइ । घोट्टइ । पिअइ ॥

उद्वातेरोरुम्मा वसुआ ॥ ११ ॥

उत्पूर्वस्य वातेः ओरुम्मा वसुआ इत्येतावादेशौ वा भवतः ॥ ओरुम्माइ । वसुआइ । उव्वाइ ॥

---

१ B बुभुक्षुवीजेर्णी°. २ A बहु°. ३ A °इ । निपू°. ४ B णणइ इति तु मन्यते°. ५ B ध्याधा°. B °हुम°. ७ B हुहइ. ८ Our Sūtra and Kumārapālacarita Mss read के instead of ते in Sūtras 11, 12 & 14 ९ B इत्यादे°.

निद्रातेरोहीरोङ्घौ ॥ १२ ॥

निपूर्वस्य द्रातेः ओहीर उंघ इत्यादेशौ वा भवतः ॥ ओहीरइ । उंघइ । निद्दाइ ॥

आघ्रेराइग्घः ॥ १३ ॥

आजिघ्रतेराइग्घ इत्यादेशो वा भवति ॥ आइग्घइ । अग्घाइ ॥

स्नातेरब्भुत्तः ॥ १४ ॥

स्नातेरब्भुत्त इत्यादेशो वा भवति ॥ अब्भुत्तइ । ण्हाइ ॥

समः स्त्यः खाः ॥ १५ ॥

संपूर्वस्य स्त्यायतेः खा इत्यादेशो भवति ॥ संखाइ । संखायं ॥

स्थष्ठा-थक्क-चिट्ठ-निरप्पाः ॥ १६ ॥

तिष्ठतेरेते चत्वार आदेशा भवन्ति ॥ ठाइ । ठाअइ । ठाणं । पट्ठिओ । उट्ठिओ । पट्ठाविओ । उट्ठाविओ । थक्कइ । चिट्ठइ । चिट्ठिऊण । निरप्पइ ॥ बहुलाधिकारात्क्वचिन्न भवति । थिअं । थाणं । पत्थिओ । उत्थिओ । थाऊण ॥

उदष्ठ-कुक्कुरौ ॥ १७ ॥

उदः परस्य तिष्ठतेः ठ कुक्कुर इत्यादेशौ भवतः ॥ उट्ठइ । उक्कुक्कुरइ ॥

म्लेर्वा-पव्वायौ ॥ १८ ॥

म्लायतेर्वा पव्वाय इत्यादेशौ वा भवतः ॥ वाइ । पव्वायइ । मिलाइ ॥

निर्मो निम्माण-निम्मवौ ॥ १९ ॥

निर्पूर्वस्य मिमीतेरेतावादेशौ[13] भवतः ॥ निम्माणइ । निम्मवइ ॥

---

१ Our Sūtra and Kumārapālacarita Mss. read के instead of ते in Sūtras 11, 12 & 14. २ B °हीरोङ्घौ. ३ B ओङ्घ. ४ B इत्येतावादे°. ५ B ओङ्घइ. ६ B आग्घा°. ७ PB °ग्घाअइ. ८ B खा ॥ ९ B °शो वा भ°. १० B मन्नाइय. ११ B °ओ । था°. १२ B वकुकुरइ. १३ A °शौ वा भ°.

**क्षेर्णिज्झरो वा ॥ २० ॥**

क्षयतेर्णिज्झर इत्यादेशो वा भवति ॥ णिज्झरइ । पक्षे । झिज्जइ ॥

**छदेर्णेर्णुम-नूम-सन्नुम-ढक्कौम्वाल-पव्वालाः ॥ २१ ॥**

छदेर्ण्यन्तस्य एते षडादेशा वा भवन्ति ॥ णुमइ । नूमइ । णत्वे णूमइ । सन्नुमइ । ढक्कइ । ओम्वालइ । पव्वालइ । छायइ ॥

**निवृपत्योर्णिहोडः ॥ २२ ॥**

निवृगः पतेश्च ण्यन्तस्य णिहोड इत्यादेशो वा भवति ॥ णिहोडइ । पक्षे । निवारेइ । पाडेइ ॥

**दूङो दूमः ॥ २३ ॥**

दूङो ण्यन्तस्य दूम इत्यादेशो भवति ॥ दूमेइ मज्झ हिअयं ॥

**धवलेर्दुमः ॥ २४ ॥**

धवलयतेर्ण्यन्तस्य दुमादेशो वा भवति ॥ दुमइ । धवलइ ॥ स्वराणां स्वरा (बहुलम्)[४.२३८] इति दीर्घत्वमपि । दूमिअं । धवलितमित्यर्थः ॥

**तुलेरोहामः ॥ २५ ॥**

तुलेर्ण्यन्तस्य ओहाम इत्यादेशो वा भवति ॥ ओहामइ । तुलइ ॥

**विरिचेरोलुण्डोल्लुण्ड-पल्हत्थाः ॥ २६ ॥**

विरेचयतेर्ण्यन्तस्य ओलुण्डादयस्त्रय आदेशा वा भवन्ति ॥ ओलुण्डइ । उल्लुण्डइ । पल्हत्थइ । विरेअइ ॥

**तडेराहोड-विहोडौ ॥ २७ ॥**

तडेर्ण्यन्तस्य एतावादेशौ वा भवतः ॥ आहोडइ । विहोडइ । पक्षे । ताडेइ ॥

---

१ PB निवृप°. २ P निवृग॰. ३ B विरेचो. ४ B °य आ°. ५ AB °शा भ°.

मिश्रेर्वीसाल-मेलवौ ॥ २८ ॥

मिश्रयतेर्ण्यन्तस्य वीसाल मेलव इत्यादेशौ वा भवतः ॥ वीसालइ । मेलवइ । मिस्सइ ॥

उद्धूलेर्गुण्ठः ॥ २९ ॥

उद्धूलेर्ण्यन्तस्य गुण्ठ इत्यादेशो वा भवति ॥ गुण्ठइ । पक्षे । उद्धूलेइ ॥

भ्रमेस्तालिअण्ट-तमाडौ ॥ ३० ॥

भ्रमयतेर्ण्यन्तस्य तालिअण्ट तमाड इत्यादेशौ वा भवतः ॥ तालिअण्टइ । तमाडइ । भामेइ । भमाडेइ । भमावेइ ॥

नशेर्विउड-नासव-हारव-विप्पगाल-पलावाः ॥ ३१ ॥

नशेर्ण्यन्तस्य एते पञ्चादेशा वा भवन्ति । विउडइ । नासवइ । हारवइ । विप्पगालइ । पलावइ । पक्षे । नासइ ॥

दृशेर्दाव-दंस-दक्खवाः ॥ ३२ ॥

दृशेर्ण्यन्तस्य एते त्रय आदेशा वा भवन्ति ॥ दावइ । दंसइ । दक्खवइ । दरिसइ ॥

उद्घटेरुग्गः ॥ ३३ ॥

उत्पूर्वस्य घटेर्ण्यन्तस्य उग्ग इत्यादेशो वा भवति ॥ उग्गइ । उग्घाडइ ॥

स्पृहः सिहः ॥ ३४ ॥

स्पृहो ण्यन्तस्य सिह इत्यादेशो वा भवति ॥ सिहइ ॥

संभावेरासंघः ॥ ३५ ॥

संभावयतेरासङ्घ इत्यादेशो भवति ॥ आसङ्घइ । संभावइ ॥

---

१ B भ्रमते°. २ B °डइ. ३ B °प्पइ । गा°. ४ PB °इ । ना°. ५ B स्पृहेर्ण्यंत°. ६ B °शो वा भ°.

### उन्नमेरुत्थंघोल्लाल-गुलुगुञ्छोप्पेलाः ॥ ३६ ॥

उत्पूर्वस्य नमेर्ण्यन्तस्य एते चत्वार आदेशा वा भवन्ति ॥ उत्थंघइ । उल्लालइ । गुलुगुञ्छइ । उप्पेलइ । उन्नामइ ॥

### प्रस्थापेः पट्ठव-पेण्डवौ ॥ ३७ ॥

प्रपूर्वस्य तिष्ठतेर्ण्यन्तस्य पट्ठव पेण्डव इत्यादेशौ वा भवतः ॥ पट्ठवइ । पेण्डवइ । पट्ठावइ ॥

### विज्ञपेर्वोक्काबुक्कौ ॥ ३८ ॥

विपूर्वस्य जानातेर्ण्यन्तस्य वोक्क अवुक्क इत्यादेशौ वा भवतः ॥ वोक्कइ । अवुक्कइ । विण्णवइ ॥

### अर्पेरल्लिव-चच्चुप्प-पणामाः ॥ ३९ ॥

अर्पेर्ण्यन्तस्य एते त्रय आदेशा वा भवन्ति ॥ अल्लिवइ । चच्चुप्पइ । पणामइ । पक्षे । अप्पेइ ॥

### यापेर्जवः ॥ ४० ॥

यातेर्ण्यन्तस्य जव इत्यादेशो वा भवति ॥ जवइ जावेइ ॥

### प्लावेरोम्वाल-पव्वालौ ॥ ४१ ॥

प्लवतेर्ण्यन्तस्य एतावादेशौ वा भवतः ॥ ओम्वालइ । पव्वालइ । पावेइ ॥

### विकोशेः पक्खोडः ॥ ४२ ॥

विकोशयतेर्नामधातोर्ण्यन्तस्य पक्खोड इत्यादेशो वा भवति ॥ पक्खोडइ । विकोसइ ॥

### रोमन्थेरोग्गाल-वग्गोलौ ॥ ४३ ॥

रोमन्थेर्नामधातोर्ण्यन्तस्य एतावादेशौ वा भवतः ॥ ओग्गालइ । वग्गोलइ । रोमन्थइ ॥

---

१ B °त्थघो°. २ P गुलगु°. ३ B उच्छघ° ४ AB उघावइ ५ AB विज्ञपे° ६ PB इत्येतावादे° ७ B चावुक्कइ ८ A यातेर्जव ९ B°इ। पावेइ.

कमेर्णिहुवः ॥ ४४ ॥

कमेः स्वार्थण्यन्तस्य णिहुव इत्यादेशो वा भवति ॥ णिहुवइ । कामेइ ॥

प्रकाशेर्णुव्वः ॥ ४५ ॥

प्रकाशेर्ण्यन्तस्य णुव्व इत्यादेशो वा भवति ॥ णुव्वइ । पयासेइ ॥

कम्पेर्विच्छोलः ॥ ४६ ॥

कम्पेर्ण्यन्तस्य विच्छोल इत्यादेशो वा भवति ॥ विच्छोलइ । कम्पेइ ॥

आरोपेर्वलः ॥ ४७ ॥

आरुहेर्ण्यन्तस्य वल इत्यादेशो वा भवति ॥ वलइ । आरोवेइ ॥

दोले रङ्खोलः ॥ ४८ ॥

दुलेः स्वार्थे ण्यन्तस्य रङ्खोल इत्यादेशो वा भवति ॥ रङ्खोलइ । दोलइ ॥

रञ्जे रावः ॥ ४९ ॥

रञ्जेर्ण्यन्तस्य राव इत्यादेशो वा भवति ॥ रावेइ । रञ्जेइ ॥

घटेः परिवाडः ॥ ५० ॥

घटेर्ण्यन्तस्य परिवाड इत्यादेशो वा भवति ॥ परिवाडेइ । घडेइ ॥

वेष्टेः परिआलः ॥ ५१ ॥

वेष्टेर्ण्यन्तस्य परिआल इत्यादेशो वा भवति ॥ परिआलेइ । वेढेइ ॥

क्रियः किणो वेस्तु क्के च ॥ ५२ ॥

णेरिति निवृत्तम् । क्रीणातेः किण इत्यादेशो भवति । वेः परस्य तु द्विरुक्तः केक्कश्चकारात्किणश्च भवति ॥ किणइ । विक्केइ । विकिणइ ॥

---

१ PB स्वार्थे ण्य°. २ B रोहेर्ण्य°. ३ P दोले ४ P दनेः ५ A °शो भ°. ६ A द्वेक्क°; B केक्क°.

**भियो भा-बीहौ ॥ ५३ ॥**

बिभेतेरेतावादेशौ भवत. ॥ भाइ । भाइअं । बीहइ । बीहिअं ॥ बहुलाधिकाराद् भीओ ॥

**आलीङोल्ली ॥ ५४ ॥**

आलीयते अल्ली इत्यादेशो भवति ॥ अल्लियइ । अल्लीणो ॥

**निलीङेर्णिलीअ-णिलुक्क-णिरिग्घ-लुक्क-लिक्क-ल्हिक्काः ॥५५॥**

निलीङ एते षडादेशा वा भवन्ति ॥ णिलीअइ । णिलुक्कइ । णिरिग्घइ । लुक्कइ । लिक्कइ । ल्हिक्कइ । निलिज्जइ ॥

**विलीङेर्विरा ॥ ५६ ॥**

विलीङेर्विरा इत्यादेशो वा भवति ॥ विराइ । विलिज्जइ ॥

**रुतेः रुञ्ज-रुण्टौ ॥ ५७ ॥**

रौतेरेतावादेशौ वा भवत. ॥ रुञ्जइ । रुण्टइ । रवइ ॥

**श्रुटेर्हणः ॥ ५८ ॥**

शृणोतेर्हण इत्यादेशो वा भवति ॥ हणइ । सुणइ ॥

**धूगेर्धुवः ॥ ५९ ॥**

धुनातेर्धुव इत्यादेशो वा भवति ॥ धुवइ । धुणइ ॥

**भुवेर्हो-हुव-हवाः ॥ ६० ॥**

भुवो धातोर्हो हुव हव इत्येते आदेशा वा भवन्ति ॥ होइ । होन्ति । हुवइ । हुवन्ति । हवइ । हवन्ति ॥ पक्षे । भवइ । परिहीण-

---

१ A °इ । भाअइ । बीह°. २ B आलीअइ. ३ B °लीङो णि°. ४ P णिलिज्जइ, B निलिज्जिइ ५ B विलीङो विरा. ६ PB विलीङो विरा. ७ P रुङे रु°. ८ P रवइ. ९ P धूगेर्धु°. १० B धुनोते°. ११ A °वा भ°.

विहवो । भविउं । पभवइ । परिभवइ । संभवइ ॥ क्वचिदन्यदपि । उब्भुअइ । भत्तं ॥

अविति हुः ॥ ६१ ॥

विद्वर्जे प्रत्यये भुवो हु इत्यादेशो वा भवति ॥ हुन्ति । भवन् । हुन्तो । अवितीति किम् । होइ ॥

पृथक्-स्पष्टे णिव्वडः ॥ ६२ ॥

पृथग्भूते स्पष्टे च कर्तरि भुवो णिव्वड इत्यादेशो भवति ॥ णिव्वडइ । पृथक् स्पष्टो वा भवतीत्यर्थः ॥

प्रभौ हुप्पो वा ॥ ६३ ॥

प्रभुकर्तृकस्य भुवो हुप्प इत्यादेशो वा भवति ॥ प्रभुत्वं च प्रपूर्वस्यैवार्थः। अङ्गे च्चिअ न पहुप्पइ । पक्षे । पभवेइ ॥

क्ते हूः ॥ ६४ ॥

भुवः क्तप्रत्यये हूरादेशो भवति ॥ हूअं । अणुहूअं । पहूअं ॥

कृगेः कुणः ॥ ६५ ॥

कृगः कुण इत्यादेशो वा भवति ॥ कुणइ । करइ ॥

काणेक्षिते णिआरः ॥ ६६ ॥

काणेक्षितविषयस्य कृगो णिआर इत्यादेशो वा भवति ॥ णिआरइ । काणेक्षितं करोति ॥

निष्टम्भावष्टम्भे णिट्टुह-संदाणं ॥ ६७ ॥

निष्टम्भविषयस्यावष्टम्भविषयस्य च कृगो यथासंख्यं णिट्टुह संदाण

---

1 B भुत्त. 2 P अविति, B अवि॰ति 3 P विद्व॰. 4 B ॰त्ते भ.॰ 5 P भुवन. 6 P अङ्गेच्चि॰, B अविव॰. 7 A विअ. 8 B ॰वे य॰. 9 P हू॰. 10 P हूअ, B हूअं. 11 P हूओ णि॰, B हूअं॰. 12 P हूओ.

इत्यादेशौ वा भवत ॥ णिठ्ठुहइ । निष्टम्भं करोति । संदाणइ । अवष्टम्भं करोति ॥

श्रमे वावम्फः ॥ ६८ ॥

श्रमविषयस्य कृगो वावम्फ इत्यादेशो वा भवति ॥ वावम्फइ । श्रमं करोति ॥

मन्युनौष्ठमालिन्ये णिव्वोलः ॥ ६९ ॥

मन्युना करणेन यदोष्ठमालिन्यं तद्विषयस्य कृगो णिव्वोल इत्यादेशो वा भवति ॥ णिव्वोलइ । मन्युना ओष्ठं मलिनं करोति ॥

शैथिल्य-लम्बने पयल्लः ॥ ७० ॥

शैथिल्यविषयस्य लम्बनविषयस्य च कृगः पयल्ल इत्यादेशो वा भवति ॥ पयल्लइ । शिथिलीभवति लम्बते वा ॥

निष्पाताच्छोटे णीलुञ्छः ॥ ७१ ॥

निष्पतनविषयस्य आच्छोटनविषयस्य च कृगो णीलुञ्छ इत्यादेशो भवति वा ॥ णीलुञ्छइ । निष्पतति । आच्छोटयति वा ॥

क्षुरे कम्मः ॥ ७२ ॥

क्षुरविषयस्य कृगः कम्म इत्यादेशो वा भवति ॥ कम्मइ । क्षुरं करोतीत्यर्थः ॥

चाटौ गुललः ॥ ७३ ॥

चाटुविषयस्य कृगो गुलल इत्यादेशो वा भवति ॥ गुललइ । चाटु करोतीत्यर्थः ॥

---

१ A °शौ भ°. २ B °रोतीत्यर्थं. ३ P कृगो. ४ A °शो भ°. ५ P कृगः. ६ B निष्पत°. ७ A °टनवि°. ८ A °ति । णी°. ९ A °शो भ°.

सरेर्झर-झूर-भर-भल-लढ-विम्हर-सुमर-पयर-पम्हुहाः ॥७४॥

स्मरेरेते नवादेशा वा भवन्ति ॥ झरट । झूरइ । भरइ । भलइ । लढइ । विम्हरइ । सुमरइ । पयरइ । पम्हुहइ । सरइ ॥

विस्मुः पम्हुस-विम्हर-वीसराः ॥ ७५ ॥

विस्मरतेरेते आदेशा भवन्ति ॥ पम्हुसइ । विम्हरइ । वीसरइ ॥

व्याहृगेः कोक्क-पोक्कौ ॥ ७६ ॥

व्याहरतेरेतावादेशौ वा भवतः ॥ कोक्कइ । ह्रस्वत्वे तु कुक्कइ । पोक्कइ । पक्षे । वाहरइ ॥

प्रसरेः पयल्लोवेल्लौ ॥ ७७ ॥

प्रसरतेः पयल्ल उवेल्ल इत्येतावादेशौ वा भवतः ॥ पयल्लइ । उवेल्लइ । पसरइ ॥

महमहो गन्धे ॥७८ ॥

प्रसरतेर्गन्धविषये महमह इत्यादेशो वा भवति ॥ महमहइ मालई । मालईगन्धो पसरइ ॥ गन्ध इति किम् । पसरइ ॥

निस्सरेर्णीहर-नील-धाट-वरहाटाः ॥ ७९ ॥

निस्सरतेरेते चत्वार आदेशा वा भवन्ति ॥ णीहरइ । नीलइ । धाडइ । वरहाडइ । नीसरइ ॥

जाग्रेर्जग्गः ॥ ८० ॥

जागर्तेर्जग्ग इत्यादेशो वा भवति ॥ जग्गइ । पक्षे । जागरइ ॥

व्याप्रेराअड्डः ॥ ८१ ॥

व्याप्रियतेराअड्ड इत्यादेशो वा भवति ॥ आअड्डइ । वावरेइ ॥

---

१ A °पम्हुह . २ P ° हुक्के . ३ A उव्वे°. ४ B मालइ°. ५ B नीह°.
६ B वावारइ.

संवृगेः साहर-साहट्टौ ॥ ८२ ॥

संवृणोतेः साहर साहट्ट इत्यादेशौ वा भवतः ॥ साहरइ । साहट्टइ । संवरइ ॥

आदृङेः सन्नामः ॥ ८३ ॥

आद्रियतेः सन्नाम इत्यादेशो वा भवति ॥ सन्नामइ । आदरइ ॥

प्रहृगेः सारः ॥ ८४ ॥

प्रहरतेः सार इत्यादेशो वा भवति ॥ सारइ । पहरइ ॥

अवतरेरोह-ओरसौ ॥ ८५ ॥

अवतरतेः ओह ओरस इत्यादेशौ वा भवतः ॥ ओहइ । ओरसइ । ओअरइ ॥

शकेश्चय-तर-तीर-पाराः ॥ ८६ ॥

शक्नोतेरेते चत्वार आदेशा वा भवन्ति ॥ चयइ । तरइ । तीरइ । पारइ । सक्कइ ॥ त्यजतेरपि चयइ । हानिं करोति ॥ तरतेरपि तरइ ॥ तीरयतेरपि तीरइ ॥ पारयतेरपि पारेइ । कर्म समाप्नोति ॥

फक्कस्थक्कः ॥ ८७ ॥

फक्कतेस्थक्क इत्यादेशो भवति ॥ थक्कइ ॥

श्लाघः सलहः ॥ ८८ ॥

श्लाघतेः सलह इत्यादेशो भवति ॥ सलहइ ॥

खचेर्वेअडः ॥ ८९ ॥

खचतेर्वेअड इत्यादेशो वा भवति ॥ वेअडइ । खचइ ॥

पचेः सोल्ल-पउलौ ॥ ९० ॥

पचतेः सोल्ल पउल इत्यादेशौ वा भवतः ॥ सोल्लइ । पउलइ । पयइ ॥

१ हो. २ B आदर ३ PB सन्नामेइ ४ B आदरेइ. ५ P °हो ६ A सोमर ७ B °हरइ. ८ A रयमेर°. ९ A तरइ । पार° १० B °उलो ११ B पउल १२ B पउलइ.

मुचेश्छड्डावहेड-मेल्लोस्सिक्क[1]-रेअव-णिल्लुञ्छ[2]-धंसाडाः ॥९१॥

मुञ्चतेरेते[3] सप्तादेशा वा भवन्ति ॥ छड्डइ । अवहेडइ । मेल्लइ । उस्सिक्कइ[4] । रेअवइ । णिल्लुञ्छइ[5] । धंसाडइ । पक्षे । मुअइ ॥

दुःखे णिव्वलः ॥ ९२ ॥

दुःखविषयस्य मुचेः[6] णिव्वल इत्यादेशो वा भवति ॥ णिव्वलेइ[7] । दुःखं मुञ्चतीत्यर्थः ॥

वञ्चेर्वेहव-वेलव-जूरवोमच्छाः ॥ ९३ ॥

वञ्चतेरेते चत्वार आदेशा[8] वा भवन्ति ॥ वेहवइ । वेलवइ । जूरवइ । उमच्छइ । वञ्चइ ॥

रचेरुग्गहावह-विडविड्डाः[9] ॥ ९४ ॥

रचेर्धातोरेते त्रय आदेशा वा भवन्ति ॥ उग्गहइ । अवहइ । विडविड्डइ[10] । रयइ ॥

समारचेरुवहत्थ-सारव-समार-केलायाः ॥ ९५ ॥

समारचेरेते चत्वार आदेशा वा भवन्ति ॥ उवहत्थइ । सारवइ । समारइ । केलायइ । समारयइ ॥

सिचेः[11] सिञ्च-सिम्पौ ॥ ९६ ॥

सिञ्चतेरेतावादेशौ वा भवतः ॥ सिञ्चइ । सिम्पइ । सेअइ ॥

प्रच्छः पुच्छः ॥ ९७ ॥

पृच्छेः[12] पुच्छादेशो भवति ॥ पुच्छइ ॥

गर्जेर्बुक्कः ॥ ९८ ॥

गर्जतेर्बुक्क इत्यादेशो वा भवति ॥ बुक्कइ । गज्जइ ॥

---

१ AB °ल्लोसिक्क°. २ B णिलुञ्छ°. ३ A मुचनेः म°. ४ B उसिक्कइ. ५ B णिच°. ६ B मुचो. ७ B णिवलेइ. ८ B °शा म°. ९ P °विड्डाः. १० P °विडइ. ११ A सिचेः. १२ B प्रच्छेः.

वृपे [1]ढिक्कः ॥ ९९ ॥

वृषकर्तृकस्य गर्जेर्ढिक्क इत्यादेशो[2] वा भवति ॥ ढिक्कइ । वृषभो गर्जति[3] ॥

राजेरग्घ-छज्ज-सह-रीर-रेहाः ॥ १०० ॥

राजेरेते पञ्चादेशा[4] वा भवन्ति ॥ अग्घइ । छज्जइ । सहइ । रीरइ । रेहइ । रायइ ॥

मस्जेराउड्ड-णिउड्ड-बुड्ड-खुप्पाः[5] ॥ १०१ ॥

मज्जतेरेते[6] चत्वार आदेशा वा भवन्ति ॥ आउड्डइ । णिउड्डइ । बुड्डइ । खुप्पइ । मज्जइ ॥

पुञ्जेरारोल-वमालौ ॥ १०२ ॥

पुञ्जेरेतावादेशौ वा भवत[7] ॥ आरोलइ । वमालइ । पुञ्जइ ॥

लस्जेर्जीहः ॥ १०३ ॥

लज्जतेर्जीह इत्यादेशो वा भवति ॥ जीहइ । लज्जइ ॥

तिजेरोसुक्कः ॥ १०४ ॥

तिजेरोसुक्क इत्यादेशो वा भवति ॥ ओसुक्कइ । तेअणं ॥

मृजेरुग्घुस-लुञ्छ पुञ्छ-पुंस-फुंस-पुस-लुह-हुल-रोसाणाः १०५

मृजेरेते नवादेशा वा भवन्ति ॥ उग्घुसइ । लुञ्छइ । पुञ्छइ । पुंसइ । फुंसइ । पुसइ । लुहइ । हुलइ । रोसाणइ । पक्षे । मज्जइ ॥

भञ्जेर्वेमय-मुसुमूर-मूर-सूर-सूड-विर-पविरञ्ज-करञ्ज-नीरञ्जाः ॥ १०६ ॥

भञ्जेरेते नवादेशा वा भवन्ति ॥ वेमयइ । मुसुमूरइ । मूरइ । सूरइ । सूडइ । विरइ । पविरञ्जइ । करञ्जइ । नीरञ्जइ । भञ्जइ ॥

---

१ PB वृषेर्ढि° २ B °शो भ°. ३ B गर्जतीत्यर्थ ४ B °शा भ° ५ P मज्जे° ६ B °डुउडुखुडुखु°. ७ B °ते पव. ८ B °इ । चुड्डइ । खुड्डइ । सु°. ९ B °पुंग १० B मृजते°. ११ A उग्घराइ. १२ B पुगइ १३ A °विरजनीर°.

**अनुव्रजेः पडिअग्गः ॥ १०७ ॥**

अनुव्रजेः पडिअग्ग इत्यादेशो वा भवति ॥ पडिअग्गइ । अणुवच्चइ ॥

**अर्जेर्विढवः ॥ १०८ ॥**

अर्जेर्विढव इत्यादेशो वा भवति ॥ विढवइ । अज्जइ ॥

**युजो जुञ्ज-जुज्ज-जुप्पाः ॥ १०९ ॥**

युजो जुञ्ज जुज्ज जुप्प इत्यादेशा भवन्ति ॥ जुञ्जइ । जुज्जइ । जुप्पइ ॥

**भुजो भुञ्ज-जिम-जेम-कम्माण्ह-चमढ-समाण-चड्डाः ॥ ११० ॥**

भुज एतेष्टादेशा भवन्ति ॥ भुञ्जइ । जिमइ । जेमइ । कम्मेइ । अण्हइ । समाणइ । चमढइ । चड्डइ ॥

**वोपेन कम्मवः ॥ १११ ॥**

उपेन युक्तस्य भुजेः कम्मव इत्यादेशो वा भवति ॥ कम्मवइ । उवहुञ्जइ ॥

**घटेर्गढः ॥ ११२ ॥**

घटतेर्गढ इत्यादेशो वा भवति ॥ गढइ । घडइ ॥

**समो गलः ॥ ११३ ॥**

सम्पूर्वस्य घटतेर्गल इत्यादेशो वा भवति ॥ संगलइ । संघडइ ॥

**हासेन स्फुटेर्मुरः ॥ ११४ ॥**

हासेन करणेन यः स्फुटिस्तस्य मुरादेशो वा भवति ॥ मुरइ । हासेन स्फुटति ॥

**मण्डेश्चिञ्च-चिञ्चअ-चिञ्चिल्ल-रीड-टिविडिक्काः ॥ ११५ ॥**

मण्डेरेते पञ्चादेशा वा भवन्ति ॥ चिञ्चइ । चिञ्चअइ । चिञ्चिल्लइ । रीडइ । टिविडिक्कइ । मण्डइ ॥

---

१ B युजेरेते त्रय आदे°. २ B कम्मइ. ३ P भुजः. ४ B घटइ. ५ B °शो भ°. ६ P मुण्डे°. ७ P मुण्डइ.

तुडेस्तोड-तुट्ट-खुट्ट-खुडोक्खुडोल्लुक्क-णिलुक्क-लुक्कोल्लूराः ॥

तुडेरेते नवादेशा वा भवन्ति ॥ तोडइ । तुट्टइ । खुट्टइ । खुडइ । उक्खुडइ । उल्लुकइ । णिलुक्कइ । लुक्कइ । उल्लूरइ । तुडइ ॥

घूर्णो घुल-घोल-घुम्म-पहल्लाः ॥ ११७ ॥

घूर्णेरेते चत्वार आदेशा भवन्ति ॥ घुलइ । घोलइ । घुम्मइ । पहल्लइ ॥

विवृतेर्ढंसः ॥ ११८ ॥

विवृतेर्ढंस इत्यादेशो वा भवति ॥ ढंसइ । विवट्टइ ॥

क्वथेरट्टः ॥ ११९ ॥

क्वथेरट्ट इत्यादेशो वा भवति ॥ अट्टइ । कढइ ॥

ग्रन्थो गण्ठः ॥ १२० ॥

ग्रन्थेर्गण्ठ इत्यादेशो भवति ॥ गण्ठइ । गण्ठी ॥

मन्थेर्घुसल-विरोलौ ॥ १२१ ॥

मन्थेर्घुसल विरोल इत्यादेशौ वा भवतः ॥ घुसलइ । विरोलइ। मन्थइ।

ह्लादेरवअच्छः ॥ १२२ ॥

ह्लादतेर्ण्यन्तस्याण्यन्तस्य च अवअच्छ इत्यादेशो भवति ॥ अवअच्छइ । ह्लादते । ह्लादयति वा ॥ इकारो ण्यन्तस्यापि परिग्रहार्थः ॥

नेः सदो मज्जः ॥ १२३ ॥

निपूर्वस्य सदो मज्ज इत्यादेशो भवति ॥ अत्ता एत्थ णुमज्जइ ॥

छिदेर्दुहाव-णिच्छल्ल-णिज्झोड-णिव्वर-णिल्लूर-लूराः ॥१२४

छिदेरेते षडादेशा वा भवन्ति ॥ दुहावइ । णिच्छल्लइ । णिज्झोडइ । णिव्वरइ । णिल्लूरइ । लूरइ । पक्षे । छिन्दइ ॥

---

१ B °णिलुक्क°. २ B °क्कोच्छूराः. ३ B णिलुक्कइ. ४ B उच्छूरइ. ५ B घूर्णेर्घु°. ६ B मंथो ग°. ७ B °र्ढौ भ°. ८ B °इ॥ ह्ला°. ९ B ह्ला°. १० B °अस्य°. ११ B सदेर्म°.

आङा ओअन्दोद्दालौ ॥ १२५ ॥

आङा युक्तस्य छिदेरोअन्द उद्दाल इत्यादेशौ वा भवतः ॥ ओअन्दइ । उद्दालइ । अच्छिन्दइ ॥

मृदो मल-मढ-परिहट्ट-खड्ड-चड्ड-मड्ड-पन्नाडाः ॥ १२६ ॥

मृद्नातेरेते सप्तादेशा भवन्ति ॥ मलइ । मढइ । परिहट्टइ । खड्डइ । चड्डइ । मड्डइ । पन्नाडइ ॥

स्पन्देश्चुलुचुलः ॥ १२७ ॥

स्पन्देश्चुलुचुल इत्यादेशो वा भवति ॥ चुलुचुलइ । फन्दइ ॥

निरः पदेर्वलः ॥ १२८ ॥

निर्पूर्वस्य पदेर्वल इत्यादेशो वा भवति ॥ निव्वलइ । निप्पज्जइ ॥

विसंवदेर्विअट्ट-विलोट्ट-फंसाः ॥ १२९ ॥

विसंपूर्वस्य वदेरेते त्रय आदेशा वा भवन्ति ॥ विअट्टइ । विलोट्टइ । फंसइ । विसंवयइ ॥

शदो झड-पक्खोडौ ॥ १३० ॥

शीयतेरेतावादेशौ भवतः ॥ झडइ । पक्खोडइ ॥

आक्रन्देर्णीहरः ॥ १३१ ॥

आक्रन्देर्णीहर इत्यादेशो वा भवति ॥ णीहरइ । अक्कन्दइ ॥

खिदेर्जूर-विसूरौ ॥ १३२ ॥

खिदेरेतावादेशौ वा भवतः ॥ जूरइ । विसूरइ । खिज्जइ ॥

रुधेरुत्थङ्घः ॥ १३३ ॥

रुधेरुत्थङ्घ इत्यादेशो वा भवति ॥ उत्थङ्घइ । रुन्धइ ॥

---

१ B आच्छिदइ. २ A °शा वा भ°. ३ A निप्फ°. ४ B ज्झड°. ५ B °इ ॥ खिदे°. ६ P °दत्त°. ७ P उत्त°.

निषेधेर्हक्कः ॥ १३४ ॥

निषेधतेर्हक्क इत्यादेशो वा भवति ॥ हक्कइ । निसेहइ ॥

क्रुधेर्जूरः ॥ १३५ ॥

क्रुधेर्जूर इत्यादेशो भवति ॥ जूरइ । कुज्झइ ॥

जनो जा-जम्मौ ॥ १३६ ॥

जायतेर्जा जम्म इत्यादेशौ भवतः ॥ जाअइ । जम्मइ ॥

तनेस्तड-तड्ड तड्डव-विरल्लाः ॥ १३७ ॥

तनेरेते चत्वार आदेशा वा भवन्ति ॥ तडइ । तड्डइ । तड्डवइ । विरल्लइ । तणइ ॥

तृपस्थिप्पः ॥ १३८ ॥

तृप्यतेस्थिप्प इत्यादेशो भवति ॥ थिप्पइ ॥

उपसर्पेरल्लिअः ॥ १३९ ॥

उपपूर्वस्य सृपे कृतगुणस्य अल्लिअ इत्यादेशो वा भवति ॥ अल्लिअइ । उवसप्पइ ॥

संतपेर्झङ्खः ॥ १४० ॥

संतपेर्झङ्ख इत्यादेशो वा भवति ॥ झङ्खइ । पक्षे । संतप्पइ ॥

व्यापेरोअग्गः ॥ १४१ ॥

व्याप्नोतेरोअग्ग इत्यादेशो वा भवति ॥ ओअग्गइ । वावेइ ॥

क्षिपेर्गलत्थाड्डक्ख-सोल्ल-पेल्ल-णोल्ल-छुह-हुल-परी-घत्ताः ॥

क्षिपेरेते नवादेशा वा भवन्ति ॥ गलत्थइ । अड्डक्खइ । सोल्लइ । पेल्लइ । णोल्लइ । ह्रस्वत्वे तु णुल्लइ । छुहइ । हुलइ । परीइ । घत्तइ । खिवइ ॥

उत्क्षिपेर्गुलगुञ्छोत्थंघाल्लत्थोब्भुत्तोस्सिक्क-हक्खुवाः ॥१४४

उत्पूर्वस्य क्षिपेरेते षडादेशा वा भवन्ति ॥ गुलगुञ्छइ । उत्थङ्घइ । अल्लत्थइ । उब्भुत्तइ । उस्सिक्कइ । हक्खुवइ । उक्खिवइ ॥

आक्षिपेर्णीरवः ॥ १४५ ॥

आङ्पूर्वस्य क्षिपेर्णीरव इत्यादेशो वा भवति ॥ णीरवइ । अक्खिवइ ॥

स्वपेः कमवस-लिस-लोट्टाः ॥ १४६ ॥

स्वपेरेते त्रय आदेशा वा भवन्ति ॥ कमवसइ । लिसइ । लोट्टइ । सुअइ ॥

वेपेरायम्बायज्झौ ॥ १४७ ॥

वेपेरायम्ब आयज्झ इत्यादेशौ वा भवतः ॥ आयम्बइ । आयज्झइ । वेवइ ॥

विलपेर्झङ्ख-वडवडौ ॥ १४८ ॥

विलपेर्झङ्ख वडवड इत्यादेशौ वा भवतः ॥ झङ्खइ । वडवडइ । विलवइ ॥

लिपो लिम्पः ॥ १४९ ॥

लिम्पतेर्लिम्प इत्यादेशो भवति ॥ लिम्पइ ॥

गुप्येर्विर-णडौ ॥ १५० ॥

गुप्यतेरेतावादेशौ वा भवतः ॥ विरइ । णडइ । पक्षे । गुप्पइ ॥

---

१P B °त्ते णु°. २ A गुलगु°. ३ P °गुलत्थो°. ४ A °से गडदक्खुव. ५ B °हक्खुमा ६ A B गुलगु°. ७ B हक्खुवइ ८ B कमवसम° ९ B लिप°. १० P गुपेर्वि°.

भाराक्रान्ते नमेर्णिसुढः ॥ १५८ ॥

भाराक्रान्ते कर्तरि नमेर्णिसुढ इत्यादेशो भवति ॥ णिसुढई । पक्षे । णवइ । भाराक्रान्तो नमतीत्यर्थः ॥

विश्रमेर्णिव्वा ॥ १५९ ॥

विश्राम्यतेर्णिव्वा इत्यादेशो वा भवति ॥ णिव्वाइ । वीसमइ ॥

आक्रमेरोहावोत्थारच्छुन्दाः ॥ १६० ॥

आक्रमेतेरेते त्रय आदेशा वा भवन्ति ॥ ओहावइ । उत्थारइ । छुन्दइ । अक्कमइ ॥

भ्रमेष्टिरिटिल्ल-ढुण्ढुल्ल-ढण्ढल्ल-चक्कम्म-भम्मड-भमड-भमाड-तल-अण्ट-झण्ट-झम्प-भुम-गुम-फुम-फुस-ढुम-ढुस-परी-पराः॥१६१॥

भ्रमेरेतेष्टादशादेशा वा भवन्ति ॥ टिरिटिल्लइ । ढुण्ढुल्लइ । ढण्ढल्लइ । चक्कम्मइ । भम्मडइ । भमडइ । भमाडइ । तलअण्टइ । झण्टइ । झम्पइ । भुमइ । गुमइ । फुमइ । फुसइ । ढुमइ । ढुसइ । परीइ । परइ । भमइ ॥

गमेरई-अइच्छाणुवज्जावज्जसोक्कुसाक्कुस-पच्चड्ड-पच्छन्द-णिम्मह-णी-णीण-णीलुक्क-पदअ-रम्भ-परिअल्ल-वोल-परिअल-णिरिणास-णिवहावसेहावहराः ॥ १६२ ॥

गमेरेते एकविंशतिरादेशा वा भवन्ति । अईइ । अइच्छइ । अणुवज्जइ । अवज्जसइ । उक्कुसइ । अक्कुसइ । पच्चड्डइ । पच्छन्दइ । णिम्महइ । णीइ । णीणइ । णीलुक्कइ । पदअइ । रम्भइ । परिअल्लइ । वोलइ । परिअलइ । णिरिणासइ । णिवहइ । अवसेहइ । अवहरइ ।

---

१ AB इ । भा°. २ B आक्रान्ते°. ३ B °वोच्छार°. ४ B भ्रमेरे°. ५ B ढण्ढु°. ६ B °म्भमडभम्माडभमाडन°. ७ A °ण्ट°. ८ B भमाडइ भम्माडइ. ९ A ढण्ढइ. १० B °वज्जसोक्कुस°. ११ B अवज्जसइ.

पक्षे । गच्छइ ॥ हम्मइ । णिहम्मइ । णीहम्मइ । आहम्मइ । पहम्मइ इत्येते तु हम्म गतावित्यस्यैव भविष्यन्ति ॥

आङा अहिपच्चुअः ॥ १६३ ॥

आङा सहितस्य गमे अहिपच्चुअ इत्यादेशो वा भवति ॥ अहिपच्चुअइ । पक्षे । आगच्छइ ॥

समा अब्भिडः ॥ १६४ ॥

समा युक्तस्य गमे अब्भिड इत्यादेशो वा भवति ॥ अब्भिडइ । संगच्छइ ॥

अभ्याङोम्मत्थः ॥ १६५ ॥

अभ्याङ्भ्यां युक्तस्य गमे उम्मत्थ इत्यादेशो वा भवति ॥ उम्मत्थइ । अब्भागच्छइ । अभिमुखमागच्छतीत्यर्थः ॥

प्रत्याङा पलोट्टः ॥ १६६ ॥

प्रत्याङ्भ्यां युक्तस्य गमे पलोट्ट इत्यादेशो वा भवति ॥ पलोट्टइ । पच्चागच्छइ ॥

शमेः पडिसा परिसामौ ॥ १६७ ॥

शमेरेतावादेशौ वा भवतः ॥ पडिसाइ । परिसामइ । समइ ॥

रमेः संखुड्ड खेड्डोब्भाव किलिकिञ्च कोट्टुम-मोट्टाय-णीसर-वेल्लाः ॥ १६८ ॥

रमेरेतेष्टादेशा वा भवन्ति ॥ संखुड्डइ । खेड्डइ । उब्भावइ । किलिकिञ्चइ । कोट्टुमइ । मोट्टायइ । णीसरइ । वेल्लइ । रमइ ॥

1 A °माब्भिडइ

## पूरेरग्घाडाग्घवोद्धुमाङ्गुमाहिरेमाः ॥ १६९ ॥

पूरेरेते पञ्चादेशा वा भवन्ति ॥ अग्घाडइ । अग्घवइ । उद्धुमाइ । अङ्गुमइ । अहिरेमइ । पूरइ ॥

## त्वरस्तुवर-जअडौ ॥ १७० ॥

त्वरतेरेतावादेशौ भवतः ॥ तुवरइ ॥ जअडइ । तुवरन्तो । जअडन्तो ।

## त्यादिशत्रोस्तूरः ॥ १७१ ॥

त्वरतेस्त्यादौ शतरि च तूर इत्यादेशो भवति ॥ तूरइ । तूरन्तो ॥

## तुरोत्यादौ ॥ १७२ ॥

त्वरोत्यादौ तुर आदेशो भवति ॥ तुरिओ । तुरन्तो ॥

## क्षरः खिर-झर-पज्झर पचड-णिच्चल-णिट्टुआः ॥ १७३ ॥

क्षरेरेते षड् आदेशा भवन्ति ॥ खिरइ । झरइ । पज्झरइ । पचडइ । णिच्चलइ । णिट्टुअइ ॥

## उच्छल उत्थल्लः ॥ १७४ ॥

उच्छलतेरुत्थल्ल इत्यादेशो भवति ॥ उत्थल्लइ ॥

## विगलेस्थिप्प णिट्टुहा ॥ १७५ ॥

विगलतेरेतावादेशौ वा भवत. । थिप्पइ । णिट्टुहइ । विगलइ ।

## दलि-वल्योर्विसट्ट-वम्फौ ॥ १७६ ॥

दलेर्वलेश्च यथासंख्यं विसट्ट वम्फ इत्यादेशौ वा भवत ॥ विसट्टइ । वम्फइ । पक्षे दलइ । वलइ ॥

---

१ B होग्घ°. २ B उग्घव. ३ B उद्धुमइ. ४ B °ज्झर°. ५ B °च्चल°. ६ B °ट्टु°. ७ B °च्छल्ल°. ८ B °१°.

**भ्रंशेः फिड-फिट्ट-फुड-फुट्ट-चुक्क-भुल्लाः ॥ १७७ ॥**

भ्रंशेरेते षडादेशा वा भवन्ति ॥ फिडइ । फिट्टइ । फुडइ । फुट्टइ । चुक्कइ । भुल्लइ । पक्षे । भंसइ ॥

**नशेर्णिरणास-णिवहावसेह-पडिसा-सेहावहराः ॥ १७८ ॥**

नशेरेते षडादेशा वा भवन्ति ॥ णिरणासइ । णिवहइ । अवसेहइ । पडिसाइ । सेहइ । अवहरइ । पक्षे । नस्सइ ॥

**अवात्काशो वासः ॥ १७९ ॥**

अवात्परस्य काशो वास इत्यादेशो भवति ॥ ओवासइ ॥

**संदिशेरप्पाहः ॥ १८० ॥**

संदिशतेरप्पाह इत्यादेशो वा भवति । अप्पाहइ । संदिसइ ॥

**दृशो निअच्छपेच्छावयच्छावयज्झ-वेज्ज-सव्वव-देक्खौअक्खा-वेक्खावअक्ख-पुलोअ-पुलअ-निआवआस-पासाः ॥१८१॥**

दृशेरेते पञ्चदशादेशा भवन्ति ॥ निअच्छइ । पेच्छइ । अवयच्छइ । अवयज्झइ । वेज्जइ । सव्ववइ । देक्खइ । ओअक्खइ । अवेक्खइ । अवअक्खइ । पुलोएइ । पुलएइ । निअइ । अवआसइ । पासइ ॥ निज्झाअइ इति तु निर्ध्यायतेः स्वरादत्यन्ते भविष्यति ॥

**स्पृशः फास-फंस-फरिस-छिव-छिहालुङ्खालिहाः ॥ १८२ ॥**

स्पृशतेरेते सप्त आदेशा भवन्ति ॥ फासइ । फंसइ । फरिसइ । छिवइ । छिहइ । आलुङ्खइ । आलिहइ ॥

---

१ B निरिणा°. २ AB णिरिणा°. ३ B °चज्जसव्वदे°. ४ B °चक्खा°. ५ B °पुलोए°. ६. °न्नि का. ७ B चज्ज. ८ B सव. ९ B अच°. १० B °अ६. ११ B निपूर्वस्य ध्यायते. स्वरादायतेर्भ°.

## प्रविशे रिअः ॥ १८३ ॥

प्रविशेः रिअ इत्यादेशो वा भवति ॥ रिअइ । पविसइ ॥

## प्रान्मृश-मुषोर्म्हुसः ॥ १८४ ॥

प्रात्परयोर्मृशतिमुष्णात्योर्म्हुस इत्यादेशो भवति ॥ पम्हुसइ । प्रमृशति । प्रमुष्णाति वा ॥[1]

## पिषेर्णिवह-णिरिणास-णिरिणज्ज-रोञ्च-चड्डाः ॥ १८५ ॥

पिषेरेते पञ्चादेशा भवन्ति वा । णिवहइ[2] । णिरिणासइ । णिरिणज्जइ[3] । रोञ्चइ । चड्डइ । पक्षे पीसइ ॥

## भषेर्भुक्कः ॥ १८६ ॥

भषेर्भुक्क इत्यादेशो वा भवति । भुक्कइ । भसइ ॥

## कृपेः कड्ढ-साअड्ढाञ्चाणच्छायञ्छाइञ्छाः ॥ १८७ ॥

कृपेरेते षडादेशा वा भवन्ति ॥ कड्ढइ[4] । साअड्ढइ[5][6] । अञ्चइ । अणच्छइ । अयञ्छइ । आइञ्छइ । पक्षे । करिसइ ॥

## असावक्खोडः ॥ १८८ ॥

असिविषयस्य कृपेरक्खोड इत्यादेशो भवति ॥ अक्खोडेइ[7] । असिं कोशात्कर्षतीत्यर्थः ॥

## गवेषेर्डुण्डुल्ल-ढण्ढोल-गमेस-घत्ताः ॥ १८९ ॥

गवेषेरेते चत्वार आदेशा वा भवन्ति ॥ डुण्डुल्लइ । ढण्ढोलइ । गमेसइ । घत्तइ । गवेसइ ॥

---

१ B °मुष्णाति ॥. २ B °णिव्वहइ°. ३ B °रिणिज्ज°. ४ B कड्ढ°. ५ B °साअड्ढा°. ६ B साअड्ढइ. ७ B °क्खोडइ

श्लिषेः सामग्गावयास-परिअन्ताः ॥ १९० ॥

श्लिष्येतेरेते त्रय आदेशा वा भवन्ति ॥ सामग्गइ ।अवयासइ । परिअन्तइ । सिलेसइ ॥

म्रक्षेश्चोप्पडः ॥ १९१ ॥

म्रक्षेश्चोप्पड इत्यादेशो वा भवति ॥ चोप्पडइ । मक्खइ ॥

काङ्क्षेराहाहिलङ्घाहिलङ्ख-वच्च-वम्फ-मह-सिह-विलुम्पाः॥१९२

काङ्क्षतेरेतेष्टादेशा वा भवन्ति ॥ आहइ । अहिलङ्घइ । अहिलङ्खइ । वच्चइ । वम्फइ । महइ । सिहइ । विलुम्पइ । कङ्खइ ॥

प्रतीक्षेः सामय-विहीर-विरमालाः ॥ १९३ ॥

प्रतीक्षेरेते त्रय आदेशा वा भवन्ति ॥ सामयइ । विहीरइ । विरमालइ । पाडिक्खइ ॥

तक्षेस्तच्छ-चच्छ-रम्प-रम्फाः ॥ १९४ ॥

तक्षेरेते चत्वार आदेशा वा भवन्ति ॥ तच्छइ । चच्छइ । रम्पइ । रम्फइ । तक्खइ ॥

विकसेः कोआस-वोसट्टौ ॥ १९५ ॥

विकसेरेतावादेशौ वा भवतः ॥ कोआसइ । वोसट्टइ । विअसइ ॥

हसेर्गुञ्जः ॥ १९६ ॥

हसेर्गुञ्ज इत्यादेशो वा भवति ॥ गुञ्जइ । हसइ ॥

स्रंसेर्ल्हस-डिम्भौ ॥ १९७ ॥

स्रंसेरेतावादेशौ वा भवतः ॥ ल्हसइ । परिल्हसइ सलिलवसणं । डिम्भइ । संसइ ॥

---

१ B °अन्ताः. २ A श्लिषेरे°. ३ B °अंतइ. ४ A म्रक्षेश्चो°. ५ A °लुम्पा . ६ A आहिइ; B आहाइ. ७ A °लुफइ. ८ A °रफा ॥ ९ B °इ । सलिलवसणं डिम्भइ.

त्रसेर्डर-बोज्ज-वज्जाः ॥ १९८ ॥

त्रसेरेते त्रय आदेशा वा भवन्ति ॥ डरइ । बोज्जइ । वज्जइ । तसइ ॥

न्यसो णिम-णुमौ ॥ १९९ ॥

न्यस्यतेरेतावादेशौ भवतः ॥ णिमइ । णुमइ ॥

पर्यसः पलोट्ट पल्लट्ट-पल्हत्थाः ॥ २०० ॥

पर्यस्यतेरेते त्रय आदेशा भवन्ति ॥ पलोट्टइ । पल्लट्टइ । पल्हत्थइ ॥

निःश्वसेर्झङ्खः ॥ २०१ ॥

निःश्वसेर्झङ्ख इत्यादेशो वा भवन्ति ॥ झङ्खइ । नीससइ ॥

उल्लसेरूसलोसुम्भ-णिल्लस-पुलआअ-गुञ्जोल्लारोआः॥२०२॥

उल्लसेरेते षडादेशा वा भवन्ति ॥ ऊसलइ । ऊसुम्भइ । णिल्लसइ । पुलआअइ । गुञ्जोल्लइ । ह्रस्वत्वे तु । गुञ्जुल्लइ । आरोअइ । उल्लसइ ॥

भासेर्भिसः ॥ २०३ ॥

भासेर्भिस इत्यादेशो वा भवति ॥ भिसइ । भासइ ॥

ग्रसेर्घिसः ॥ २०४ ॥

ग्रसेर्घिस इत्यादेशो वा भवति ॥ घिसइ । गसइ ॥

अवाद्गाहेर्वाहः ॥ २०५ ॥

अवात्परस्य गाहेर्वाह इत्यादेशो वा भवति ॥ ओवाहइ । ओगाहइ ॥

आरुहेश्चड-वलग्गौ ॥ २०६ ॥

आरुहेरेतावादेशौ वा भवतः ॥ चडइ । वलग्गइ । आरुहइ ॥

मुहेर्गुम्म-गुम्मडौ ॥ २०७ ॥

मुहेरेतावादेशौ वा भवतः ॥ गुम्मइ । गुम्मडइ । मुज्झइ ॥

---

१ B उवा°. २ B उगा°.

गमिष्यमासां छः ॥ २१५ ॥

एषामन्त्यस्य छो भवति ॥ गच्छइ । इच्छइ । जच्छइ । अच्छइ ॥

छिदि-भिदो न्दः ॥ २१६ ॥

अनयोरन्त्यस्य नकाराक्रान्तो दकारो भवति ॥ छिन्दइ । भिन्दइ ॥

युध-बुध-गृध-क्रुध-सिध-मुहां ज्झः ॥ २१७ ॥

एषामन्त्यस्य द्विरुक्तो झो भवति ॥ जुज्झइ । बुज्झइ । गिज्झइ । कुज्झइ । सिज्झइ । मुज्झइ ॥

रुधो न्ध-म्भौ च ॥ २१८ ॥

रुधोन्त्यस्य न्ध म्भ इत्येतौ चकारात् ज्झश्च भवति ॥ रुन्धइ । रुम्भइ । रुज्झइ ॥

सद-पतोर्डः ॥ २१९ ॥

अनयोरन्त्यस्य डो भवति । सडइ । पडइ ॥

क्वथ-वर्धां ढः ॥ २२० ॥

अनयोरन्त्यस्य ढो भवति ॥ कढइ । वड्ढइ पवय-कलयलो ॥ परि-अड्ढइ लायण्णं ॥ बहुवचनाद् वृधेः कृतगुणस्य वर्धेश्चाविशेषेण ग्रहणम् ॥

वेष्टः ॥ २२१ ॥

वेष्ट वेष्टने इत्यस्य धातोः कगटड° इत्यादिना [ २. ७७ ] षलोपेन्त्यस्य ढो भवति ॥ वेढइ । वेढिज्जइ ॥

समो ल्लः ॥ २२२ ॥

संपूर्वस्य वेष्टतेरन्त्यस्य द्विरुक्तो लो भवति ॥ संवेल्लइ ॥

वोदः ॥ २२३ ॥

उदः परस्य वेष्टतेरन्त्यस्य ल्लो वा भवति ॥ उव्वेल्लइ उव्वेढइ ॥

---

[1] A °मंतस्य. [2] P भवन्ति. [3] A °रतस्य. [4] A वेष्ठः; B वेटेः. [5] A विष्टि. [6] B वेटेर°.

दहेरहिऊलालुङ्कौ[1] ॥ २०८ ॥

दहेरेतावादेशौ वा भवतः ॥ अहिऊलइ । आलुङ्कइ । डहइ ॥

ग्रहो वल-गेण्ह-हर-पङ्ग-निरुवाराहिपच्चुआः ॥ २०९ ॥

ग्रहेरेते षडादेशा भवन्ति ॥ वलइ । गेण्हइ । हरइ । पङ्गइ । निरुवारइ । अहिपच्चुअइ ॥

क्त्वा तुम् तव्येषु घेत् ॥ २१० ॥

ग्रहेः[2] क्त्वातुम्तव्येषु घेत् इत्यादेशो भवति ॥ क्त्वा । घेत्तूण । घेत्तुआण[3] ॥ क्वचिन्न भवति । गेण्हिअ ॥ तुम् । घेत्तुं ॥ तव्य । घेत्तव्वं ॥

वचो वोत् ॥ २११ ॥

वचेर्वोत्[4] इत्यादेशो भवति क्त्वातुम्तव्येषु ॥ वोत्तूण । वोत्तु । वोत्तव्वं ॥

रुद-भुज-मुचां तोऽन्त्यस्य[5] ॥ २१२ ॥

एषामन्त्यस्य क्त्वातुम्तव्येषु[6] तो भवति ॥ रोत्तूण । रोत्तु । रोत्तव्वं ॥ भोत्तूण । भोत्तु । भोत्तव्वं ॥ मोत्तूण । मोत्तु । मोत्तव्वं ॥

दृशस्तेन ट्ठः ॥ २१३ ॥

दृशोन्त्यस्य तकारेण सह द्विरुक्तठकारो भवति ॥ दट्ठूण । दट्ठु । दट्ठव्वं ॥

आ कृगो भूत-भविष्यतोश्च ॥ २१४ ॥

कृगोन्त्यस्य आ इत्यादेशो भवति भूतभविष्यत्कालयोश्चकारात् क्त्वातुम्तव्येषु च ॥ काहीअ । अकार्षीत् । अकरोत् । चकार वा ॥ काहिइ । करिष्यति । कर्ता वा ॥ क्त्वा । काऊण ॥ तुम् । काउं ॥ तव्य । कायव्वं ॥

---

[1] B °ङ्कः [2] B ग्रहे [3] AB घेत्तूआण. [4] A °र्वोदादे° [5] P रुद°. [6] B त्तं°. [7] B °षु परत. तो. [8] A ट. [9] A °ष्यतेश्च.

गमिष्यमासां छः ॥ २१५ ॥

एषामन्त्यस्य छो भवति ॥ गच्छइ । इच्छइ । जच्छइ । अच्छइ ॥

छिदि-भिदो न्दः ॥ २१६ ॥

अनयोरन्त्यस्य नकाराक्रान्तो दकारो भवति ॥ छिन्दइ । भिन्दइ ॥

युध-बुध-गृध-क्रुध-सिध-मुहां ज्झः ॥ २१७ ॥

एषामन्त्यस्य द्विरुक्तो झो भवति ॥ जुज्झइ । बुज्झइ । गिज्झइ । कुज्झइ । सिज्झइ । मुज्झइ ॥

रुधो न्ध-म्भौ च ॥ २१८ ॥

रुधोन्त्यस्य न्ध म्भ इत्येतौ चकारात् ज्झश्च भवति ॥ रुन्धइ । रुम्भइ । रुज्झइ ॥

सद-पतोर्डः ॥ २१९ ॥

अनयोरन्त्यस्य[1] डो भवति । सडइ । पडइ ॥

क्वथ-वर्धां ढः ॥ २२० ॥

अनयोरन्त्यस्य[3] ढो भवति ॥ कढइ । वड्ढइ पवय-कलयलो ॥ परिअड्ढइ लायण्णं ॥ बहुवचनाद् वृधेः कृतगुणस्य वर्धश्चाविशेषेण ग्रहणम् ॥

वेष्टः[4] ॥ २२१ ॥

वेष्ट वेष्टने इत्यस्य धातोः कगटड॰ इत्यादिना [ २. ७७ ] षलोपेन्त्यस्य ढो भवति ॥ वेढइ । वेढिज्जइ ॥

समो ल्लः ॥ २२२ ॥

संपूर्वस्य वेष्टतेरन्त्यस्य द्विरुक्तो लो भवति ॥ संवेल्लइ ॥

वोदः ॥ २२३ ॥

उदः परस्य वेष्टतेरन्त्यस्य ल्लो वा भवति ॥ उव्वेल्लइ उव्वेढइ ॥

---

१ A °अंतस्य. २ P भवन्ति. ३ A °स्तस्य. ४ A वेष्टः; B वेटेः. ५ A विष्टि. ६ B वेष्टेर°.

स्विदां ज्जः ॥ २२४ ॥

स्विदिप्रकाराणामन्त्यस्य द्विरुक्तो जो भवति ॥ सव्वङ्ग-सिज्जिरीए। संपज्जइ । खिज्जइ ॥ बहुवचनं प्रयोगानुसरणार्थम् ॥

व्रज-नृत-मदां च्चः ॥ २२५ ॥

एषामन्त्यस्य द्विरुक्तश्चो भवति ॥ वच्चइ । नच्चइ । मच्चइ ॥

रुद-नमोर्वः ॥ २२६ ॥

अनयोरन्त्यस्य वो भवति ॥ रुवइ । रोवइ । नवइ ॥

उद्विजः ॥ २२७ ॥

उद्विजतेरन्त्यस्य वो भवति ॥ उव्विवइ । उव्वेवो ॥

खाद-धावोर्लुक् ॥ २२८ ॥

अनयोरन्त्यस्य लुग् भवति ॥ खाइ खाअइ । खाहिइ । खाउ । धाइ । धाहिइ । धाउ ॥ बहुलाधिकाराद्वर्तमानाभविष्यद्विध्याद्येकवचन एव भवति । तेनेह न भवति । खादन्ति । धावन्ति ॥ क्वचिन्न भवति । धावइ पुरओ ॥

सृजो रः ॥ २२९ ॥

सृजो धातोरन्त्यस्य रो भवति ॥ निसिरइ । वोसिरइ । वोसिरामि ॥

शकादीनां द्वित्वम् ॥ २३० ॥

शकादीनामन्त्यस्य द्वित्वं भवति ॥ शक् । सक्कइ ॥ जिम् । जिम्मइ ॥ लग् । लग्गइ ॥ मग् । मग्गइ ॥ कुप् । कुप्पइ ॥ नश् । नस्सइ ॥ अट् । परिअट्टइ ॥ लुट् । पलोट्टइ ॥ तुट् । तुट्टइ ॥ नट् । नट्टइ ॥ सिव् । सिव्वइ । इत्यादि ॥

---

१ A °मेनस्य २ A °रतस्य. ३ P णवइ. ४ B खाओ ५ B °इ । धाअइ । धाहि°. ६ B धाओ ७ AB सिव् । सिवइ

**स्फुटि-चलेः ॥ २३१ ॥**

अनयोरन्त्यस्य द्वित्वं वा भवति ॥ फुट्टइ फुडइ । चल्लइ चलइ ॥

**प्रादेर्मीलेः[1] ॥ २३२ ॥**

प्रादेः परस्य मीलेरन्त्यस्य द्वित्वं वा भवति ॥ पमिल्लइ पमीलइ । निमिल्लइ निमीलइ । संमिल्लइ संमीलइ । उम्मिल्लइ उम्मीलइ[2] ॥ प्रादेरिति किम् । मीलइ ॥

**उवर्णस्यावः ॥ २३३ ॥**

धातोरन्त्यस्योवर्णस्य अवादेशो[3] भवति ॥ न्हुङ् । निण्हवई[4] ॥ हु । निहवइ ॥ च्युङ् । चवइ ॥ रु । रवइ ॥ कु । कवइ ॥ सू । सवइ । पसवइ ॥

**ऋवर्णस्यारः ॥ २३४ ॥**

धातोरन्त्यैस्य[5] ऋवर्णस्य अरादेशो भवति ॥ करइ । धरइ । मरई[6] । वरइ । सरइ । हरइ । तरइ । जरइ ॥

**वृषादीनामरिः ॥ २३५ ॥**

वृष इत्येवंप्रकाराणां धातूनाम् ऋवर्णस्य अरि इत्यादेशो भवति ॥ वृष् । वरिसइ ॥ कृष् । करिसई[7] ॥ मृष् । मरिसइ ॥ हृष् । हरिसइ ॥ येषामरिरादेशो दृश्यते ते वृषादयः ॥

**रुषादीनां दीर्घः ॥ २३६ ॥**

रुष इत्येवंप्रकाराणां धातूनां स्वरस्य दीर्घो भवति ॥ रूसइ । तूसइ । सूसइ । दूसइ । पूसइ । सीसइ । इत्यादि ॥

**युवर्णस्य गुणः ॥ २३७ ॥**

धातोरिवर्णस्य च क्डित्यपि गुणो भवति ॥ जेऊण । नेऊण ।

---

१ A °मील. २ A उमील्इ ३ B °शो वा भ°. ४ PB °इ । नि°
५ A °रतस्य. ६ A °इ । स°. ७ B °इ । दृष् । दरिसइ । मृ°.

नेइ । नेन्ति । उड्डेइ । उड्डेन्ति । मोत्तूण । सोऊण ॥ क्वचिन्न भवति । नीओ । उड्डीणो ॥

### स्वराणां स्वराः ॥ २३८ ॥

धातुषु स्वराणा स्थाने स्वरा बहुलं भवन्ति ॥ हवइ । हिवइ ॥ चिणइ । चुणइ ॥ सद्दहण । सद्दहाणं ॥ धावइ । धुवइ ॥ रुवइ । रोवइ ॥ क्वचिन्नित्यम् । देइ । लेइ । विहेइ । नासइ ॥ आर्षे । वेमि ॥

### व्यञ्जनाददन्ते ॥ २३९ ॥

व्यञ्जनान्ताद्धातोरन्ते अकारो भवति ॥ भमई । हसइ । कुणइ । चुम्बइ । भणइ । उवसमइ । पावइ । सिञ्चइ । रुन्धइ । मुसइ । हरइ । करइ ॥ शर्वादीना च प्राय प्रयोगो नास्ति ॥

### स्वरादनतो वा ॥ २४० ॥

अकारान्तवर्जितात्स्वरान्ताद्धातोरन्ते अकारागमो वा भवति ॥ पाइ पाअइ । धाइ धाअइ । जाइ जाअइ । झाइ झाअइ । जम्भाइ जम्भाअइ । उव्वाइ उव्वाअइ । मिलाइ मिलाअइ । विक्केइ विक्केअइ । होऊण होइऊण ॥ अनत इति किम् । चिइच्छइ । दुगुच्छइ ॥

### चि-जि श्रु-हु-स्तु-लू-पू-धूगां णो ह्रस्वश्च ॥ २४१ ॥

च्यादीना धातूनामन्ते णकारागमो भवति एषा स्वरस्य च ह्रस्वो भवति ॥ चि । चिणइ ॥ जि । जिणइ ॥ श्रु । सुणइ ॥ हु । हुणइ ॥ स्तु । थुणइ ॥ लू । लुणइ ॥ पू । पुणइ ॥ धूग् । धुणइ ॥ बहुलाधिकारात्क्वचिद्विकल्प । उच्चिणइ । उच्चेइ ॥ जेऊण । जिणिऊण ॥ जयइ । जिणइ ॥ सोऊण । सुणिऊण ॥

### न वा कर्म-भावे व्वः क्यस्य च लुक् ॥ २४२ ॥

च्यादीनां कर्मणि भावे च वर्तमानानामन्ते द्विरुक्तो वकारागमो

---

१ A °इ । चुम्मइ । मु°. २ B धारा°. ३ AP होअऊण. ४ B °गु°. ५ PB च दीर्घस्य ह°. ६ B द्रु. ७ B °वे वर्त°.

वा भवति तत्संनियोगे च क्यस्य लुक् ॥ चिव्वइ चिणिज्जइ । जिव्वइ जिणिज्जइ । सुव्वइ सुणिज्जइ । हुव्वइ हुणिज्जइ । थुव्वइ थुणिज्जइ । लुव्वइ लुणिज्जइ । पुव्वइ पुणिज्जइ । धुव्वइ धुणिज्जइ ॥ एवं भविष्यति । चिव्विहिइ । इत्यादि ॥

म्मश्चेः ॥ २४३ ॥

चिग. कर्मणि भावे च अन्ते संयुक्तो मो वा भवति तत्संनियोगे क्यस्य च लुक् ॥ चिम्मइ । चिव्वइ । चिणिज्जइ ॥ भविष्यति । चिम्मिहिइ । चिव्हिविइ । चिणिहिइ ॥

हन्खनोन्त्यस्य ॥ २४४ ॥

अनयो कर्मभावेन्त्यस्य द्विरुक्तो मो वा भवति तत्संनियोगे क्यस्य च लुक् ॥ हम्मइ हणिज्जइ । खम्मइ खणिज्जइ । भविष्यति । हम्मिहिइ हणिहिइ । खम्मिहिइ खणिहिइ ॥ बहुलाधिकाराद्धन्ते कर्तर्यपि ॥ हम्मइ । हन्तीत्यर्थः ॥ क्वचिन्न भवति ॥ हन्तव्वं । हन्तूण । हओ ॥

ब्भो दुह-लिह-वह-रुधामुच्चातः ॥ २४५ ॥

दुहादीनामन्त्यस्य कर्मभावे द्विरुक्तो भो वा भवति तत्संनियोगे क्यस्य च लुक् वहेरकारस्य च उकार ॥ दुब्भइ दुहिज्जइ । लिब्भइ लिहिज्जइ । वुब्भइ वहिज्जइ । रुब्भइ रुन्धिज्जइ । भविष्यति । दुब्भिहिइ दुहिहिइ । इत्यादि ॥

दहो ज्झः ॥ २४६ ॥

दहोन्त्यस्य कर्मभावे द्विरुक्तो झो वा भवति[11] तत्संनियोगे क्यस्य च लुक् ॥ डज्झइ । डहिज्जइ । भविष्यति । डज्झिहिइ । डहिहिइ ॥ [12]

---

१ B °गे च क्यस्य लुक्. २ A °न्तेत्स्य ३ A हने. खनुग कर्मणि भावे चांते संयुक्तो मो वा भ°. ४ B हतूण. ५ A °मन्त्य ६ B ब्भ ७ B दब्भइ. ८ A °न्तस्य ९ B ज्झो. १० B °तित्य°. ११ PB दहि°. १२ A डज्झहिइ

### वन्धो न्धः ॥ २४७ ॥

वन्धेर्धातोरन्त्यस्य न्ध इत्यवयवस्य कर्मभावे ज्झो वा भवति तत्संनियोगे क्यस्य च लुक् ॥ बज्झइ । बन्धिज्जइ ॥ भविष्यति । बज्झिहिइ । वन्धिहिइ ॥

### समनूपाद्रुधेः ॥ २४८ ॥

समनूपेभ्य. परस्य रुधेर्रन्त्यस्य कर्मभावे ज्झो वा भवति तत्संनियोगे क्यस्य च लुक् ॥ संरुज्झइ । अणुरुज्झइ । उवरुज्झइ । पक्षे । सरुन्धिज्जइ । अणुरुन्धिज्जइ । उवरुन्धिज्जइ ॥ भविष्यति । संरुज्झिहिइ । संरुन्धिहिइ । इत्यादि ॥

### गमादीनां द्वित्वम् ॥ २४९ ॥

गमादीनामन्त्यस्य कर्मभावे द्वित्वं वा भवति तत्संनियोगे क्यस्य च लुक् ॥ गम् । गम्मइ । गमिज्जइ ॥ हस् । हस्सइ । हसिज्जइ ॥ भण् । भण्णई । भणिज्जइ । छुप् । छुप्पइ । छुविज्जइ॥ रुद-नमोर्वः [४.२२६] इति कृतवकारादेशो रुदिरत्र पठ्यते । रुव् । रुव्वइ । रुविज्जइ ॥ लभ् । लब्भइ । लहिज्जइ ॥ कथ् । कत्थइ । कहिज्जइ । भुज् । भुज्जइ ॥ भुञ्जिज्जइ ॥ भविष्यति । गम्मिहिइ । गमिहिइ । इत्यादि ॥

### हृ-कृ-तृ-ज्रामीरः ॥ २५० ॥

एषामन्त्यस्य ईर इत्यादेशो वा भवति तत्संनियोगे च क्यलुक् ॥ हीरइ हरिज्जइ । कीरइ करिज्जइ । तीरइ तरिज्जइ । जीरइ जरिज्जइ ॥

### अर्जेर्विढप्पः ॥ २५१ ॥

अन्त्यस्येति निवृत्तम् । अर्जेर्विढप्प इत्यादेशो वा भवति तत्संनियोगे क्यस्य च लुक् ॥ विढप्पइ । पक्षे । विढविज्जइ । अज्जिज्जइ ॥

---

१ A °रतस्य. २ B °त्यस्याव°. ३ B बज्झेहिइ ४ B रुधेः क°. ५ A °मंतस्य. ६ P भग्गए । भणिअए. ७ A °दिसत्र प°. B °दिरत्रोच्यते. ८ B रुव्विअइ ९ B °कृ° १० P गे क्यलुक् च, B °गे क्यस्य च लुक्.

### ज्ञो णव्व-णज्जौ ॥ २५२ ॥

जानातेः कर्मभावे णव्व णज्ज इत्यादेशौ वा भवतः तत्संनियोगे क्यस्य च लुक् ॥ णव्वइ णज्जइ । पक्षे । जाणिज्जइ । मुणिज्जइ ॥ म्न-ज्ञोर्णः [ २.४२ ] इति णादेशे तु । णाइज्जइ ॥ नञ्पूर्वकस्य । अणाइज्जइ ॥

### व्याहृगेर्वाहिप्पः ॥ २५३ ॥

व्याहरतेः कर्मभावे वाहिप्प इत्यादेशो वा भवति तत्संनियोगे क्यस्य च लुक् ॥ वाहिप्पइ । वाहरिज्जइ ॥

### आरभेराढप्पः ॥ २५४ ॥

आङ्पूर्वस्य[1] रभेः कर्मभावे आढप्प इत्यादेशो वा भवति क्यस्य च लुक् ॥ आढप्पइ । पक्षे । आढवीअइ ॥

### स्निह-सिचोः सिप्पः ॥ २५५ ॥

अनयोः कर्मभावे सिप्प इत्यादेशो भवति क्यस्य[2] च लुक् ॥ सिप्पइ । स्निह्यते । सिच्यते वा ॥

### ग्रहेर्घेप्पः ॥ २५६ ॥

ग्रहेः[3] कर्मभावे घेप्प इत्यादेशो वा भवति क्यस्य च लुक् ॥ घेप्पइ । गिण्हिज्जइ[5] ॥

### स्पृशेश्छिप्पः ॥ २५७ ॥

स्पृशतेः कर्मभावे छिप्पादेशो वा भवति क्यलुक् च ॥ छिप्पइ । छिविज्जइ ॥

---

१ A °पूर्वस्य. २ PB क्यलुक् च ।. ३ B ग्रेहे°. ४ A °शो वा भ°. ५ B गेण्हि°.

## क्तेनाप्फुण्णादयः ॥ २५८ ॥[1]

अप्फुण्णादय शब्दा आक्रमिप्रभृतीनां धातूनां स्थाने क्तेन सह[2] वा निपात्यन्ते ॥ अप्फुण्णो[3] । आक्रान्तः ॥ उक्कोसं । उत्कृष्टम् ॥ फुडं । स्पष्टम् ॥ वोलीणो । अतिक्रान्तः ॥ वोसट्टो[4] । विकसितः ॥ निसुट्टो[5] । निपातित ॥ लुग्गो । रुग्णः ॥ ल्हिक्को । नष्टः ॥ पम्हुट्ठो । प्रमृष्टः प्रमुषितो वा ॥ विढत्तं[6] । अर्जितम् ॥ छित्तं । स्पृष्टम् ॥ निमिअं । स्थापितम् ॥ चक्खिअं । आस्वादितम् ॥ लुअं[7] । लूनम् ॥ जढं । त्यक्तम् ॥ झोसिअं[8] । क्षिप्तम् ॥ निच्छूढं । उद्वृत्तम्[9] ॥ पल्हत्थं पलोट्टं[10] च । पर्यस्तम् ॥ हीसमणं । हेषितम् । इत्यादि ॥

## धातवोर्थान्तरेपि ॥ २५९ ॥

उक्तादर्थादर्थान्तरेपि धातवो वर्तन्ते ॥ बलिः प्राणने पठितः खादनेपि वर्तते । बलइ । खादति प्राणनं करोति वा ॥ एवं कलि संख्याने संज्ञानेपि । कलइ । जानाति संख्यानं करोति वा ॥ रिगिर्गतौ प्रवेशेपि ॥ रिगइ[11] । प्रविशति गच्छति वा ॥ काङ्क्षतेर्वम्फ आदेशः प्राकृते । वम्फइ । अस्यार्थः । इच्छति[12] खादति वा ॥ फक्कतेस्थक्क आदेशः । थक्कइ । नीचां गतिं करोति विलम्बयति[13] वा ॥ विलप्युपालम्भ्योर्झङ्ख[14] आदेशः । झङ्खइ । विलपति उपालभते भाषते वा ॥ एवं पडिवालेइ[15] । प्रतीक्षते रक्षति वा ॥ केचित् कैश्चिदुपसर्गैर्नित्यम् । पहरइ । युध्यते ॥ संहरइ । संवृणोति ॥ अणुहरइ । सदृशीभवति ॥ नीहरइ । पुरीषोत्सर्गं करोति ॥ विहरइ । क्रीडति[16] ॥ आहरइ । खादति ॥ पडिहरइ । पुन पूरयति ॥ परिहरइ । त्यजति ॥ उवहरइ । पूजयति ॥ वाहरइ । आह्वयति ॥ पवसइ । देशान्तरं गच्छति ॥ उच्चुपइ । चटति ॥ उल्लुहइ । निःसरति ॥

---

१ A °नाऽफुण्णा°. २ B सह नि°. ३ A अपुण्णो. ४ B ° सट्टो. ५ B °सुट्टो. ६ A वेढत्त. ७ A लुअ. ८ A जसाविअं. ९ B उद्धृतं. १० B पलोट्टं. ११ P रिगइ, B रिंगइ. १२ B पृच्छति. १३ B विडंब°. १४ A °पालभे झंष° P °पालम्भ्यो°. १५ A °वइ. १६ PB ° वालइ. १७ A कीणाति. १८ P उच्चुप्पइ. १९ B °ति ॥ अथ चोरयेनी ॥ चो°.

## तो दोनादौ शौरसेन्यामयुक्तस्य ॥ २६० ॥

शौरसेन्यां भाषायामनादावपदादौ वर्तमानस्य तकारस्य दकारो भवति न चेदसौ वर्णान्तरेण संयुक्तो भवति ॥ तदो पूरिद-पदिञ्ञेण[1] मारुदिणा मन्तिदो ॥ एतस्मात्। एदाहि । एदाओ । अनादाविति किम् । तधा करेध जधा तस्स राइणो अणुकम्पणीआ[2] भोमि ॥ अयुक्तस्येति किम् । मत्तो । अय्यउत्तो । असंभाविद-सक्कारं । हला सउन्तले ॥

## अधः क्वचित् ॥ २६१ ॥

वर्णान्तरस्याधोवर्तमानस्य तस्य शौरसेन्यां दो भवति । क्वचिल्लक्ष्यानुसारेण ॥ महन्दो । निच्चिन्दो । अन्देउरं ॥

## वादेस्तावति[3] ॥ २६२ ॥

शौरसेन्यां तावच्छब्दे आदेस्तकारस्य दो वा भवति ॥ दाव । ताव ॥

## आ आमन्त्र्ये सौ वेनो नः ॥ २६३ ॥

शौरसेन्यामिनो नकारस्य आमन्त्र्ये[4] सौ परे आकारो वा भवति ॥ भो कञ्चुइआ । सुहिआ[5] । पक्षे । भो तवस्सि । भो मणस्सि ॥

## मो वा ॥ २६४ ॥

शौरसेन्यामामन्त्र्ये सौ परे नकारस्य मो वा भवति ॥ भो रायं । भो विअयवम्मं । सुकम्मं । भयवं[6] कुसुमाउह । भयवं तित्थं पवत्तेह । पक्षे । सयल-लोअ-अन्तेआरि भयवं[7] हुदवह ॥

## भवद्भगवतोः ॥ २६५ ॥

आमन्त्र्य इति निवृत्तम् । शौरसेन्यामनयोः सौ परे नस्य मो भवति ॥ किं एत्थभवं[8] हिदएन चिन्तेदि । एदु भवं । समणे भगवं महावीरे ॥

---

१ AB °ञ्ञेन मारुदिना म°. २ A अणुकउ°. ३ B °ति शौरसेन्यां ॥ ६२ ॥ दाव°. ४ A आमन्त्र्ये. ५ P भो सुहिआ. ६ A भयवं. ७ B भवं. ८ P भवं.

पज्जलिदो भयवं हुदासणो ॥ क्वचिदन्यत्रापि । मघवं पागसासणे । संपाइअवं सीसो । कयवं । करेमि काहं च ॥

न वा र्यो य्यः ॥ २६६ ॥

शौरसेन्या र्यस्य स्थाने य्यो वा भवति ॥ अय्यउत्त पैय्याकुलीकदम्हि । सुय्यो । पक्षे । अज्जो । पज्जाउलो । कज्ज-परवसो ॥

थो धः ॥ २६७ ॥

शौरसेन्या थस्य धो वा भवति ॥ कधेदि कहेदि । णाधो णाहो । कधं कहं । राजपधो राज-पहो ॥ अपदादावित्येव । थामं । थेओ ॥

इह-हचोर्हस्य ॥ २६८ ॥

इहशब्दसंबन्धिनो मध्यमस्येत्थाहचौ [ ३. १४३ ] इति विहितस्य हचश्च हकारस्य शौरसेन्यां धो वा भवति ॥ इध । होध । परित्तायध ॥ पक्षे । इह । होह । परित्तायह ॥

भुवो भः ॥ २६९ ॥

भवतेर्हकारस्य शौरसेन्यां भो वा भवति ॥ भोदि होदि । भुवदि हुवदि । भवदि हवदि ॥

पूर्वस्य पुरवः ॥ २७० ॥

शौरसेन्या पूर्वशब्दस्य पुरव इत्यादेशो वा भवति ॥ अपुरवं नाडयं । अपुरवागदं । पक्षे । अपुव्वं पदं । अपुव्वागदं ॥

क्त्व इय-दूणौ ॥ २७१ ॥

शौरसेन्यां क्त्वाप्रत्ययस्य इय दूण इत्यादेशौ वा भवतः ॥ भविय भोदूण । हविय होदूण । पढिय पढिदूण । रमिय रन्दूण । पक्षे भोत्ता । होत्ता । पढित्ता । रन्ता ॥

---

१ A °सो । संपादितवान् शिष्य । क°. २ A अय्या°. ३ B थोध. शौरसेन्यां ॥ ६७ ॥ थ°. ४ A °ति ॥ इह । इध. ५ A °रवयं ना°. ६ B °वादग°. ७ A °दं । अपुव्वागद. ८ PB °अ. ९ A °ण । मरिय । मरिदूण । र°.

क्-गमो डडुअः ॥ २७२ ॥

आभ्यां परस्य क्त्वाप्रत्ययस्य डित् [1]अडुअ इत्यादे[2]शो वा भवति ॥ [3]कडुअ । गडुअ । पक्षे । करिय । करिदूण । गच्छिय । गच्छिदूण ॥

दिरिचेचोः ॥ २७३ ॥

त्यादीनामाद्यत्रयस्याद्यस्येचेचौ [ ३. १३९ ] इति विहितयोरिचेचो स्थाने दिर्भवति ॥ वेति निवृत्तम् । नेदि । देदि । भोदि । होदि ॥

अतो देश्च ॥ २७४ ॥

अकारात्परयोरिचेचोः स्थाने दे[4]श्चकाराद् दिश्च भवति ॥ अच्छदे । अच्छदि[5] ॥ गच्छदे । गच्छदि । रमदे । रमदि ॥ किज्जदे । किज्जदि । अत इति किम् । वसुआदि । [6]नेदि । मोदि ॥

भविष्यति स्सिः ॥ २७५ ॥

शौरसेन्यां भविष्यदर्थे विहिते प्रत्यये परे स्सिर्भवति । हिस्साहामपवादः ॥ भविस्सिदि । करिस्सिदि । गच्छिस्सिदि ॥

अतो ङसेर्डादो-डादू ॥ २७६ ॥

[7]अतः परस्य ङसेः शौरसेन्यां आदो [8]आदु इत्यादेशौ डितौ भवतः ॥ दूरादो य्येव । दूरादु ॥

इदानीमो दाणिं ॥ २७७ ॥

शौरसेन्यामिदानीमः स्थाने दाणिं इत्यादेशो भवति ॥ अनन्तरकरणीयं दाणिं आणवेदु अय्यो ॥ व्यत्ययात्प्राकृतेपि । अन्नं दाणिं बोहिं ॥

तस्मात्ताः ॥ २७८ ॥

शौरसेन्यां तस्माच्छब्दस्य ता इत्यादेशो भवति ॥ ता जाव पविसामि । ता अलं एदिणा माणेणे[9] ॥

---

१ P °दुअ° २ P °शो म°. ३ P कदुअ । गदुअ. ४ A दे च°. ५ A °दि । रम°. ६ B नेदि. ७ B अकारात्प°. ८ AB आदू. ९ B मनेन.

## मोन्त्याण्णो नेदेतोः ॥ २७९ ॥

शौरसेन्यामन्त्यान्मकारात्पर इदेतो. परयोर्णकारागमो वा भवति ॥ इकारे । जुत्त णिम[3] जुत्तमिणं । सरिसं णिमं सरिसमिणं । एकारे । किं णेद किमेदं । एवं णेदं एवमेदं ॥

## एवार्थे य्येव ॥ २८० ॥

एवार्थे य्येव इति निपातं शौरसेन्या प्रयोक्तव्य ॥ मम य्येव बम्भणस्स । सो य्येव एसो ॥

## हञ्जे चेट्याह्वाने ॥ २८१ ॥

शौरसेन्या चेट्याह्वाने हञ्जे इति निपात प्रयोक्तव्यः ॥ हञ्जे चदुरिके ॥

## हीमाणहे विस्मय-निर्वेदे ॥ २८२ ॥

शौरसेन्या हीमाणहे इत्ययं निपातो विस्मये निर्वेदे च प्रयोक्तव्य ॥ विस्मये ॥ हीमाणहे जीवन्त-वच्छा मे जणणी ॥ निर्वेदे । हीमाणहे पलिस्सन्ता हगे एदेण निय-विधिणो दुंव्ववसिदेण ॥

## णं नन्वर्थे ॥ २८३ ॥

शौरसेन्या नन्वर्थे णमिति निपात प्रयोक्तव्य. ॥ णं अफलोदया । णं अय्यमिस्सेहिं पुढम य्येव आणत्तं । णं भवं मे अग्गदो चलदि । आर्षे वाक्यालंकारेपि दृश्यते । नमोत्थु णं । जया णं । तया णं ॥

## अम्महे हर्षे ॥ २८४ ॥

शौरसेन्याम् अम्महे इति निपातो हर्षे प्रयोक्तव्य. ॥ अम्महे एआए सुम्मिलाए सुपलिगढिदो भवं ॥

---

१ A °ति । जु°. २ B ज्जु° ३ A °म । सरिसमिण. ४ B °त प्र°. ५ B चदु°. ६ A °स्मयनि°. ७ PB दुव्ववि° ८ B आणंत

